# BIBLIOTHECA INDICA:

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, NO. 833.








# बृहद्धर्मपुराणम् ।

# BRIHAD-DHARMA-PURANAM

EDITED BY

PANDIT HARAPRASAD SASTRI.

FASCICULUS IV.

CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY. 57, PARK STREET.

1893.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

No. 57, PARK STREET, CALCUTTA,

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MESSRS. KEGAN PAUL, TRENCH, TRÜBNER & CO., LD.

PATERNOSTER HOUSE, CHARING CROSS ROAD, LONDON, W. C., AND

MR. OTTO HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

Advaita Brahma-Siddhi, (Text) Fasc. I—IV @ /6/ each
*Agni Purána, (Text) Fasc. II—XIV @ /
Aitareya Araṇyaka of the Rig Veda, (Text
Anu Bháshyam, (Text) Fasc. I—II ...
Aphorisms of Sáṇḍilya, (English) Fasc. I
Ashtasáhasriká Prajnapáramitá, (Text) Fa
Aśvavaidyaka, (Text) Fasc. I—V @ /6/ ea
Avadána Kalpalatá, (Sans. and Tibetan) V
I—II @ 1/ ..
*Bhámati, (Text) Fasc. II—VIII @ /6/ ea
Brahma Sútra, (English) Fasc. I ..
Brihaddevata (Text) Fasc. I—IV @ /6/ ea
*Brihadharma Purána, (Text) Fasc. I—II
Brihatáranyaka Upanishad (English) Fa
Chaitandya-Chandrodaya Náṭaka, (Text
Chaturvarga Chintamaṇi (Text) Vols.
1—18. Part II, Fasc. 1—9 @ /6/ each.
*Chhándogya Upanishad, (English) Fasc. II
Gopatha Bráhmana, (Text) Fasc. I—II ...
*Hindu Astronomy, (English) Fasc. II—III @ /6/ each
Kála Mádhaba, (Text) Fasc. I—IV @ /6/ each ... ..
Kátantra, (Text) Fasc. I—VI @ /12/ each ... ... ... 4
Katha Sarit Ságara, (English) Fasc. I—XIV @ /12/ each ... .. 10 8
Kúrma Purana, (Text) Fasc. I—IX @ /6/ each ... ... 3 6
*Lalita-Vistara, (Text) Fasc. III—VI @ /6/ each ... ... 1 8
Ditto (English) Fasc. I—III @ /12/ each ... ... 2 4
Madana Párijáta, (Text) Fasc. I—XI @ /6/ each ... ... 4 2
Maṇutiká Saṅgraha, (Text) Fasc. I—III @ /6/ each ... ... 1 2
*Márkaṇḍeya Purána, (Text) Fasc. IV—VII @ /6/ each ... ... 1 8
Márkaṇḍeya Purána, (English) Fasc. I—III @ /12/ each ... .. 2 4
*Mimáṃsá Darśana, (Text) Fasc. III—XIX @ /6/ each ... ... 6 6
Nárada Smṛiti, (Text) Fasc. I—III @ /6/ ... ... ... 1 2
Nyayavártika, (Text) Fasc. I ... ... ... ... 0 6
*Nirukta, (Text) Vol. I, Fasc. 4—6; Vol. II, Fasc. 1—6; Vol. III, Fasc. 1—6; Vol. IV, Fasc. 1—8 @ /6/ each .. 8 10
*Nitisára, or The Elements of Polity, By Kámandaki, (Sans.) Fasc. II—V @ /6/ each ... ... ... ... ... 1 8
Nyáyabindutiká, (Text) ... ... ... ... 0 10
Nyáya Kusumánjali Prakarana (Text) Vol. I, Fasc. 1—6; Vol. II, Fasc. 1—2 @ /6/ each ... ... ... 0
Pariśishta Parvan, (Text) Fasc. I—V @ /6/ each ... 1 14




# बृहद्धर्मपुराणम्।

ॐ नमो भगवते वासुदेवाय[1]।

## प्रथमोऽध्यायः।

ॐ भूर्भुवःस्वरिति तत्सवितुर्वरेण्यं
भर्गो निसर्गविमलं परमस्य विष्णोः।
देवस्य धीमहि धियोऽभिगतं वयं यो
धर्मान् ईहितमतीन् प्रचोदयाद्वः ॥१॥

पवित्रे नैमिषवने विमले साधुसेविते।
सुगन्धिमन्दशीतेन वायुना सुमनोहरे ॥२॥
नानाद्रुमलताकीर्णे नानापुष्पसमाकुले।
मयूरैः कोकिलैर्हंसैर्भ्रमरैरुपकूजिते ॥३॥
तथान्यैः पक्षिभिश्चैव गोमृगादिभिरेव च।
शान्तस्वभावैर्व्याघ्राद्यैरावृते नैमिषे वने ॥४॥

---

१ B reads श्रीहरिः। C reads ॐ नमः शिवाय। ॐ वेद-व्यासाय नमः।

दीर्घसत्त्रमुपासीनानृषीन् सावसरांस्ततः ।
यदृच्छया समायातः सूतो बदरिकाश्रमात् ॥५॥
तं दृष्ट्वा सूतमायातं मुनयः शौनकादयः ।
स्वागतासनपाद्यार्घ्यैर्मुदिताः समपूजयन् ।
तमूचुश्च महात्मानं सूतं पौराणिकोत्तमम् ॥६॥

ऋषय ऊचुः ।

कस्मादागमनं सूत तवेदं रोमहर्षणे ।
प्रफुल्लवदनाम्भोजो दृश्यसे ऽस्माभिरेव च ॥७॥
मन्ये व्याससमीपात्त्वं समागच्छसि सम्प्रति ।
वद तर्हि कथाः पुण्या व्यासेनोक्ता महामते ॥८॥
कः श्रोता तत्र किं वासौ प्रोक्तवान् शक्तिपुत्रजः ।
तत्त्वमाचक्ष्वानुपूर्व्या श्रुतवानसि चेत्तया ॥९॥

सूत उवाच ।

नमो वः सत्यमेवाहं प्राप्तो[1] बदरिकाश्रमात् ।
भवतां निकटं तत्र कथाः पुण्याः श्रुता अपि ॥१०॥
व्यासो जाबालिना पृष्टः कथा धर्मार्थसंहिताः ।
प्रत्यवोचच्छृण्वताञ्च मुनीनां मम च द्विजाः ॥११॥
प्रावर्त्तयत् तथा पुण्यं पुराणं धर्मसंज्ञितम् ।
सर्व्वे धर्माः श्रुतास्तत्र सेतिहासा उदाहृताः ॥१२॥
चतुराश्रमधर्माश्च सामान्येन विशेषतः ।
धर्मप्रशंसा सत्यादेर्भेदा धर्माङ्गरूपिणः ॥१३॥

---

१ B reads ०हं स्वागतो ।

गुरूणां कथनञ्चैव पितुर्मातुस्तथा स्तवः ।
तीर्थानि देशाः क्षेत्राणि देवपूजाः पृथग्विधाः ॥ १४ ॥
तिथीनामपि माहात्म्यं यत्र[1] कालविशेषजम् ।
पुराणोपपुराणादिकीर्त्तनं पुण्यकीर्त्तनम् ॥ १५ ॥
गवाञ्च ब्राह्मणानाञ्च माहात्म्यं बहुशः श्रुतम् ।
शुकजैमिनिसंवादः सृष्ट्यादिप्रक्रियाविधिः ॥ १६ ॥
ब्रह्मविष्णुमहेशानां कथाः पुण्याः महोदयाः ।
ज्योतिषां वर्णनञ्चैव कथितं तन्मया श्रुतम् ।
गङ्गायाः सत्प्रसङ्गश्च श्रुतः प्रथमतः परम् ॥ १७ ॥
सर्व्वेषां खलु धर्माणां कारणं पावनं परम् ।
रामायणञ्च संक्षेपात् कथितं तन्मया श्रुतम् ॥ १८ ॥
मयि श्रोतरि हे विप्रास्तत्र तेन कृपालुना ।
न्यस्तं पुराणममलं वक्तायमिति सर्व्वतः ॥ १९ ॥

ऋषय ऊचुः ।

सूत सूत महाभाग वद नो वदतां वर ।
यदाह भगवान् व्यासो जाबालिं प्रति तत्र वै ॥ २० ॥
वयं शुश्रूषवस्तत्र सत्रे परन्तके स्थिताः ।
केन त्ववसरः कालो यापनीयो वृथा नहि ।
भवेत्त इति सञ्चिन्त्य स्थितानां त्वमिहागतः ॥ २१ ॥
तद्ब्रूहि सूत हे तात पुराणं धर्मनामकम् ।
पुराणज्ञोऽसि धीरोऽसि वक्तासि मतिमानसि ॥ २२ ॥

---

1 B reads तत्र and C reads यत्र ।

सूत उवाच ।

नमस्तस्मै मुनीशाय तपोनिष्ठाय धीमते ।
वीतरागाय कवये व्यासायामिततेजसे ॥२३॥
तं नमामि महेशानं मुनिं धर्मविदां वरम् ।
श्यामं जटाकलापेन शोभमानं शुभाननम् ॥२४॥
मुनीन् सूर्य्यप्रभान् धर्मं पाठयन्तं सुवर्च्चसम् ।
नानापुराणकर्त्तारं वेदव्यासं महाप्रभम् ॥२५॥
तं नमस्कृत्य धर्मज्ञं ब्राह्मणाश्च सुशीलिनः ।
शृणुध्वं मुनयः सर्व्वे धर्मान् वक्ष्ये सनातनान् ॥२६॥
जाबालिर्नाम विप्रर्षिः काश्यपेयो महामुनिः ।
शिष्योपशिष्य[1]मुनिभिः प्राप्तो बदरिकाश्रमम् ॥२७॥
तत्र दृष्ट्वा महात्मानं व्यासं नत्वा पुनः पुनः ।
कृताञ्जलिपुटो भूत्वा सर्व्वैश्च मम शृण्वतः ॥२८॥
पप्रच्छ विनयी तेन व्यासेनापि सभाजितः ॥२९॥

जाबालिरुवाच ।

महर्षे के कलौ धर्माः किमाचाराश्च कीदृशाः ।
वर्णानामाश्रमाणाञ्च किं कृत्वा मुच्यते भयात् ॥३०॥
वक्ता ज्ञाता भवानेव कर्त्ता चासि प्रवर्त्तकः ।
पृच्छामि त्वां महावाहो वद मे शृण्वतः प्रभो ॥३१॥

---

१ C reads शिष्योपशिष्यैः ।




व्यास उवाच।

धर्मे मतिर्भवतु वः सततोत्थितानां
सह्येक एव परलोकगतस्य बन्धुः।
अर्थाः स्त्रियश्च निपुणैरपि सेव्यमाना
नैवाप्तभावमुपयान्ति न च स्थिरत्वम् ॥२१॥

धर्मः सनातनः सर्व्वैः सेवनीयः सदा मुने।
धर्म एव परो बन्धुः पिता माता पितामहः ॥२२॥
धर्मो गुरुः सत्य एको धर्म एव परा गतिः।
धर्म आत्मा क्रिया धर्मस्तीर्थानि धर्म एव हि[१] ॥२४॥
धर्मो धनं सर्व्वदेवो धर्म एव न संशयः।
धर्मः सम्पद् विपद् धर्मराहित्यं व्यर्थजीवनम् ॥२५॥
सदसत्कर्मणां द्रष्टा धर्म एव सनातनः।
धर्मे मतिः परो लाभस्तस्य ह्यपचयोऽन्यथा ॥२६॥
सा चातुरी चातुरी या धर्मरक्षाकरी भवेत्।
सहस्रोपद्रवैर्युक्तो यो न धर्मं जहाति हि।
स धीर उच्यते सद्भि र्धर्मत्वात्महा मतः ॥२७॥
धर्मार्थे क्रियते भार्य्या धर्मार्थे क्रियते सुतः[१]।
धर्मार्थे क्रियते गेहं धर्मार्थे क्रियते धनम्।
धर्मार्थे क्रियते देहो धर्मार्थे सुस्थिरा मही ॥२८॥
धर्मार्थे वर्षतीन्द्रोऽपि धर्मार्थे तपते रविः।

---

१ B omits this line.

धर्मार्थे वहते वायु धर्मार्थे ऽग्निर्ज्वलत्यसौ ॥ ३९ ॥
धर्मार्थानि पुराणानि धार्मिकः पूज्यतेऽमरैः ॥ ४० ॥
अधार्मिकमुखं दृष्ट्वा पश्येत् सूर्य्यं सदा नरः ॥ ४१ ॥
धार्मिको यत्र तत्तीर्थं स देशो निरुपद्रवः ।
माधर्मे रमतां बुद्धि र्यतो धर्मस्ततो जयः ॥ ४२ ॥
धर्मस्तु चतुष्पात् सम्पूर्णो वृषरूपधरस्त्वरन् ।
पाति लोकानिमान् मूर्त्तस्तस्मै धर्माय वै नमः ॥ ४३ ॥
सत्यं दया तथा शान्तिरहिंसा चेति कीर्त्तिताः ।
धर्मस्यावयवास्तात चत्वारः पूर्णतां गताः ॥ ४४ ॥
सर्व्वप्रभेदैः सम्पूर्णा एते सत्ययुगे मताः ।
एतेषां ह्रसते पादस्त्रेतायां द्वापरे पुनः ॥ ४५ ॥
द्वौ पादौ पाद एकश्च कलौ सोऽन्ते विनङ्क्ष्यति ।
तस्माद्धर्मे मतिः कार्य्या सुरासुरनरादिभिः ॥ ४६ ॥
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ।
यथा स्वल्पमधर्मं हि जनयेत्तु महाभयम् ॥ ४७ ॥
एतत्पुरा ब्रह्मलोके ब्रह्मा लोकपितामहः ।
पृष्टः सनत्कुमाराय प्रोक्तवान् हितकृन्नृणाम् ॥ ४८ ॥
तेनाहमुपदिष्टोऽस्मि[१] तवावोचं विशेषतः ।
श्रोतुमिच्छसि जावाले किमन्यद्धार्मिकोत्तम ॥ ४९ ॥

इति बृहद्धर्मपुराणे व्यासजाबालिसंवादे प्रथमोऽध्यायः ॥

---

१ A. and B read अपि ।

# द्वितीयोऽध्यायः ।

सूत उवाच ।

एवं श्रुत्वा स जाबालिः प्राह व्यासं मुनीश्वरम् ।
सत्यादेर्वद मे भेदान् धर्मावयवरूपिणः ॥ १ ॥

व्यास उवाच ।

अमिथ्यावचनं सत्यं स्वीकारप्रतिपालनम् ।
प्रियवाक्यं गुरोः सेवा दृढ़ञ्चैव व्रतं स्मृतम् ॥ २ ॥
आस्तिक्यं साधुसङ्गश्च पितुर्मातुः प्रियङ्करः ।
शुचित्वं त्रिविधञ्चैव ह्रीरसञ्चय एव च ॥ ३ ॥
एवं द्वादशधा सत्यं दयां मे वदतः शृणु ।
परोपकारो दानञ्च सर्व्वदा स्मितभाषणम् ॥ ४ ॥
विनयो न्यूनताभावस्वीकारः समतामतिः ।
षड्विधेयं दया प्रोक्ता शृणु शान्तिमथ मुने ॥ ५ ॥
अनसूयाल्पसन्तोष इन्द्रियाणाञ्च संयमः ।
असङ्गमो मौनमेवं देवपूजाविधौ मतिः ॥ ६ ॥
अकुतश्चिद्भयत्वञ्च गाम्भीर्य्यं स्थिरचित्तता ।
अरुक्षभावः सर्व्वत्र निस्पृहत्वं दृढ़ा मतिः ॥ ७ ॥
विवर्ज्जनं ह्यकार्य्याणां समः पूजापमानयोः ।
श्लाघा परगुणेऽस्तेयं ब्रह्मचर्य्यं धृतिः क्षमा ॥ ८ ॥

आतिथ्यञ्च जपो होमस्तीर्थसेवार्य्यसेवनम्।
अमत्सरो बन्धमोचज्ञानं सज्ज्ञासभावना ॥९॥
सहिष्णुता सुदुःखेषु अकार्पण्यममूर्खता।
एवमादिगुणा विप्र शान्तित्वेन प्रकीर्त्तिताः ॥१०॥
अहिंसात्वासनजयः परपीड़ाविवर्ज्जनम्।
श्रद्धाचातिथिसेवा च शान्तरूपप्रदर्शनम् ॥११॥
आत्मीयता च सर्व्वत्र आत्मबुद्धिः परात्मसु।
इति नानाविधाः प्रोक्ता अहिंसेति महामुने ॥१२॥
जाबालिरुवाच।
गुरून् वद महाभाग वेदव्यास जगद्गुरो।
गुरूणां तारतम्यञ्च कस्मात् किं फलमुच्यते ॥१३॥
व्यास उवाच।
माता पिता गुरुः श्रेयान् ज्येष्ठभ्राता पितामहः।
श्वशुरो मातुलश्चैव तथा मातामहः स्मृतः ॥१४॥
पितु र्ज्येष्ठः कनिष्ठश्च भ्राता ज्येष्ठा निजस्वसा।
पितुःस्वसा जनन्याश्च स्वसा गुरुजनाः स्मृताः ॥१५॥
पत्न्यः पितामहादीनां तथैव गुरवः स्मृताः।
एतेषु हि पिता श्रेयान् गुरुरेव महागुरुः ॥१६॥
पिता धर्मः पिता स्वर्गः पिता हि परमं तपः।
पितरि प्रीतिमापन्ने प्रीयन्ते सर्व्वदेवताः ॥१७॥
पिता यस्य क्वचिद्रुष्टो न तस्य कस्यचिद्गतिः।
जपो दानं तपो होमः स्नानं तीर्थक्रियाविधिः।

वृथैव तस्य सर्व्वाणि कर्म्माण्यन्यानि कानिचित् ॥१८॥
करोति सर्व्वदेवेशं पितरं चानुतप्य यः ।
अनुतापः पितुस्तीव्रं विषं दहति यं सुतम् ।
जपादि विफलं तत्र दग्धचित्युप्तबीजवत् ॥१९॥
पित्रर्थे पुण्यकर्म्माणि कुर्य्यात् सर्व्वाणि सत्सुतः ।
तेनाननुमतोऽप्येवं कुर्व्वन्नेवावसीदति ॥२०॥
यत्नात्तु पितरं यस्तु कियत्पुण्यञ्च कारयेत् ।
स तत्पुण्यफलं कोटिगुणमाप्नोत्यसंशयम् ॥२१॥
शृणु वक्ष्ये पितुः स्तोत्रं विष्णवे ब्रह्मणोदितम् ।
नाभिपद्मोद्भवो येन तुष्टाव पितरं स तम् ॥२२॥

ब्रह्मोवाच ।

ॐ नमः पित्रे जन्मदात्रे सर्व्वदेवमयाय च ।
सुखदाय प्रसन्नाय सुप्रीताय महात्मने ॥२३॥
सर्व्वयज्ञस्वरूपाय स्वर्गाय परमेष्ठिने ।
सर्व्वतीर्थावलोकाय करुणासागराय च ॥२४॥
नमः सदाशुतोषाय शिवरूपाय ते नमः ।
सदापराधक्षमिणे सुखाय सुखदाय च ॥२५॥
दुर्लभं मानुषमिदं येन लब्धं मया वपुः ।
सम्भावनीयं धर्म्मार्थे तस्मै पित्रे नमोनमः ॥२६॥
तीर्थस्नान-तपोहोम-जपादि यस्य दर्शनम्[१] ।
महागुरोश्च गुरवे तस्मै पित्रे नमोनमः ॥२७॥

१ B omits verses 27 and 28.

यस्य प्रणामस्तवनात् कोटिशः पितृतर्पणम् ।
अश्वमेधशतैस्तुल्यं तस्मै पित्रे नमोनमः ॥२८॥
इदं स्तोत्रं पितुः पुण्यं यः पठेत् प्रयतो नरः ।
प्रत्यहं प्रातरुत्थाय पितृश्राद्धदिनेऽपि च ॥२९॥
स्वजन्मदिवसे साक्षात् पितुरग्रे स्थितोऽपि वा ।
न तस्य दुर्लभं किञ्चित् सर्व्वज्ञतादिवाञ्छितम् ॥३०॥
नानापकर्म्म कृत्वापि यः स्तौति पितरं सुतः ।
स ध्रुवं प्रविधायैव प्रायश्चित्तं सुखी भवेत् ।
पितुः प्रीतिकरो नित्यं सर्वकर्म्माण्यथार्हति ॥३१॥३२॥

व्यास उवाच ।

पितुरप्यधिका माता गर्भधारणपोषणात् ।
अतो हि त्रिषु लोकेषु नास्ति मातृसमो गुरुः ॥३३॥
नास्ति गङ्गासमं तीर्थं नास्ति विष्णुसमः प्रभुः[१] ।
नास्ति शम्भुसमः पूज्यो नास्ति मातृसमो गुरुः ॥३४॥
नास्ति चैकादशीतुल्यं व्रतं त्रैलोक्यविश्रुतम् ।
तपो नानशनात् तुल्यं नास्ति मातृसमो गुरुः ॥३५॥
नास्ति भार्य्यासमं मित्रं नास्ति पुत्रसमः प्रियः ।
नास्ति भग्नीसमा मान्या नास्ति मातृसमो गुरुः ॥३६॥
न जामातृसमं पात्रं न दानं कन्यया समम् ।
न भ्रातृसदृशो बन्धुर्नच मातृसमो गुरुः ॥३७॥
देशो गङ्गान्तिकः श्रेष्ठो दलेषु तुलसीदलम् ।

---

१ B omits 34.

वर्णेषु ब्राह्मणः श्रेष्ठो गुरुर्माता गुरुष्वपि ॥३८॥
पुरुषः पुत्ररूपेण भार्य्यामाश्रित्य जायते।
पूर्वभावाश्रया माता तेन सैव गुरुः परः ॥३९॥
मातरं पितरञ्चोभौ दृष्ट्वा पुत्रस्तु धर्मवित्।
प्रणम्य मातरं पश्चात् प्रणमेत् पितरं गुरुम् ॥४०॥
माता धरित्री जननी दयार्द्रहृदया शिवा।
देवी त्रिभुवनश्रेष्ठा निर्दोषा सर्वदुःखहा ॥४१॥
आराधनीया परमा दया शान्तिः क्षमा धृतिः।
स्वाहा स्वधा च गौरी च पद्मा च विजया जया ॥४२॥
दुःखहन्त्रीति नामानि मातुरेवैकविंशतिम्।
शृणुयाच्छ्रावयेन्मर्त्त्यः सर्वदुःखाद् विमुच्यते ॥४३॥
दुःखैर्महद्भिर्दूनोऽपि दृष्ट्वा मातरमीश्वरीम्।
यमानन्दं लभेन्मर्त्त्यः स किं वाचोपपद्यते ॥४४॥
इति ते कथितं विप्र मातृस्तोत्रं महागुणम्।
पराशरमुखात् पूर्वमश्रौषं मातृसंस्तुतम् ॥४५॥
सेवित्वा पितरौ कश्चिद् व्याधः परमधर्मवित्।
लेभे सर्वज्ञतां या तु साध्यते न तपस्विभिः ॥४६॥
तस्मात् सर्वप्रयत्नेन भक्तिः कार्य्या तु मातरि।
पितर्य्यपीति चोक्तं वै पित्रा शक्तिसुतेन मे ॥४७॥

इति बृहद्धर्मपुराणे पितृमातृभक्तिः ॥

---

# तृतीयोऽध्यायः।

जाबालिरुवाच।

कोऽसौ व्याधो धर्मवेत्ता पित्रोः संसेवकः परः।
का वा सर्वज्ञता तस्य विश्रुतेति मुनीश्वर ॥१॥
वद मे शृण्वतो ब्रह्मन् श्रोतुं कौतूहलं मम।
गोपनीयं भवति चेत् तथापि वद मे प्रभो ॥२॥
प्रपन्नाय च भक्ताय शुश्रूषाभिरताय च।
अनापृष्टश्च गोप्यञ्च ब्रूयुः सानुग्रहाः प्रभो ॥३॥

व्यास उवाच।

अत्र तूदाहराम्येनमितिहासं पुरातनम्।
पिता पराशरोऽयं मे प्रोक्तवान् पुण्यकीर्त्तनम् ॥४॥

पराशर उवाच।

तपो-देव इति ख्यातो द्विजः कश्चिद् गृही कृती।
कृतबोधः सुतस्तस्य ब्राह्मणस्य सुतेजसः ॥५॥
स ब्राह्मणसुतस्तत्र तपस्यासक्तमानसः।
तप एव ब्राह्मणानां धनमित्येव निश्चयी[1] ॥६॥
नाभिनन्द्यैव पितरौ गन्तुमैच्छद्दृढाशयः।
तं गन्तुमनसं दृष्ट्वा पुत्रं विप्रस्तदावदत् ॥७॥

---

१ C reads निश्चयम्।

तपोदेव उवाच ।

किं तात यासि तपसे मयि वृद्धे गृहे स्थिते ।
त्वं तु स्वल्पवयाः प्रौढ़ा भार्य्यापि तव वेश्मनि ॥८॥
पुत्रान् जनय गार्हस्थ्यं कुरु पूजय देवताः ।
पितृन् यजातिथीन् सेव कृतविद्यास्च प्रोलय ॥९॥
इत्थं ममाज्ञया विप्र गृहधर्म्मान् महागुणान् ।
निरूपितांश्च मुनिभिश्चरितांश्च महात्मभिः ॥१०॥
चरित्वा प्राप्नुहि परं शतयज्ञफलं गृहे ।
पश्चात् सर्वं सुते न्यस्य तपोऽहमिव धास्यसि[1] ॥११॥
ममापि पूर्वपितरश्चक्रुरेवं हि सद्विदः[2] ।
मा यापय वृथा कालं पित्राज्ञातिक्रमादिभिः ॥१२॥

पराशर उवाच ।

एवमुक्तोऽपि बहुशः कृतवोधो महात्मना ।
अनादृत्य पितुर्वाक्यं जगाम तपसे मुनिः ॥१३॥
ततः स देवपीठेषु हविष्यान्नरतोऽतपत् ।
न स्थैर्य्यमाप्नवांस्तत्र भृशं भीतो विभीषया ॥१४॥
ततो जगाम यत्नेन गङ्गातटमनुत्तमम् ।
यत्र कोटिगुणं पुण्यं पापञ्च विततं भवेत् ॥१५॥
तत्र स्नानञ्च पूजाञ्च जपदानादिकं चरन् ।
दृढ़ीकृत्य मनस्तस्थौ नाभिनन्दति कोऽपि तम् ॥१६॥

---

१ B तपोधर्म्मं विधास्यति । C तपस्यामभिधास्यसि ।
२ B has सद्विज ।

तत्राप्युद्वेजितो लोके गङ्गानुचरङ्गपिभिः ।
सामुद्रं प्रययौ तीरं यत्र नास्ति नृणां गतिः ॥१७॥
तत्र तिष्ठंस्तपस्तेपे निश्चलाङ्गस्त्वभोजनः[१] ।
ययु र्द्वादशवर्षाणि पुत्र तस्य तपस्यतः ॥१८॥
सर्वे वनचराः पक्षिमृगा विश्वासमागताः ।
ततः काले तु कुत्रापि देहार्द्धं तस्य चावृणोत् ॥१९॥
वल्मीकपिण्डो विपुलस्तत्र गर्त्तेषु मूषिकाः ।
सर्पाद्याः विदधुर्वासं ययुस्ते जातपुत्रकाः ॥२०॥
वर्षासु जलवर्षेण वल्मीको गलितो गतः ।
ततस्य पक्षिणस्तस्य शीर्षे केशैः समाकुले ।
नीड़ं चक्रुस्तेऽपि जाता जनितैर्बकशावकैः ॥२१॥
तद्दृष्ट्वा स मुनिसुतः स्वं मेने सिद्धतापसम् ।
स तपोमत्सरो भूतः प्रचचार वने वने ॥२२॥
कदाचिज्जलधेस्तोये स्नातुं गच्छत एव हि ।
तस्य गात्रे वकः खेन गच्छन् विष्ठामथासृजत् ॥२३॥
तं तथाकारिणं विप्रः पक्षिणं क्रोधचक्षुषा ।
तथैव भस्मसाच्चक्रे वभूव वृद्धमत्सरः ॥२४॥
स्नात्वा सारस्वते तोये वासं गन्तुं मनोदधे ।
मध्याह्नकाले विप्रस्य कस्यचित्तु गृहं ययौ ॥२५॥
अतिथि र्भवितुं तस्य गृहस्थस्याश्रमे स्थितः ।

---

१ B has निश्चलाङ्गोऽप्यभोजनः ।

ददर्श ब्राह्मणं गेहे सेवमानं पितुः पदे।
स्वोरौ निधाय निद्रालो नैव किञ्चित् स चाब्रवीत् ॥२६॥
एवं वृत्ते मुहूर्त्तार्द्धे ऽतिथिर्ब्राह्मणमुक्तवान्।
प्रेक्षमाणश्च सक्रोधचक्षुषा भस्मकारिणा ॥२७॥

अतिथिरुवाच।

अहो ब्राह्मणदायाद चारित्रं किमिदं तव[1]।
अभ्यागतं ते तिष्ठन्तं प्राङ्गने मां न पश्यसि।
धर्मः किं ते गृहे नास्ति अतिथिर्येन सेव्यते ॥२८॥
अतिथि र्यस्य भवनान्निराशो याति सर्वथा।
सर्वपुण्यपरित्यक्तो भजेत्[2] पापानि स क्षणात् ॥२९॥
अतिथि धर्मरूपो हि गृहस्थानां गृहे गृहे।
जिज्ञाससमानो गार्हस्थ्यधर्मांस्तु निरपेक्षकः ॥३०॥
चरते नन्विदं नैव श्रुतं ते गृहिपुत्रक।
गृहं दृष्ट्वा गृहस्थानामागच्छत्यतिथिः खलु।
तत्र चेन्नार्चितस्तर्हि वनं तत् श्वपचालयः ॥३१॥
यथायोग्यं तु सेवेत वाचा मधुरया ततः।
नोचेत् पचेत नरके कृमे ब्राह्मणबालक ॥३२॥
चांण्डालं ब्राह्मणं वापि यो नार्चयति चातिथिम्।
आत्मसम्भावनो मूर्खः प्रत्युपकारचिन्तकः।
न मुखं तस्य पश्यन्ति नरके पतिता अपि ॥३३॥

---

१ C reads अहो ब्राह्मण दारिद्रं किमिदं तव चेष्टितम्।
२ B reads भुङ्क्ते।

त्वं तु मे वचनेनापि नातिथ्यं विहितं कियत् ।
यामि त्वामभिप्रार्थ्यैव पश्य मे ब्राह्मणं बलम् ॥२४॥

ब्राह्मण उवाच ।

अतिथे किं मयि भवान् क्षिपति क्रोधदर्शनम् ।
अतिथिर्द्धर्मरूपो वै यस्त्वं चरसि भूतले ॥२५॥
अतिथित्वं गृहित्वञ्च सम्बन्धोऽयमपेक्षितः ।
अन्यथा वनवृक्षस्य किं नाभूदतिथिर्भवान् ॥२६॥
अहं पित्रा पराधीनः पित्राज्ञानुचरः सदा ।
यत् करोमि धनोपायं तत् सर्वं पितुरेव मे ॥२७॥
भार्य्या पुत्रश्च भृत्यश्च न स्वतन्त्राः कदाचन ।
सदा स्वाम्यर्थकर्माणो यस्यैते तस्य तद्धनम् ॥२८॥
मत्पितु र्ह्यतिथिस्त्वं वै निद्राणश्च पिता मम ।
नाहं गृही नातिथिस्त्वं निद्राणश्च पिता गृही ॥२९॥
एतस्य निद्राभङ्गो हि न मे धर्मः सतां मतः ।
अपित्विह गृहस्थस्य पुत्रो भार्य्या च वेश्मनि ॥४०॥
गृहानुपस्थिते चास्मिन्[1] किं नु धर्मं न रक्षति ।
सुशीलो यद्-गृहे पुत्रः स्त्री च शीलान्विता यदि ॥४१॥
तदा तस्य गृहं पूर्णं धर्मेण सुखदेन हि ।
भार्य्यायां तनये वापि न्यस्य धर्मगृहं[2] पुमान् ॥४२॥
विज्वरस्चरति ह्येवं प्राहुर्धर्मनिरूपकाः ।

---

१ A and C read स्वस्मिन् ।
२ C has धर्मं गृहम् ।

सत्यमेवं किन्तु भवान्नातिथिः किल केवलम् ॥ ४ ३॥
विहगं भस्मसात् कृत्वा मात्सर्य्येण चरस्यपि ।
तस्मान्नाहं वकः पक्षी पित्रोः सेवावृतो ह्यहम् ॥ ४ ४॥
त्वमपि ब्राह्मणो भुङ्क्षे दत्से वत्से स्वमेव हि ।
किमप्राप्य परस्मात्तु क्रुध्य शान्तिं समाचर ॥ ४ ५॥
गृहेषु गृहिणां स्वान्नवस्त्रादि नेतुमाव्रजन् ।
स्वयमेवातिथिस्तत्रादातान्य[1]स्मापहृद् गृही ॥ ४ ६॥
तस्माद् गृहिण एवेह दण्डयोग्यत्वमिष्यते ।
अतिथिः केन दूष्येत तस्माच्छान्तिं समाचर ॥ ४ ७॥

अतिथिरुवाच ।

कुतस्तवेदृशं ज्ञानं जानीषे यत् परोक्षकम् ।
भस्मीकृतो मया क्रौञ्चो मात्सर्य्यञ्चाश्रितं ततः ॥ ४ ८॥
क्लेशयित्वा मया देहं यन्न ज्ञानमुपार्ज्जितम् ।
तत्त्वमेतेन वयसा कुतः समुदपादयः ॥ ४ ९॥
यस्तु क्रौञ्चो मया भस्मीकृतः कः स तदुच्यताम् ।
केन त्वमीदृशं ज्ञानं प्राप्नुयां तन्निदिश्यताम् ।
त्वं मे गुरुरभूः स्वल्पवया अपि मतिप्रदः ॥ ५ ०॥

पराशर उवाच ।

एवमुक्तः सोऽतिथिना त्यक्तमत्सरचेतसा ।
तत्र विस्मययुक्तेन द्विजस्तं द्विजमब्रवीत् ॥ ५ १॥

---

१ B reads ०त्रादातान्यस्माद् गृहात् गृही ।

ब्राह्मण उवाच ।

याहि वाराणसीं विप्र तत्र कश्चिद् वसत्युत ।
व्याधः साधुर्धर्मशीलस्तुलाधार इति श्रुतः ॥५२॥
स ते निःसंशयं सर्वं कथयिष्यति धार्मिकः ।
दृष्ट्वैव चरितं तस्य तव ज्ञानं भविष्यति ॥५३॥
पुरा जाबालिनाम्ने स ददौ ज्ञानं द्विजातये[1] ।
तन्निदर्शनजं धर्मं कियदेतत् चराम्यहम् ॥५४॥
इह क्षणं चोपविश्य पिता मे प्रतिबुध्यतु ।
एतेन पूजितस्तत्र यास्यसि ज्ञानवृद्धये ॥५५॥

पराशर उवाच ।

इत्युक्तः सोऽतिथिर्व्यास परमं विस्मयं गतः ।
तूष्णीं स्थितः किञ्चिदपि नोवाच साध्वसाधु वा ॥५६॥
तत्क्षणादेव गन्तुं स मतिं चक्रे त्वरान्वितः ।
एतस्मिन्नेव काले तु गृहस्थः प्रतिबुद्धवान् ॥५७॥
दृष्ट्वातिथिमुवाचेदं शृण्वतस्तस्य तस्य च ।
किं मया चरितं भद्र विप्रोऽयमतिथिर्मम ॥५८॥
निद्रया मरणेनैव समापन्ने मयि स्वयम् ।
कति कालं समायातस्तिष्ठन्नेवाङ्गने मम ॥५९॥
पुत्रश्च धर्मभीरु र्मे मन्निद्रापायभीतितः ।
ऊरौ निधापितौ पादौ मदीयौ नाप्यपाकरोत् ॥६०॥

---

1 B reads ददौ ज्ञानं सुनिर्मलम् ।

तस्मान्ममापराधोऽयमतिथिर्येन वञ्चितः[१]।
स एवमनुतप्यैव स्वयं स्वेनैव तं तदा ॥६१॥
अपूजयद् यथाशक्ति सोऽतिथिस्तेन पूजितः।
उषित्वा रजनीं ताञ्च प्रातरुत्थाय वै ततः॥
प्रणम्य तं द्विजसुतं ब्राह्मणं गृहिणं तथा।
वाराणसीं ययौ शीघ्रं यत्र व्याधस्तुलाधरः॥६२॥६३॥
ददर्श तत्र विपणौ विक्रीणानं मृगामिषम्।
स्त्रिया सह तुलाधारं ज्वलन्तं धर्मतेजसा ॥६४॥
तिष्ठन्तं सम्मुखे तञ्च तुलाधारः समीक्ष्य तम्।
प्रोवाच ब्राह्मणं सायमतिथिं समुपागतम् ॥६५॥

व्याध उवाच।

स्वागतं ते द्विजसुत प्रेषितोऽसि द्विजातिना।
मत्सन्निधानं मात्सर्य्यं तेन निःसारितं तव।
यत्त्वयोपार्ज्जितं पक्षिनीडीकृतशिरेण वै ॥६६॥
छेत्स्यामि तव सन्देहं ब्रह्मन् यस्ते हृदि स्थितः।
गृहान् मम समागच्छ त्वं सायमतिथिः किल[१]॥६७॥६८॥

पराशर उवाच।

इत्युक्तः स द्विजस्तेन व्याधेन चरितात्मना।
परमं विस्मयं प्राप्तो न वक्तुमशकद् यतः ॥६९॥
सह तेन गतस्तस्य भवनं साधुधर्मिणः।

---

१ B. reads मम।

ददर्श भवनं चारु नानाशोभाविराजितम् ॥७०॥
तत्र व्याधस्तुलाधारः प्रणम्य पितरौ गृहे ।
भार्य्यया सहधर्मिण्या पश्यतश्च द्विजन्मनः ॥७१॥
तस्थौ तयोस्तु पुरतः पित्रोर्व्याधः सुभक्तिमान् ।
तथाभूतं स्थितं तत्र व्याधं धर्मवतां वरम् ॥७२॥
पिता प्रोवाच मुदितः सेव्यतामतिथिः सुत[१] ।
इत्याज्ञप्तः पितृभ्यां स यथाविधि यथाधनम् ।
ब्राह्मणं पूजयामास यथायोग्यं यथामति ॥७३॥
विश्रान्ते सुखमासीने ब्राह्मणे व्याध एव सः ।
संपूजयित्वा पितरौ यथाकालक्रियोचितम् ॥७४॥
स्वभोजनादिद्रव्यार्थं नियोज्य च प्रियां सतीम् ।
अतिथेर्निकटं गत्वा जिज्ञासोरुषितोऽभवत् ॥७५॥
तं दृष्ट्वा मुदितो विप्रः पप्रच्छ चिरमीप्सितम् ।
विस्मयाविष्टहृदयो व्यास ब्राह्मणपुत्रकः ॥७६॥

ब्राह्मण उवाच ।

कुतस्तवेदृशं ज्ञानं गुरोस्तु समुपार्ज्जितम् ।

१ For पराशर उवाच and the verses 69, 70, 71, 72 and the first line of 73 B reads

इत्युक्त्वा तं तुलाधारः स्वगृहानानयद्द्विजं ।
वहिः संस्थाप्य तं व्याधो विवेशाभ्यन्तरं ततः ॥
स नत्वा पितरौ विप्रमागतं संन्यवेदयत् ।
तावूचतुः पूजयैतं त्वं सायमतिथिं सुत ॥

केन मे तादृशं ज्ञानं सम्पद्येत वदस्व तत्[१] ॥७७॥
मया भस्मीकृतः क्रौञ्चः स वा क इति मे वद।
तपसां देहशोषेण यज्ज्ञानं नार्ज्जितं मया।
तत् त्वं यादृक्क्रियो लब्धः कथमामिषविक्रयिन् ॥७८॥

व्याध उवाच।

शृणुस्व[२] द्विजदायाद वृत्तान्तं मम यत्नतः।
पुराहं बालकं कञ्चिद् वने ब्राह्मणमुत्तमम् ॥७९॥
तेजोराशिं दुर्निरीक्ष्यं ज्वलन्तमिव पावकम्।
दृष्ट्वा क्रीड़ाः परित्यज्य तमेवान्वगमं मुदा ८०॥
तत्रैकदाहं विपिने पक्षिणं धृतवानपि।
मया गृहीतः स पक्षी जालबद्धो जरन्नपि ॥८१॥
रुराव व्याकुलस्तत्र पक्षिणस्तस्य चात्मजः।
पूर्वपोषमनुस्मृत्य पित्रे वारि ददौ कियत् ॥८२॥
सम्भ्रमात् तत्र जाले च पपात च ममार च।
स पक्षितनयः पक्षिवपुर्हित्वा च तत्क्षणात् ॥८३॥
धृत्वा दिव्यं वपुः सर्वैः स्तूयमानं ययौ दिवम्।
तद्दृष्ट्वाश्चर्य्यमतुलं विस्मयाविष्टमानसम् ॥८४॥
मामुवाच स वै विप्रः पृष्टस्य ज्ञानिनां वरः।
व्याधपुत्र शकुन्तोऽसौ त्वया बद्धस्य पक्षिणः ॥८५॥

---

१ B reads कुतस्तवेदृशं ज्ञानं सम्पद्येत वदस्व तत्।
२ B reads शृणु ब्राह्मणदायाद ॥

श्रौरसस्तनयः पूर्वं स्नात्वा पित्रे ददौ जलम्।
अविचिन्त्यैव मरणं पितरं तमपूजयत्॥८६॥
एतेन कर्मणा तस्य गतिरेषाभ्युपद्यते।
बाल त्वमपि पितरौ सेवस्व देशितो मया॥८७॥
दिव्यं ज्ञानं वपुश्चापि भविष्यति तव ध्रुवम्।
इत्येवमुक्तस्तेनाहं गुरुणा ब्राह्मणेन हि॥
प्रतिज्ञाय सदा पूजां पित्रोरेतां चराम्यहम्।
नाहं जाने तपोदान-व्रतयज्ञादिकञ्च यत्॥८८॥८९॥
पित्रोश्चरणयोः सेवामेवैकां जान एव हि।
यन्मे ज्ञानं समुत्पन्नं पित्रोः सेवाफलञ्च तत्॥९०॥
प्रातरुत्थाय तं विप्रं पितृसेवोपदेशकम्।
प्रणम्य पितृसेवाञ्च करोमि तदनन्तरम्॥
क्रीत्वा मांसानि विक्रीय वैश्यवृत्तिर्गृहे चरे।
भार्य्यापि लब्धा सुभगा मदेकपतिदेवता॥९१॥९२॥
तया सह चरे धर्मं पितृसेवां तथातिथे।
त्वं तु पित्राननुमतो देहकर्षणमुग्रकम्॥९३॥
अन्यत्रालब्धशरणः सिन्धुतीरेऽचरस्तपः।
यत्र वै मूषिकाद्याद्या[१] वरं विश्वासमागताः॥९४॥
त्वामदृष्ट्वा तव पिता बहूनुतप्तवांस्तथा।
तेन ते विहितं चोग्रं तपोऽस्थिरमभून्ननु॥९५॥

---

१ C reads यत्र पक्षिमूषिकाद्याः।

श्वेतं तद्रवकरूपेण तपस्ते खमुपाश्रितम् ।
तव पित्रनुतापाग्नेर्भस्म दृष्टं त्वया चणात् ॥
निःसृते तपसि ह्युग्रे साहङ्कारोऽभवद् भवान् ।
अतएवाधुना विप्र मद्वाक्यमवधाय[1] हि ॥९६॥९७॥
गृहान् गत्वा प्रयत्नेन पितरौ यज सर्वथा ।
यो[2] देवते परित्यज्य वृथाऽधाद्[3] देहकर्षणम् ।
एवं तवोदितं सर्वं लप्स्यसि ह्यभिवाञ्छितम् ॥९८॥
दुरदृष्टवशान्मर्त्यः पुःसोरेत उपाश्रितः ।
वसते मातुरुदरे मासान् दश दिनानि च ।
दुःखालये वसंस्तत्र भुङ्क्ते मासचतुष्टये ॥९९॥१००॥
तदा तु पूर्वजनुषां दुःखानि स्मरति द्विज ।
कथञ्चित् संस्तभ्य मनो वदत्येवं हरिं स्मरन् ॥१०१॥
नमो भगवते तुभ्यं नारायण जगत्पते ।
लोकपित्रे लोकधात्रे लोककर्त्रे हरे नमः ॥१०२॥
प्रदात्रे सुखदुःखानां तत्तत् कर्मानुरूपतः ।
त्वत्तो हि जायते जन्तुर्हत एव त्वया पुनः ॥१०३॥
कुकर्मफलजं दुःखं भुङ्क्ते त्वत्सेवया सुखम् ।
अतोऽस्मान्निःसृतो गर्भात्त्वमेव पितरौ विभो ।
सेविष्यामि यतो नैव जन्ममृत्युव्यथां भजे ॥१०४॥

१ B reads अवधारय ॥
२ A reads ये ।
३ B reads अधा ।

एवं वदन् हरिमिव साक्षात् पश्यन् द्विजोत्तम ।
सूतिकावायुनाक्रष्टो गर्भान्निःसरते स वै ।
कोटिवृश्चिकदष्टस्य पीड़ामाप्नोत्यसौ तदा ॥
इत्थं तु मृत्युकालेऽपि व्यथामाप्नोति देहभृत् ॥ १ ० ५ ॥ १ ० ६ ॥
ततो जातश्च संवृद्धो मात्रा च परिपोषितः ।
पित्रोः संसेवया देवाः पितरस्तस्य तोषिताः ॥
ततः सद्गुरुमाप्नोति सद्दैवतनिदर्शनम् ।
एवं जन्तुः सुखं भुक्त्वा परत्र चाश्नुते सुखम् ॥ १ ० ७ ॥ १ ० ८ ॥

पराशर उवाच ।

इत्युक्तः स द्विजसुतः प्रसन्नात्मा तुलाधृता ।
पितरौ केन तुष्येतामिति प्रातर्गृहं ययौ ॥ १ ० ९ ॥

इति बृहद्धर्मपुराणे तुलाधारोपाख्यानं
तृतीयोऽध्यायः ।

---

१ B reads धातुः ।

# चतुर्थोऽध्यायः ।

व्यास उवाच ।

इतोऽपि कथितः श्रेयान् मन्त्रज्ञानप्रदो गुरुः ।
न ते स्वे पतिपुत्राद्या ये न मृत्योर्विमोचकाः ॥१॥
दुर्लभं मानुषं जन्म प्राप्य यो गुरुदीपतः ।
न दृष्टवान् परं ब्रह्म भुक्तं तेन विषं स्वयम् ॥२॥
अज्ञानतमसाकीर्णं चेतो जन्तोः स्वयं गुरुः ।
ज्ञानाञ्जनेन सम्मार्ज्य करोति ब्रह्मनिर्म्मलम् ॥३॥
चिरन्तनतमोजुष्टं जन्तोरन्तरमेव हि ।
कोह्यन्यः श्रीगुरोः पादान्निर्म्मलं कुरुतेऽर्च्चिषः ॥४॥
यमं लोक[१]नियन्तारं लोके निर्द्दोषदुर्ल्लभे ।
मोचयेद् गुरुरेवैकस्तस्माद् यत्नाद् गुरुं भजेत् ॥५॥
शान्तं सुशीलं धर्मज्ञं शास्त्रज्ञं चारुदर्शनम् ।
दयालुं पुत्रिणं दान्तं गृहस्थं गुरुमाश्रयेत् ॥६॥
वयोज्येष्ठमपितरमभ्रातरमवैरिणम् ।
अमातामहमज्ञानशाठ्यशून्यं तथा यतिम् ॥७॥
अन्तर्ब्बहिस्तुल्यचेष्टं सदा सस्मितभाषणम् ।
गृहेऽनासक्तवत्सन्तं स्वयंयोग्यो गुरुं भजेत् ॥८॥

---

१ B reads यमंलोकगतन्तावत् ।

गुरुपुत्त्रेषु पौत्त्रेषु गुरुभ्रातृषु यो भिदाम् ।
कुर्य्यात् स उच्यते मूढो गुरुहा धर्म्मलोपकृत् ॥९॥
तस्माद् गुरोर्व्वंशजातं वयोऽल्पमपि पण्डितम् ।
गुरुं कुर्य्यात्तु दीक्षायामविचार्य्य गुरोः कुलम् ॥१०॥
नानामूर्त्तिर्यथा देवो नानामूर्त्तिस्तथा गुरुः ।
पुत्त्रपौत्त्रादिरूपेण जाबाले नात्र संशयः ॥११॥
देवानाञ्च गुरूणाञ्च भेदो वाण्यादिना कृतः ।
पातयेन्नरके तीव्रे गुरुभेदकरं नरम् ॥१२॥
ऊर्द्ध्वस्तिष्ठेत् गुरोरग्रे लब्धानुज्ञो वसेत् पृथक् ।
निवीतवासा विनयी भीतस्तिष्ठेद् गुरोः पुरः ।
गुरौ तिष्ठति तिष्ठेत उषितेऽस्याज्ञया वसेत् ॥१३॥
शयिते चरणौ सेवेदभ्यायाते च धारयेत् ।
चापल्यं प्रमदागाथां त्वंकारञ्च विवर्ज्जयेत् ॥१४॥
नापृष्टो वचनं किञ्चिद् ब्रूयान्नापि निषेधयेत् ।
पादोदकं पिबेन्मूर्द्ध्ना धारयेत् पूजयेदपि ॥१५॥
अन्यत्र न मनो दद्याद् भोजयेन्मिष्टमाहृतम् ।
अवशिष्टञ्च भुञ्जीत शिष्य एवम्विधो मतः ॥१६॥
गुरौ साक्षात् स्थिते मर्त्त्यः पृथक् पूजां न चाचरेत् ।
शान्तत्वादिगुणैर्युक्तः पित्रोर्भक्तियुतः सुधीः ॥१७॥
शिवपूजारतः साधुः शिष्य आत्मा गुरोर्मतः ।
चतुर्णामेव वर्णानां स्त्रीणाञ्च ब्राह्मणो गुरुः ॥१८॥
ब्राह्मणो ज्ञानवृद्धो हि कनिष्ठोऽपि गुरुर्भवेत् ।

स्त्रियस्तु गुरुसम्बन्धाद् गुरुरप्युच्यते द्विज ॥१९॥
गुरुस्तन्त्रस्य मन्त्रस्य गोपनीयाः प्रयत्नतः।
प्रकाशात् सिद्धिहानिः स्यादित्याह भगवाञ्छिवः ॥२०॥
शौक्रं तथा च सावित्रं दैवञ्च जन्म सम्मतम्।
जन्मत्रयं ब्राह्मणानां स्त्रीशूद्राणां द्विजन्मता ॥२१॥
गुरुं तन्त्रं देवताञ्च भेदयन्नरकं व्रजेत्।
गङ्गादुर्गाहरीशानां भेदकृन्नारकी यथा ॥२२॥
पतिरेव गुरुः स्त्रीणां यदि स्यात् पतितो न च।
भार्य्याया देवपूजायामनुकूलो भवेत्पतिः ॥२३॥
स्वामिप्रेमकरी भार्य्या सर्व्वदा सुखमश्नुते।
भार्य्या स्यात्पतिसेवायां सदा दक्षा ह्यकल्मषा ॥२४॥
मातापित्रोः पुत्रइव यथोक्तं पूर्व्वतस्तव।
अलोलुपा भवेन्नारी लज्जाशीला च सर्व्वतः ॥२५॥
निर्लज्जा शयने पत्युः सस्मिता स्यात् सदैव हि।
अन्तरं दुःखदूनञ्च दर्शयेत् स्निग्धमुत्तमम् ॥२६॥
पुत्राणां पालनं कुर्य्यात् पुत्रबुद्धिः परात्मजे।
स्वामिनः सुखदुःखेषु तथा स्यात् स्वयमेव हि ॥२७॥
प्रोषिते च सुखं जह्यादेवं नार्य्याः शुभं भवेत्।
गृहे द्रव्याणि रक्षेत सावधाना च सर्व्वतः ॥२८॥
अन्नादेः संविभागञ्च कुर्य्यात् सुचतुरा सती।
एवम्विधा तु या नारी सा सर्व्वैः पूज्यते द्विज ॥२९॥
तया च ध्रियते पृथ्वी लोकानां देवता च सा।

गृहेषु तनया भूषा भूषा संसत्सु पण्डितः ॥२०॥
सुबुद्धिः पुंसु भूषा स्यात् स्त्रीषु भूषा सलज्जता।
अपण्डितो मृतो विप्रो मृतो यज्ञो ह्यदक्षिणः ॥२१॥
मृता सभा सुधीहीना मृता नारी [1]गतत्रपा।
नदी च जलहीनेव तृष्णाहीना मतिर्यथा ॥२२॥
राजहीना यथा भूमिः पतिहीना तथाबला।
यौवनं विविधा भूषा चारुकेशादिधारणम्।
देहशोभा च नारीणां विधवानां न शोभते॥२३॥२४॥

इत्येवमुक्तं ननु काश्यपेय
यदेव पृष्टं भवता ममैव।
सत्कीर्त्तनीयं परमं पवित्रं
आद्यं गुरूणां चरितं नराणाम् ॥२५॥
पित्रोः सुतानां पतिषु स्त्रियाश्च
गुरौ च शिष्यस्य सुभक्तिदश्च।
अतःपरं किं कथनीयमत्र
प्रब्रूहि तच्छ्रोतुमनास्त्वमत्र ॥२६॥

इति बृहद्धर्मपुराणे गुरूणां निर्णयः।

---

[1] 'C' reads हृतत्रपा।

## पञ्चमोऽध्यायः ।

जाबालिरुवाच ।

तीर्थानि वद मे ब्रह्मन् वेदव्यास जगद्गुरो ।
दिवि भुव्यन्तरीक्षे च यानि सन्ति विशेषतः ॥१॥
तेषां फलं स्वरूपञ्च नाम कार्य्यविधिश्च यः ।
तत्सर्व्वं मे विशिष्यैव शुश्रूषोर्वक्तुमर्हसि ॥२॥

व्यास उवाच ।

तीर्थानि सन्त्यसङ्ख्यानि दिवि भूमौ नभस्यपि ।
तेषां प्राधान्यतः प्राह तीर्थानां वायुरेव हि ॥
तिस्रः कोट्योऽर्द्धकोटी च तत्र वच्मि कियन्ति च[1] ॥३॥
कानिचिद्वाक्यरूपाणि जलरूपाणि कानिचित् ।
कानिचिद्देशरूपाणि देहकालात्मकानि च ॥४॥
कानि चेन्द्रियरूपाणि तरुरूपाणि कानिचित् ॥५॥
देवतानामधिष्ठानस्थानं तीर्थमिहोच्यते ॥६॥
फलस्वरूपतत्त्वेन शृणु तीर्थानि वक्ष्यते ।
यान्याह देवी रुद्राणी सख्यौ स्वे विजयां जयाम् ॥७॥

जाबालिरुवाच ।

कुत्र देवी तु रुद्राणी त्रैलोक्यजननी शिवा ।
सखीं जयाञ्च विजयां तीर्थानि केन वाब्रवीत् ॥८॥

---

१ C reads ते ।

एतन्मे पृच्छतो ब्रह्मन् रुद्राणीमुखपङ्कजात् ।
निर्गतं तीर्थमाहात्म्यपीयूषं पावनं परम् ॥९॥
कस्तुभ्यं कथयामास तदुपाख्यानमद्भुतम् ।
त्वत्तः श्रुत्वा कृतार्थोऽहं भवेयं जगतां गुरो ॥१०॥

व्यास उवाच ।

कदाचित् पार्व्वती देवी कैलासशिखरे स्थिता ।
साकं जयाविजयाभ्यां सखीभ्यां रहसि द्विज ॥११॥
सुखासीनाञ्च तां दृष्ट्वा देवीं ते विजयाजये ।
कृताञ्जलिपुटे भूत्वा प्रोचतुः पूर्व्ववाञ्छितम् ॥१२॥

सख्यावूचतुः ।

गिरिजे भगवत्यम्ब दुर्गे गिरिशभाविनि ।
आवयोर्व्वाञ्छितं किञ्चित् सम्पूरय शुभानने ॥१३॥
सर्व्वदेवसमाराध्ये प्रसीद जगदम्बिके ।
चिरं नौ वाञ्छितं तीर्थान्यवगाह्य दर्शय ॥१४॥

व्यास उवाच ।

एवमुक्ता तु सा देवी सखीभ्यां सुस्मितानना ।
उवाच वचनं दुर्गा लोकदुर्गतितारिणी ॥१५॥

देव्युवाच ।

ममेष्टमिदमागच्छ विजये जयया सह ।
सर्व्वतीर्थानि वां सख्यौ दर्शये स्नापयेऽधुना ॥१६॥
इत्युक्त्वा सह ताभ्यां सा मुदिताभ्यां शिवा सती ।
हिमालयमगाद् यत्र गङ्गा वहति वेगिता ॥१७॥

तत्र तां वेगिनीं गङ्गां दृष्ट्वा वगाह्य पार्व्वती ।
प्रतिगन्तुं मनश्चक्रे सह ताभ्यां स्वमालयम् ।
तां दृष्ट्वा प्रतिगच्छन्तीमाहतुस्ते द्विजालिके ॥१८॥

सख्यावूचतुः ।

क्व गच्छसि महेशानि असम्पूर्य्य मनो हि नौ ।
कृतेच्छयोः सर्व्वतीर्थे तीर्थमेकन्तु लभ्ययोः ॥१९॥

देव्युवाच ।

सख्यौ किमिति न स्नातं तीर्थेषु सकलेषु च ।
किं न जानासि गङ्गेयं सर्वतीर्थप्रसूरिति ॥२०॥
न केवलन्तु तीर्थानां प्रसूरेषा सदा शिवा ।
सर्वेषामपि लोकानां धर्म्माणामपि देवता ॥२१॥
पवित्राणि विधायैव भुवनानि चतुर्द्दश ।
त्रैलोक्ये भाति देवीयं दीप्यमाना विभुः किल ॥२२॥
एतयाधिष्ठितं सर्वमूर्द्धमाकाशमेव च ।
भूतलञ्च तलस्थानं गिरीणां शिखराणि च ।
गुणैस्तुल्यानि पुण्यानि तानि नैवात्र संशयः ॥२३॥
मुक्तिस्थानं सुखस्थानं वासस्थानं तदेव तु ।
अशोकमभयञ्चैव यत्र गङ्गा प्रतिष्ठिता ॥२४॥
स्वर्गश्चैष सुखञ्चेदं मोक्ष एष च पञ्चधा ।
सम्पदेषा यशश्चैतद् यद्गङ्गादर्शनादिकम् ॥२५॥
न ब्रह्माण्डमनाश्रित्य सृष्टिः कापि प्रवर्त्तते ।
नैतां गङ्गामनाश्रित्य तीर्थं किञ्चिद्विराजते ॥२६॥

स्त्रीराजसुतगोघ्नश्च गुर्व्वात्महननमेव च ।
मातेव पाति गङ्गैषा यमदण्डान्महाभयात् ॥२७॥
दानयज्ञजपस्नानतपांसि मुक्तिदानि च ।
कृतानि येन तेनैषा गङ्गा देवी समाश्रिता ॥२८॥
इयं सुरनदी पुण्या गङ्गा त्रिपथगा नदी ।
यदा न स्मर्य्यते सख्यौ तदैव विपदः पराः ॥२९॥
भक्तिर्यस्य तु नास्त्यस्यां सर्व्वे धर्म्मास्त्यजन्ति तम् ।
सदा ह्यप्रियवाक्यस्य लोका इव सखीद्वय ॥३०॥
अहमेषा शिवो विष्णुस्तत्त्वेनैषां भिदा न हि ।
किं वर्णितेन बहुना हे सख्यौ विजये जये ।
युवाभ्यां सर्व्वतीर्थानि स्नातानि कलितानि च ॥३१॥

सख्यावूचतुः ।

प्रतीतिः केन मेऽत्रस्याद्यत्त्वयास्यास्तु वर्णितम् ।
अचक्षुर्गोचरीभूतं न प्रतीयन्ति पण्डिताः ॥३२॥

देव्युवाच ।

स्तुहि गङ्गामिमां सख्यौ साक्षान्मे भक्तिभाविते ।
सर्वतीर्थोद्भवां देवीं गङ्गां चेद्द्रक्ष्यथाचिरात् ॥३३॥
ममैव वचनाद्च युवयोर्मुखतो ध्रुवम् ।
निर्गमिष्यति यद्वाक्यं भवेद् गङ्गास्तवो हि सः ॥३४॥

व्यास उवाच ।

इत्युक्ते ते तया सख्या विजया च जया तदा ।
त्रैलोक्यपावनीं देवीं स्तोतुं योग्ये बभूवतुः ॥३५॥

गङ्गावूचतुः।

नमः प्रसीदाम्ब महेशि मात-
र्गङ्गे त्रिलोकाखिलदुःखहन्त्रि।
विष्णोः पदं तत् परमन्तु लब्ध्वा
त्रैलोक्यमाप्लावयसि साधितार्थम्॥२६॥
त्वां स्तौमि पश्यामि परावरेशे[१]
नमामि कायावयवैरपि त्वाम्।
अज्ञानमोहान्धतमोनिरस्त-
चित्तां तु मां बोधय यादृशी त्वम्॥२७॥
त्वं ब्रह्मणा विष्णुना पूरुषेण
शिवेन वै देववरेण भूयः।
सिद्धैः परश्चैरपि धीरवर्ग्गैः
स्तुता किमावां मनुवो भवादृशीम्॥२८॥
धन्याऽवनीयं खलु भूतधात्री
लोकैः सर्व्वैः पूजितेयं बभूव।
त्वं वै यस्यामवगाह्या नवोघै-
र्विभासि पुण्याधिकपुण्यवत्याम्॥२९॥
जानन्ति के त्वां ननु मूढबुद्धयो
नराः स्त्रियो वा वन[२]जन्तवो वा।
पीतामृता दृष्टसहस्रसूर्य्या

---

१ C has परावरेशि।
२ B reads जल०।

आनन्दघनब्रह्मामृतसारभूताम् ॥४०॥
प्राणांस्त्यजन्तं त्वयि वा वसन्तं
गायन्तमानन्दमधीत्य वा त्वाम्।
कः श्रद्दधीताहितदेहबन्धं
विनात्मघातान्नरकाय योग्याम् ॥४१॥
यः सर्व्वलोकामरयक्षदेवः
स्वयं शिवः श्रीमति चोत्तमाङ्गे।
सर्व्वोत्तमां त्वां प्रदधाति गङ्गां
सार्थं शिवत्वं ह्यधिमन्यमानः ॥४२॥
सर्व्वस्य सर्व्वंच तु नाधिकारः
कस्यापि कुत्रापि च को हि शास्ते[१]।
त्वं खण्डितब्रह्मकटाहकोटिः
सर्व्वंच चाखण्डगतिः किलास्से ॥४३॥
ध्याये शिवे त्वां शशिशुक्लवर्णाम्
चतुर्भुजां पद्मवराभयाप्तैः।
युक्तांश्च शुक्ले मकरे वसन्तीं
त्रिलोचनां देवनुतामलङ्कृताम् ॥४४॥
नमः शिवायै शान्तायै गङ्गायै ते नमोनमः[२]।
नमो मकरवासिन्यै कोटिचन्द्रप्रभे नमः ॥४५॥
चतुर्भुजायै पद्मेन वरेणाप्यभयेन च।

---

१ B puts verses 43 and 44 after verse 45.
२ A omits verse 45.

पीयूषपूर्णकनकघटेन च विराजिताम्।
सर्व्वालङ्कारभूषाढ्यां चिनेत्रां दैवतैर्नुताम्
स्मिताख्यां गौरवर्णां शिरनूपुरशिञ्जिनीम्।
ब्रह्मविष्णुशिवाराध्यां दधानायै तनुं नमः ॥४६॥
नमः कल्मषहन्त्र्यै च लोकमात्रे नमोनमः।
सर्व्वतीर्थभवायै च सुलभायै नमोनमः ॥४७॥

व्यास उवाच।

एवं तयोः स्तुवन्त्योस्तु विजयाजययोर्द्विज।
प्रादुरासीत् तदा गङ्गा दीपयन्ती जगत्त्रयम् ॥४८॥
तां तथा प्रादुरासीनां मकरासनसंस्थिताम्।
विलोक्य मुमुदाते ते[1] विस्मिते विजयाजये ॥४९॥
नाशक्नुताञ्च वचनं वक्तुं किंयदपि द्विज।
रोमाञ्चिताङ्ग्यौ तिष्ठन्त्यौ वास्यरुद्धदृशौ भृशम् ॥५०॥
सर्व्वेषामपि देवानां मुनीनाञ्च तदागमः।
बभूव हृष्टमनसां सिद्धगन्धर्व्वरक्षसाम्।
यक्षाणां किन्नराणाञ्च तथैवाप्सरसां मुने।
महर्षिरपि वाल्मीकिरहञ्च तत्र चागतौ ॥५१॥५२॥
सर्वे प्राञ्जलयो भूत्वा ब्रह्माच्युतशिवादयः।
सर्व्वा देव्यश्च देवानां पुष्पचन्दनपाणयः।
नानालङ्कारभूषाढ्यां गङ्गां चक्रुः सुशोभिताम् ॥५३॥
अथ तस्याश्च श्रङ्गेभ्यो जावाले तीर्थराजयः।

---

१ B reads द्वे।

समुत्पन्ना हि तत्रैव ददृशाते तदैव ते ॥५४॥
मूर्त्तिमन्ति च तीर्थानि नानारूपाणि तानि वै।
देहदेशानुवाक्यादिरूपाणि विश्रुतानि च ॥५५॥
मुखतो जज्ञिरे तस्या ब्रह्मतीर्थानि सर्वशः।
पादेभ्यो देशतीर्थानि जलतीर्थानि वक्षसः ॥५६॥
कर्णयोर्जज्ञिरे तस्या आकाशतीर्थसञ्चयाः।
ललाटाज्जज्ञिरे चैव दिव्यतीर्थानि भास्वरात् ॥५७॥
अङ्गतीर्थानि अङ्गेभ्यो जातान्यस्यास्तथा तथा।
तानीह सर्व्वतीर्थानि नानावर्णानि तत्र वै।
सर्व्वावयवपूर्णानि भूषणैरुज्ज्वलानि च ॥५८॥
प्रपश्यतां मुनिदेवानां विजयाजययोस्तथा।
तुष्टुवुर्हृष्टचेतांसि सर्वेषां पश्यतामपि ॥५९॥

तीर्थान्यूचुः।

ॐ नमो विमलवदनायै भूर्भुवःस्वःपरमहःकलायै केवलपरमानन्दसन्दोहरूपायै लोकत्रयामीववलाकातिमिरापसारकपरमज्योतीरूपायै असदपलापतिक्करसदूषितरसनादोषापसारणपरमामृतरसरसायनामृतरूपायै। मूर्त्तिमत्यै कोटिकोटिचन्द्रधवलायै मकरासनायै ते॥ गङ्गे देवि स्वर्धुनि विष्णुपादोद्भवे द्रवमयनारायणतेजसशरीरद्रवशरीरे परमात्मन् प्रसीद प्रसीद ते नमोनमः॥

नमस्ते देवदेवेशि गङ्गे त्रिपथगामिनि।
त्रिलोचने श्वेतरूपे ब्रह्मविष्णुशिवार्च्चिते ॥६०॥
वेगखण्डितब्रह्माण्डकटाहे दोषखण्डिनि।

रत्नकोटिकिरीटेन मण्डितामलमस्तके[1] ॥६१॥
देवदेव्यादिकिरीटस्पृष्टपादाम्बुजद्वये[1]।
कामदे कामरूपासि तीर्थानाञ्च प्रसूरसि ॥६२॥
श्यामे श्यामलसच्चारुकुञ्चितामलकुन्तले।
शिवप्रिये शिवाराध्ये शिवशीर्षकृतालये ॥६३॥
शिवे शिवप्रदे शैवं कुर्व्वाणा निखिलं जगत्।
अच्युतेऽच्युतभूषाढ्ये अच्युताङ्घ्रिसमुद्भवे ॥६४॥
अच्युतात्मकपादाब्जे धरागमनपावने।
अच्युतप्रेमधाराढ्या ब्रह्माणी[2] ब्रह्मरूपिणी ॥६५॥
ब्रह्मानन्दमयी ब्रह्मप्रसूर्ब्रह्मरसामृता।
ब्रह्मत्वदायिनी ब्रह्मनदी सुरधुनी सुरा ॥६६॥
भेदशून्याऽभेदकारीभेदकप्राणहारिणी।
अभेदबुद्धिरूपासि अभेदबुद्धिमत्प्रिये ॥६७॥
सत्यप्रपञ्चरहिते अनिन्द्यदोषवर्ज्जिते।
कमले विमले शुद्धे तत्त्व[3]ब्रह्मपरात्मिके ॥६८॥
वेगाधारे वेगगमे[4] स्थिरवायुप्रभेदिनि।
सूर्य्यमण्डलसंभिन्ने मन्दाकिनि महेश्वरि ॥६९॥
सुरार्च्चिते महामये कोकामुखि रणप्रिये।

---

१ For these two lines B reads,
रत्नकोटिकिरीटेन स्पृष्टपादाम्बुजद्वये।
२ A and C read ब्राह्मणी।
३ A and B शुद्ध०।
४ B reads वेदाधारे वेदागमे।

बलिमांसप्रिये कालि मत्स्यासवसुखप्रदे ॥७०॥
जवारक्ताचि लोलाचि रक्तवस्त्रपिधायिनि ।
निःशङ्कसेव्ये निःसेव्ये निष्किञ्चनजनप्रिये ॥७१॥
दिगम्बरप्रिये दिव्ये वीररूपे मनोहरे ।
आकाशनिलये देवि सदा पर्व्वतवासिनि ॥७२॥
धरालये च पातालनिलये खेचरे चरे ।
सदा[१] खड्गकरे भीमे महाभैरवसाधिते ॥७३॥
भयहारे भयाधारे भवपत्नि भवानले ।
भावज्ञे भावरसिके गिरिजे गिरिशृङ्गगे ॥७४॥
शृङ्गाटकगते कान्ते शृङ्गाररसशोभने ।
कामरूपे कामभवे[२] कामनाभवमन्मथे ॥७५॥
दुर्गमे दुर्गतिहरे दुःखहन्त्रि सुखालये ।
हंसकारण्डवक्रौञ्चमण्डिकूलद्वये शुभे ॥७६॥
देवानीसेविततटे स्मृतिपापविनाशिनि ।
ब्रह्महत्यादिपापेषु नाममात्रमहाशने ॥७७॥
सुखदे मोक्षदे मातः सर्व्वेषां जगतामपि ।
चाण्डालग्टहिसन्न्यासि-योगिसेव्या च योगिनी ॥७८॥
विषयाख्यविषज्वालाहरे विषहरे[३] हरे ।
हारे दग्धहरे गङ्गे कलिपापहरे परे ॥७९॥

---

१ B reads गदा ।
२ C reads कामभरे० ।
३ B and C read त्वघहरे ।

ह्रङ्काररूपे प्रणवस्वरूपे क्रीँस्वरूपिणि ।
अम्बिके भगवत्यम्ब भीमस्तुते नमोनमः ॥८०॥
इष्टसिद्धिकरे स्फौँ स्फोँ[1] ह्रीँ क्रूँ स्वाहास्वरूपिणी ।
विमलमुखि चन्द्रमुखि कोलाहले खर्वे प्रमोद ॥८१॥
राजलक्ष्मीश्च भूपानां गृहिणां गृहिणी शुभा ।
योगिनां योग एव त्वं मतिः सन्न्यासिनामपि ॥८२॥
कवीनां विश्वतोदृष्टिर्बुद्धिस्त्वं राजसेविनाम् ।
लज्जाऽसि च कुलस्त्रीणां बालानां मधुरा च गीः ॥८३॥
भवती समरे स्पर्द्धा साधूनाञ्च क्षमा खलु ।
सरस्वती च वाल्मीके व्यासे वाचालता तथा ॥८४॥
श्रुतिः स्मृतिश्च संज्ञा च[2] कविताजहरी तथा ।
गतिस्त्वमेव भूतानां मत्स्यानामुदकं यथा ॥८५॥
आद्याहम्बी मन्त्ररूपा कालरूपा कपालिनी ।
कुमारी तरुणी वृद्धा रसज्ञा रससुन्दरी ॥८६॥
स्वर्गे मन्दाकिनी त्वं हि देवदेवीनिषेविता ।
चितावलकनन्दा त्वं कृतार्थान् कुरुषे नरान् ॥८७॥
पाताले नागलोकाद्यैर्भोगवत्यसि सेविता ।
पूर्व्वस्यां दिशि सीता त्वं भद्राख्या चोत्तरत्र वै ॥८८॥
पश्चिमस्यां हि वंक्षुस्त्वमलकनन्दा च दक्षिणे ।
ब्राह्मी त्वं वैष्णवी शैवी कुमारी युवती तथा ॥८९॥
कपालमालिनी च त्वं विकटाक्षा सरस्वती ।

---

१ B reads ह्रौँ and C reads ह्रूौँ । २ B reads सर्गो ।

श्मशानवासिनी च त्वं चिताङ्गारास्थिसञ्चया ॥९०॥
सरस्वती जाह्नवी च गङ्गा भागीरथी शुभे ।
हंसी पद्ममुखी पद्मसहस्रदलवासिनी ॥९१॥

वयं तु मातः परममङ्गलायनवासावगाहदर्शनस्मरणेन विश्वाति तीर्थानि किलेतरथा जातानि च भगवति भवतीमेवाश्रयमाश्रितानि तीर्थत्वेन प्रपञ्चरूपाणि भवत्या एव सर्वरूपायाः ये पुनस्त्वयि भक्तास्तान् वयं पुनीमहे तद्विभूतिविशेषदिदृक्षया तत्र तत्र भ्रमतः । त्वय्यभक्तांस्तु दूरतस्त्यजामहे । त्वं पुनस्तत्तन्मयत्वाद्देवानां तीर्थानां[1] धर्म्माणां माता सर्वसाक्षिणी प्रणम्यसे शतशः । प्रादुर्भावप्रलयौ नस्त्वत्त इति परमम्, किं ब्रूमस्तव महिमा नास्ति यतो ब्रह्महत्यास्त्रीहत्यागुरुहत्यादिमहापातकातिपातकानामेकाधिकरणञ्च; जनस्त्वज्जलकणसम्बन्धादिनैव पूतो भवतीति । तद्दर्शनादेव परमब्रह्मपदप्राप्तिः फलमिति च यो महिमपरमाह स तत्तत्पापभागिति यथार्थवादः ॥

व्यास उवाच ।

इत्युक्ता तानि तीर्थानि निलिल्युस्तत्र सर्वशः ।
रुद्राण्या सह गङ्गा सा एकरूपा बभूव ह ॥९२॥
जया च विजया तत्र व्याकुले न विलोक्य ताम् ।
बभूवतुः प्रपश्यन्त्योस्तयोस्तत्र तु पार्वती ॥९३॥
अन्तर्हितान्यरूपा सा रुद्राणी समराजत ॥९४॥
देवताऋषिमुख्याद्याः सर्वे चान्तर्हिता गताः ।
ताभ्यां सहैव सा देवी विस्मिताभ्यां जगाम ह ॥९५॥

इति बृहद्धर्मपुराणे तीर्थप्रादुर्भावः ॥

(१) C adds लोकानाम् ।

## षष्ठोऽध्यायः ।

सख्यावूचतुः ।

स्नातानि सर्व्वतीर्थानि दृष्टानि च विशेषतः ।
ज्ञाता च गङ्गा तत्त्वेन त्वत्प्रसादान्महेश्वरि ॥१॥
श्रुतश्च परमः पुण्यो देव्यास्तीर्थकृतस्तवः ।
ये पठन्ति च शृण्वन्ति नास्ति तेषां पराभवः ॥२॥
सर्व्वतीर्थावगाहस्य हयमेधस्य च क्रतोः ।
गयाश्राद्धशतस्यापि फलमेष[1] प्रसूयते ॥
अत्र नास्त्येव सन्देहस्त्वत्प्रसादान्महेश्वरि ॥३॥
अस्मन्मुखान्निर्गतो यः स्तवस्त्वत्परमाज्ञया ।
स चाप्येवंविधस्त्वास्तां लोकमातर्नमामहे ॥४॥
तीर्थानां वद नामानि यानि दृष्टानि सर्व्वथा ॥५॥

देव्युवाच ।

प्रोक्तं वः[2] प्रथमं तीर्थं गङ्गाख्यं पावनं परम् ।
अथान्यानि तीर्थानि कथयामि यथातथम् ॥६॥
तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।
यस्मात् गङ्गा प्रभवति तीर्थं तत् प्रथमं मतम्[3] ॥७॥

---

१ B reads फलमेतत् ।
२ B reads च ।
३ B reads प्रसरति and स्मृतम् ।

ततो ध्रुवादिलोकेषु गङ्गासम्भेदकं स्थलम् ।
नवसङ्ख्यकमाख्यातं तीर्थं पवनपद्धतौ ॥८॥
यत्र गङ्गा प्रभवति महावेगा महाबला ।
सिद्धदेवर्षिप्रमुखास्तत्र स्नान्ति गतागतैः ॥९॥
ततः सुमेरुशिरसि धारापात इतीरितम् ।
तीर्थं यत्रोर्द्ध्वलोकांस्तु भित्त्वा गङ्गा पपात ह ॥१०॥
तत्रैव हि चतुर्द्धाऽभूद्गङ्गा गन्तुं दिशः समाः ।
अस्यैव चतुरन्तेभ्यो येभ्यो गङ्गावरोहति ।
तानि चत्वारि तीर्थानि तेषां नामानि वर्ण्यते ॥११॥
सीतालकं नाम पूर्व्वं दक्षिणञ्चालकालकम् ।
पश्चिमं वङ्क्षुभद्रञ्च भद्रोत्तरमथोत्तरम् ॥१२॥
मेरोरधोऽधः शैलानामष्टानां यत्र यत्र च ।
संयुक्ता च वियुक्ता च तानि तीर्थानि षोड़श ॥१३॥
सरपातं पूर्व्वपातं पूर्व्वस्यां गन्धमादने ।
शाङ्करी विलसन्ती च तीर्थे पश्चिमपर्व्वते ॥१४॥
पुण्यप्रभा प्रकाशाची गोमती गोतमी तथा ।
मणिकर्णा[1] मणिश्रोता एतान्युत्तरतोऽपि च ॥१५॥
मणिदर्शा महावेगः[2] अवन्ती[3] ब्रह्मवेगिनी ।
शिवेश्वरी शम्भुमुखी दक्षिणाद्रिष्विमान्युत ॥१६॥

---

१ B reads मणिकर्णी ।
२ B has मणिदर्शा महावेगा ।
३ A has अवन्ती ।

पश्चिमोत्तरपूर्व्वेषां गिरीणां मध्यदेशतः।
शङ्खपाताख्यकं तीर्थमेवं[1] पूर्व्वादिपूर्व्वकम् ॥१७॥
हिमालयनितम्बे तु यत्र शम्भुः शिवोऽविशत्।
शिवस्रोतोऽभिधानं[2] तु तीर्थमुक्तं महाफलम् ॥१८॥
गङ्गाद्वाराणि चत्वारि तीर्थानि क्षितिमण्डले।
केतुमाले कुरौ चैव भद्राश्वे भारते तथा[3] ॥१९॥
ब्रह्मद्वारं शिवद्वारं तेजोद्वारं ततः परम्।
हरिद्वारं ततस्तत्र सप्तस्रोतं[4] प्रकीर्त्तितम् ॥२०॥
सप्तर्षीणां प्रीतयेऽभूत् स्वर्णदी यत् सप्तधा ॥२१॥
केतुमाले शिवानद्या सङ्गता यत्र सा नदी।
गोकलं[5] नाम तीर्थं तद्विच्छेदात् परगोकलम्[5] ॥२२॥
सानुमत्या भानुमत्या गङ्गासङ्गात् कुरौ तथा।
पुण्यमालं नाम तीर्थं विच्छेदात् सोममालकम् ॥२३॥
भद्राश्वे वैष्णवी नाम साकरीनाम चापराम्।
सङ्गता विगता गङ्गा तीर्थे साकलदेवले[6] ॥२४॥

---

१ C has यत्र।
२ A reads शिवस्रोतो॰ B reads शिवस्रोत॰।
३ B omits four lines from केतुमाले कुरौ चैव।
४ A reads सप्तस्रोतः।
५ B reads गोलकम्।
६ A and B read भद्राश्वे वैष्णवी नाम साकरी नाम चापरा।
स्वर्णाता विगता गङ्गा तीर्थे सकलदेवले ॥
A has साकलदेवले.।

गङ्गासागरसङ्गं तु श्रोतस्तु पश्चिमे वने[१] ।
उत्तरे चिशतश्रोतः पूर्व्वे सप्तकलेवरम् ॥२५॥
भारते कानिचित् सख्यौ तीर्थानि शृणुतं मम ॥२६॥
जह्वाख्यं तु ततस्तीर्थं यत्र नाम्ना तु जाह्नवी ।
ततः प्रयागो नाम स्यात्तत्राक्षयवटोऽपि च ॥२७॥
तीर्थे द्वे समगाद् यत्र यमुना च सरस्वती ।
यत्र मुण्डितमुण्डस्तु म्रियतां यत्र कुत्रचित् ॥२८॥
प्रसङ्गतो गतो यत्र नरो लुप्तगिरा[२] भवेत् ।
ततो वासन्तकं क्षेत्रं वासन्ती यत्र पूज्यते ॥२९॥
ततो वाराणसी नाम पुरी शम्भोः सतां गतेः ।
मरणं दुर्लभं यत्र यत्र गङ्गोत्तरस्रवा ॥३०॥
जले स्थले मुक्तिदात्री स्वर्धुनी मणिकर्णिका ।
यस्मिन् भगवतः शम्भोः लिङ्गानि सुबहून्युत[३] ॥३१॥
भवन्ति तानि तीर्थानि नामभेदात् पृथक् पृथक् ।
विशेषोऽस्यास्ति विज्ञेयः पुराणे मत्स्यभाषिते ॥३२॥
ततोऽपि कथितं तीर्थं पद्मावत्याः समागमः ।
त्रिवेणी नाम तीर्थञ्च [पृथक् भूते च यत्र वै[४] ॥३३॥
सरस्वती च यमुना च प्रयागफलदायकम् ।
गङ्गासागरसङ्गञ्च तीर्थं परमकं मतम् ॥३४॥

---

१ B reads गङ्गासागरश्रोतस्तु सप्तश्रोतस्तु पश्चिमे ।
२ C reads नर उप्तगिरा ।
३ B reads ऽपि ।
४ B omits the portion bracketted here.

यत्र धारासहस्रेण गङ्गासागरगा भवेत् ।
सहस्रन्तासु धारासु तीर्थानि कथितानि च ॥२५॥
यात्राकाशे स्थले] तोये मोक्षो नृणां सदा भवेत् ।
कामेन वा मृतः कामं तं तमाप्नोत्यनन्तरम् ।
नारी वाथ नरो वाऽपि यत्र गङ्गाऽपि दुर्लभा ॥२६॥
एवं यत्र च यत्रैव गङ्गातीरे[१] द्वये शुभे ।
शिवालया ब्रह्मविष्णु-ब्राह्मणानां तथालयाः ।
तेऽपि तीर्थविशेषेण देवीपीठास्तु ये पुनः[२] ॥२७॥
एवं वां कथिता सख्यौ गङ्गायां तीर्थसञ्चयाः ।
ब्रह्मतीर्थानि चैतानि गङ्गामस्तकजानि वै ॥२८॥
चितावन्यानि तीर्थानि निबोध विजये जये ॥२९॥

इति बृहद्धर्मपुराणे तीर्थप्रादुर्भावे षष्ठोऽध्यायः ॥

---

१ B reads गङ्गातीरवरे ।
२ B has an additional verse here :—
सगरसन्ततिमोक्षविधित्सया
प्रचलितापि जवेन हिमालयात् ।
इह तु मन्दमुपैति सरस्वती-
यमुनयोर्विरहादिव जाह्नवी ॥

# सप्तमोऽध्यायः ।

देव्युवाच ।

निवसन्ति द्विजा यत्र तीर्थं तत् क्षितिमण्डलम् ।
येषां हि चरणौ तीर्थं सर्व्वतीर्थसमाश्रयौ ॥१॥
तीर्थं पद्मवनं प्रोक्तं तुलसीकाननं तथा ।
तुलसीमूलमारभ्य यावद्धस्तास्तु षोड़श ।
दशदिक्षु महत्तीर्थं तदेव सुरवन्दितम् ॥२॥
यत्र च श्रीफलतरुः सोऽपि देशः सुतीर्थकं ।
तुलसीवत् समाख्यातं वृक्षमानगुणं तथा ॥३॥

सख्यावूचतुः ।

मातर्दुर्गे महेशानि तुलसीविल्ववृक्षयोः ।
जन्ममाहात्म्यतत्त्वानि कथयस्व कृपामयि ॥४॥

देव्युवाच ।

पुरा कैलासशिरसि ब्राह्मणः कश्चिदास ह ।
धर्म्मदेव इति ख्यातः साधुर्विष्णुपरायणः ॥५॥
वृन्दा नाम तस्य पत्नी ब्राह्मणी धर्म्मचारिणी ।
सदा पत्यनुगा साध्वी पतिप्रेष्ठा सुखान्विता ॥६॥
पत्याज्ञया सदा देवकार्य्याणि कुरुते सती ।
स्वयञ्च देवपूजायां पतिपूजाविधावपि ॥७॥
नियुक्ता सततं सख्यौ तिष्ठत्येव सुखान्विता ।

सपस्विनी सविनया स्मितवक्त्रा सदा सती।
सल्लक्षणैः समैर्युक्ता सम्मान्या सर्व्वदा जनैः ॥८॥
धर्म्मदेवस्तु सततं कृष्णभक्तिपरायणः।
गायन् सदा शिवं कृष्णं पर्य्यटत्यृषिमण्डले ॥९॥
दर्शनीयश्च धर्म्मात्मा धर्म्मज्ञश्च स्मिताननः।
पारगो गानविद्यायां सुस्वरः साधुसम्मतः ॥१०॥
सदा सुस्वरगानेन विष्णुभक्त्या च शीलतः।
रमयन् सर्व्वलोकानां चित्तं भ्रमति पावनः ॥११॥
एकदा स द्विजः सख्यौ गायन् ब्राह्मणसंसदि।
अतीयाय गृहे कालं भोजनस्य द्विजोत्तमः ॥१२॥
वृन्दा तु तद्गृहे भार्य्या संपूज्यातिथिमागतम्।
पतिं प्रणम्य देवांश्च पूजयित्वा जलं पपौ ॥१३॥
पश्चादागत्य तद्भर्त्ता धर्म्मदेवः स्वकालयम्।
विलोक्य पत्नीं वारीणि पीत्वा गेहे स्थितां तदा।
हठाद्दैवबलाद् साध्वीं शशाप राक्षसीमिति ॥१४॥
सा शप्ता स्वामिना सद्यो राक्षसं भावमागता।
विचचार सदा लोके कैलासशिखरे शुभे ॥१५॥
आगत्य क्ष्मातलं लोकान् भक्षयामास सा क्षुधा।
सदा क्षुधापीड़िता च[१] सरोषा सततञ्च सा ॥१६॥
वनेवने[२] व्याघ्र-सिंह-गज-खड्गिशशादिकान्।

---

१ C reads सदा क्षुधा च पीड़ा च।
२ B has व्याल।

खादयामास सा वृन्दा मृगाश्वमहिषान् बहून् ॥१७॥
पूर्व्वानुभूतधर्म्मेण त्यक्त्वा गोविप्रवैष्णवान् ।
सर्व्वान् जन्तून् मुदा[१] भुक्त्वा महीं चक्रे ऽस्थिमालिनीम् ॥१८॥
ततः सस्मार कैलासशिखरं गन्तुमिच्छती ।
उपोषिता चिरावस्त्र क्षुधाशीला वुभुक्षिता ॥१९॥
आगत्य गिरिमूर्द्धानं चिन्तयामास खादितुम् ।
सर्व्वेऽत्र जन्तवः शैवा ब्राह्मणास्तु स्वभावतः ॥२०॥
को मे दन्तप्रहारस्य पात्रं भवतु सम्प्रति ।
वृक्षा अपि न मे भक्ष्याः शिवलोके ऽत्र तन्मयाः ॥२१॥
एवं चिन्ताकुलां वृन्दां राक्षसीति च विश्रुताम् ।
दृष्ट्वा सर्व्वे मिथो विप्रा जगदुः शिवपर्वते ॥२२॥
इयं वृन्दा गुणैर्युक्ता सदा दोषेण वर्ज्जिता ।
जगाम राक्षसं भावं न च दैवात् परं वलम् ॥२३॥
स्त्रीणां लोलुपता नाम प्रधानं दोष उच्यते ।
निर्द्दोषायां सोऽप्यमुष्यां[२] न च दैवात् परं वलम् ॥२४॥
अतएव वलं नैव यद्बाहुवलमुच्यते ।
भाग्यं विभर्त्ति क्षीणोऽपि न च दैवात् परं वलम्[३] ॥२५॥
धनं वलं मतं कैश्चित् कैश्चित् सामर्थ्यमुच्यते ।
वलं बुद्धिर्मतं कैश्चित् न च दैवात् परं वलम् ॥२६॥

---

१ C reads जङ्गलजान् ।
२ B has निर्द्दोषायामप्यमुष्यां ।
३ B omits verse 26.

तपोवलं मतं कैश्चित् ब्राह्मणत्वञ्च कैश्चन।
ऐश्वर्य्यञ्च वलं कैश्चित् न च दैवात् परं वलम्॥२८॥
वलवान् बुद्धिमांश्चापि जनः परवशः सदा।
आत्मानं मन्यते श्रेष्ठं न च दैवात् परं वलम् ॥२९॥
कर्त्तव्ये नियमाचारे यत्नवान् सततं भवेत्।
जानीयात् सततं धीरो न च दैवात् परं वलम् ॥३०॥
यत्ने कृतेऽपि सुदृढ़े यदि कार्य्यं न सिध्यति।
तदा नानुभवेद् दुःखं न च दैवात् परं वलम् ॥३१॥
दैवं पुरुषकारेण यो निवर्त्तयितुमिच्छति।
न स जानाति मूर्खत्वात् न च दैवात् परं वलम् ॥३२॥
दैवेन लभ्यते स्वर्गो दैवेन मोक्ष इष्यते[१]।
त्रैलोक्यं दैववशगं न च दैवात् परं वलम्॥३३॥
दैवं तु प्राक्तनं कर्म किम्बेश्वरविचेष्टितम्।
उभयं तुल्यमेवोक्तं[२] तस्मात् दैवं परं मतम् ॥३४॥
इयं तु पूर्वधर्मेण युक्तैव[३] मोक्षमाप्स्यति।
श्रुत्वा कृष्णस्य नामानि लब्ध्वा नाममयीं तनुम्॥३५॥
इत्युक्त्वा ते जगुः कृष्णं सर्व्वपापहरैः रवैः।
शुश्राव सततं वृन्दा ब्राह्मणी शापं[४]राक्षसी ॥३६॥
यत्र यत्र व्रजन्ती सा क्षुधया पीड़िताऽपि च।
तत्र तत्र हरेर्नामावलीं शुश्राव सर्वदा॥३७॥

---

१ C reads मोक्षमिष्यति। २ B has ०वेति।
३ A and B read मुक्तैव। ४ B reads नाम०।

सा तु श्रुत्वा हरेर्नाम सप्ताहं समुपोष्य च।
अत्रावसून् गिरौ तत्र कैलासे शिवधर्म्मिणि ॥३८॥
अथ सम्वत्सरेऽतीते महादेवो मया सह।
विचरन् वनशोभां वै द्रष्टुं सख्यौ कुतूहलात् ॥३९॥
ददर्श मालती-मल्ली-यूथिकातगराश्रयान्[१]।
कुन्द-मन्दार-शेफाली-कुटजान् कनकाश्रयान् ॥४०॥
चम्पकं केशरञ्चैव शिरीषं नवमल्लिकाः।
मुचुकुन्दञ्च बन्धूकं पुष्पवृक्षान् पृथक् पृथक् ॥४१॥
ततः कदम्बपनस-चूताम्राम्रातकादिकान्[२]।
अश्वत्थवटनिम्बादिं तथा शिंशपचन्दनान् ॥४२॥
लाङ्गली-ताल-हिन्ताल-गुवाकान् वेत्रकीचकान्[३]।
खर्ज्जूरान् वेतसान् नीपान् नलान् शालपियालकान् ॥४३॥
नमेरुकोविदारादीन् ददर्श विपिने शिवः।
एवं चचार विपिने फुल्लपङ्कजसारसे ॥४४॥
कूजत्कोकिलकेकालीभ्रमरादिकपक्षिषु[४]।
गणैः सार्द्धं प्रगायद्भिर्नृत्यद्भिर्वाद्यकारिभिः ॥४५॥
करवाद्यं वक्त्रवाद्यं कुर्व्वद्भिश्च मुदान्वितैः।
झङ्कारघोषं विविधं प्रोत्फालगमनं तथा ॥४६॥

---

१ B has ०नगरान् वह्नन्। C has ०टगरान्०। २ ०चूताना-म्रातका०।
३ B omits two lines from अश्वत्थं वट निम्बादिं। ४ B reads कूजत्सु कोकिलाकेकी०।

कुर्व्वद्भिः सह मुदितो विचचार वृषध्वजः।
तत्र पुष्करिणीतीरे प्रफुल्लकमलाकरे ॥४७॥
ददर्श नारीं ज्वलन्तीं मृतां वृन्दां हि राक्षसीं।
मामुवाच महेशानो दृष्ट्वा तद्राक्षसीवपुः[१] ॥४८॥
दृश्यतां गिरिजे वृन्दा राक्षसी ब्राह्मणी पुरा।
विष्णुभक्तस्य विप्रस्य भार्य्या परमवैष्णवी ॥४९॥
दैवेन राक्षसी भूत्वा मृतापि शोभते परा।
संवत्सरमृतायास्तु नास्या नष्टमभूद् वपुः ॥५०॥
श्रीविष्णुभक्तिमाहात्म्यं तन्नामश्रवणस्य च।
अस्या अङ्गेषु किं नाम दृश्यते देववन्दिते ॥५१॥
एवं श्रुत्वा तु वाक्यं तन्महेशस्य सखीद्वय।
दृष्ट्वा वृन्दां मृतां दीप्त्या ज्वलन्तीं विस्मिताभवम् ॥५२॥
प्रत्यवोचञ्च देवेशं देवदेव प्रभो हर।
दृश्यन्ते विष्णुनामानि अस्या अवयवेषु नु ॥५३॥
द्वादशाक्षरमन्त्रश्च दृश्यतेऽस्या वपुष्यत।
अपठंश्च तदा मन्त्रं गणाः शम्भोर्मुदान्विताः ॥५४॥
तैजसन्तत् शरीरञ्च पस्पृशुः शिवकिङ्कराः।
तेषां संस्पर्शमात्रेण खण्डखण्डीकृतं बभौ ॥५५॥
प्रतिखण्डेषु तं मन्त्रं ददृशुर्द्वादशाक्षरम्।
ॐ नमो भगवते वासुदेवायेति महाफलम् ॥५६॥

---

१ B reads राक्षसं वपुः।

मन्त्रस्य प्रतिवर्णस्य गर्भे नामसहस्रकम् ।
एवं तस्याः शरीरं तद्दृढं खण्डकोटिशः ॥५७॥
ततो मत्पुरतः साक्षात् शङ्करो लोकशङ्करः ।
उवाच मगणान् प्रीतो हर्षितांश्च स्वभावतः ॥५८॥

महादेव उवाच ।

इयं वृन्दा राक्षसी तु धर्मदेवस्य सुन्दरी ।
वैष्णवी याभिशप्तापि ब्रह्महिंसां न चाकरोत् ॥५९॥
न वृथा भवितुं योग्या विष्णुप्रीतिकरी स्त्रियम् ।
विष्णुप्रीतिं करोत्वेषा तरुर्भूत्वा महीतले ॥६०॥
शरीरमर्च्च्यतामस्याः श्रीविष्णुप्रीतये गणाः ।
अस्याः पत्रेण वृन्दायाः पूजितः स्यात् स्वयं हरिः ॥६१॥
नान्येनेति सुविज्ञेयं मणिमुक्तादिनापि च ।
नामास्यास्तुलसीत्यस्तु पवित्रायाः सुपावनम् ॥६२॥
तकारो मरणं प्रोक्तं तद्योगः स्यादुकारतः ।
मृता लभति चेत्येवं तुलसीत्येव गीयते ॥६३॥
स्थितः प्रतिदलेष्वस्या मन्त्रो द्वादशवर्णकः ।
अधिष्ठात्री देवतास्यामावां देवीमहेश्वरौ ।
नारायण उपास्योऽस्याः प्रियेयं वैष्णवी मता ॥६४॥
अत्रान्तरे धर्मदेवः प्रियां स्मृत्वा समागतः ।
क्षीणो मलीमसः शोकाद् वृन्दा वृन्देति वै रुदन् ॥६५॥
क्वासि वृन्दे प्रिये कान्ते मयापकरुणात्मना ।
राक्षसीत्यभिशप्तासि निर्दोषा मामिहास्तु धिक् ॥६६॥

शिवेन सान्त्वितो विप्रः शिरोभूत्वा प्रणम्य तम् ।
पुनर्जगर्ह चात्मानं धिङ्मामहं येन मोहितः ।
शिवं साक्षात् महादेवं नाभिवन्दितवानहम् ॥६७॥

देव्युवाच ।

ज्ञात्वा वृत्तान्तमस्याः स वृन्दायाः परितोषदम् ।
शिवं शान्तं महेशानं प्रोचे विप्रः स धार्मिकः ॥६८॥
यदि नारायणार्थेऽयं बभूव तुलसीतरुः ।
तरुमूलमहन्न स्यां प्रियायाः प्रियकाम्यया ॥६९॥
एवमेवेत्याह शम्भुर्धर्मदेवस्तथाभवत् ।
शिवाज्ञया शिवगणाः पृथ्वीमागत्य हर्षिताः ।
रोपयामास तद्देहं कालिन्दीतट उत्तमे ॥७०॥
यत्र गोवर्द्धनो नाम गिरी राजति राजितः ।
अर्द्धचन्द्राकृतिस्तत्र देशो[1] यमुनया कृतः ॥७१॥
नाम्ना वृन्दावनो रम्यः कृष्णप्रीतिस्थलं परम् ।
त्रैलोक्यगोपनीयोऽसौ देशो वृन्दावनाख्यकः ॥७२॥
योगिनां शिरसां[2] वेष्टं सहस्रदलपङ्कजम् ।
रोपयित्वा ययुः शैवाः कैलासं श्वेतपर्व्वतम् ॥७३॥

इति बृहद्धर्मपुराणे तुलसीप्रादुर्भावे सप्तमोऽध्यायः ।

---

१ C reads. देशोऽयं यमुनाकृतिः ।
२ A and C have शिरसीवेष्टं ।

## अष्टमोऽध्यायः ।

देव्युवाच ।

अथ[1] सख्यौ कार्त्तिके वै मासि दामोदरप्रिये ।
अमावास्यातिथौ पृथ्व्यां प्रातः प्रादुर्बभूव सा ।
तुलसी प्रीतये विष्णोः शिवायाश्च शिवस्य च ॥१॥
प्रादुर्भूते तरौ तस्मिन् देवो नारायणः प्रभुः ।
आजगाम सहेशेन ददर्श तुलसीं भुवि ॥२॥
महामेघप्रभां श्यामां स्कन्धपल्लवशोभिताम् ।
दलैरसङ्ख्यैः सम्पूर्णां महामन्त्रमयीं स्थिराम्
ज्वलन्तीं स्वेन महसा गन्धामोदितदिङ्मुखाम् ॥३॥ ॥४॥
तां विष्णुः स्वयमालोक्य हर्षितः सशिवोऽभवत् ।
ततो मूर्त्तिमती देवी बभूव तुलसी शुभा ॥५॥
श्यामाङ्गी चारुवदना द्विभुजा स्मितभाषिणी ।
शङ्खपद्मकरा श्वेतवसना युवती सती ॥६॥
नानालङ्कारभूषाढ्या सिन्दूरारुणभालिका ।
मधुपैर्गन्धसंमुग्धैरालीढ़वदनाम्बुजा ।
दृष्ट्वा नारायणं देवं तुष्टावानन्दनन्दिता ॥७॥

तुलस्युवाच ।

ॐ नमो भगवते तुभ्यं नारायण जगत्पते ।
केवलानुभवानन्दस्वरूप परमेश्वर ॥८॥

---

१ 'B' has यत्र ।

कंसारये महेशाय केशवाय नमोऽस्तु ते।
हरये नरसिंहाय श्रीकान्ताय नमोनमः ॥९॥
नमो भक्त्यैकलभ्याय तर्कदूराय ते नमः।
नमो वेदान्तवेद्याय विद्यावेद्याय ते नमः ॥१०॥
नमस्ते श्रुतिगम्याय श्रुतिस्तुत्याय ते नमः।
नमो नीलघनश्यामतनवे धृतमूर्त्तये ॥११॥
बहुरूपोरुरूपाय नीरूपाय नमोनमः[1]।
पूजकाय च पूज्याय पत्रपुष्पफलैः प्रभो ॥१२॥
अभवाय भवच्छेत्रे सुखदुःखप्रदाय च।
तवैवाहं सुखकरा लक्ष्मे प्रभुरीश्वर।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं हरे नमः ॥१३॥
इति स्तुत्वा दण्डवत् सा कृत्वा तस्य प्रदक्षिणम्।
पुनस्तुष्टाव तुष्टात्मा वचोभिरमलैः सखि ॥१४॥
ओँकाराय[2] नमस्तेऽस्तु शङ्कराय नमोनमः।
शिवाय[3] हरये दक्षवलिक्रतुहराय ते ॥१५॥
एकत्रिपुरहन्त्रे ते कैटभान्धकघातिने।
श्रीगौरीपतये कृष्ण महादेव नमोऽस्तु ते ॥१६॥
इत्यादि स्तुवतीं देवीं तुलसीं शिवसन्निधौ।
जगाद वरदो देवो दैवकीनन्दनो हरिः ॥१७॥

---

१ C has. जलैः।
२ A has ओँकारे।
३ A and B have. हराय।

हरिरुवाच ।

तुलसि श्रीमति श्रेष्ठे वृन्दे वृन्दावने[१] प्रिये ।
स्थिरीभव मम प्रीत्यै यावदाचन्द्रतारकम् ॥१८॥
सदाभिनन्द्या वन्द्या च सुरासुरनरोरगैः ।
तव पत्रमृते पूजा नाद्यारभ्य भवेन्मम ॥१९॥
एकतः सर्व्वनैवेद्यनानापुष्पविभूषणम् ।
एकतः पत्रमेकं ते द्वादशाक्षरमन्त्रवत्[२] ॥२०॥
त्वां यः प्रदक्षिणीकृत्य प्रणमेत् दण्डवत् तरुम् ।
सप्तद्वीपा पृथिवी कृता तेन प्रदक्षिणा ॥२१॥
श्राद्धे च तर्पणे चैव दाने नैवेद्यदापने ।
त्वत्पत्रेण विना न स्यात् तत्तत्कर्म्मफलोत्तरम् ।
पूजिते मयि पत्रैस्ते तुष्टाः स्युः सर्व्वदेवताः ॥२२॥
कार्त्तिके मासि ते पत्रमेकं यच्छति यो जनः[३] ।
स गोसहस्रदानस्य फलमाप्नोति मानवः ॥२३॥
माघे मासि च ते पत्रमालां यच्छति यो जनः ।
तस्मै अहं प्रयच्छामि वाजिमेधक्रतोः फलम् ॥२४॥
वैशाखे मासि ते पत्रैर्यो मे शय्यां प्रयच्छति ।

---

१ A has वृन्दावनि । B has वृन्दावनं ।
२ For Verses 20, 21, and 22 B has एकतः सर्व्वनैवेद्यदापने त्वत्पत्रेण विना न स्यात् भक्तकर्म्मफलोत्तरम् ॥
३ A and B have नरः ।

तस्मै अहं प्रयच्छामि स्वमेव किमितोऽधिकम्[1] ॥२५॥
वैशाखे मासि ते पत्रजलेन योऽभिषिञ्चति[2] ।
तस्मै अहं प्रयच्छामि सदामृतमिधिस्थितिम् ॥२६॥
आषाढ़े मासि यो मह्यं त्वत्पत्ररसवासितम् ।
जलं ददाति तस्मै च ददाम्यपुनरुद्भवम् ॥२७॥
त्वत्पत्रं यत्र तत्रापि पतेत् यत्र महीतले ।
तदहं शिरसा ग्राह्यं करिष्यामि शिवाज्ञया ॥२८॥
त्वत्पत्रजलसिक्तान्नं यो भुङ्क्ते मानवः क्वचित् ।
तदेवामृतमित्युक्तं भुक्तं भाग्यवता शुभे ॥२९॥
त्वत्पत्ररसभोजी यो गङ्गाजलसमन्वितम् ।
सोऽहमित्येव विज्ञेयं सत्यं सत्यं शपे शपे ॥३०॥
स्पृष्ट्वा यस्तुलसीपत्रं मिथ्या वदति शोभने ।
न तस्य नरकादुग्रादुद्धारः कल्पकोटिषु ॥३१॥
त्वत्काष्ठमालां त्वत्काष्ठघृष्टपङ्कञ्च योऽदधत् ।
अहं तस्यानुगः शुद्धे भवामि सुतवत्पितुः ॥३२॥
इत्युक्त्वा सम्मतः शम्भोः सेन्द्रैर्देवगणैः सह ।
सोऽभिषिच्य चितौ देवीं तुलसीं पापनाशिनीम् ।
अन्तर्द्धाय ययौ देवो देवैः शम्भुगणैस्तथा ॥३३॥
एवं वां कथितं सख्यौ तुलस्या जन्म कर्म च ।
एतामुद्दिश्य तीर्थानि त्रीण्युक्तानि च खादिषु ॥३४॥

---

१ A has किमतो॰ ?
२ B reads पत्रमालां यच्छति यो जनः ।

एतां सम्पूजयेन्मर्त्यः सादरेण हरेर्मताम्।
दर्शने प्रणतौ स्पर्शे स्थानसम्मार्ज्जने तथा।
पूजने चयने सख्यौ क्रमान् मन्त्रानुदीरयेत्[१] ॥२५॥
देवि विष्णुप्रिये मातस्तुलसि प्रियदर्शने।
हरिदर्शनदीपार्च्चिः प्रसीद द्विजवल्लभे ॥२६॥
नर एतेन मन्त्रेण प्रफुल्लाचः प्रगे शुभाम्।
प्रपश्येन्न यमं पश्येत् प्रणमेत्तदनन्तरम् ॥२७॥
विष्णुप्रीतिकरे मातर्नमस्ते तुलसीश्वरि।
पवित्रीकुरु मेऽङ्गानि विष्णवङ्गहर्षकारिणि ॥२८॥
मन्त्रेणानेन तुलसीं वन्देताष्टाङ्गलोठनः।
नरः प्रदक्षिणीकृत्य न छायां लङ्घयेदपि ॥२९॥
वैकुण्ठेश्वरपादाब्जवासिनि प्रियदर्शने।
स्पृशामि त्वां महापापसञ्चयान्मे प्रणाशय ॥४०॥
मन्त्रेणानेन तुलसीं स्पृशेन्मर्त्यो विमुक्तिभाक्।
स्थानसम्मार्ज्जने मन्त्रं कथयामि निबोध तम् ॥४१॥
मातस्तुलसि कल्याणि स्थलं ते सुमनोहरम्।
क्रीड़न्त्यागत्य विबुधा मार्ज्जये तत्प्रसीद मे ॥४२॥
मन्त्रेणानेन तुलसीस्थानं हस्तचतुष्टयम्।
सम्मार्ज्जयेच्चतुर्दिक्षु सगोमयजलैर्मृदा ॥४३॥
ॐ तुलस्यै नम इति मन्त्रेण शक्तिसम्भवाम्[२]।

---

१ A has उदीरये।
२. A and C read शक्तिसम्भवात्।

षड़क्षरेण सम्पूज्य जपेदष्टोत्तरं शतम् ॥४४॥
मातस्तुलसि कल्याणि गोविन्दचरणप्रिये।
केशवार्थं चिनोमि त्वां प्रसीद शुभदर्शने ॥४५॥
मन्त्रेणानेन तुलसीपत्राणि प्रचयेत् कृती।
एतैः पर्य्युषितैश्चापि पूजा कार्य्या हरेः सखि ॥४६॥
नाशुचिः संस्पृशेदेतां नोपानच्चरणोऽपि च।
पश्चिमास्यो न चिनुयात् पत्रान्तद्वादशीष्वपि ॥४७॥
स्पृशेन्नैव च संक्रान्त्यां न रात्रौ सायमेव च।
निषिद्धेष्वपि कालेषु विष्ण्वर्थं स्वयमर्चयेत् ॥४८॥
यस्मातिकम्पते शाखा न भङ्गं याति वा तथा।
चिनुयात् तुलसीपत्राण्येवं विष्णुप्रियो भवेत् ॥४९॥
तुलसीमूलसम्भूतां मृदं मूर्द्ध्नि विभर्त्ति यः।
दधाति रूपं सोऽर्कस्य तमोनाशाय केवलम् ॥५०॥
गङ्गा मृदा चन्दनेन तन्मूलस्य मृदाऽपि वा।
युक्तं पत्रं स्वशीर्षे यो नयेत[1] तीर्थमेव सः ॥५१॥
तुलसीकाननं यत्र तत्र नास्ति यमक्रिया।
तत्र चेन्म्रियते जन्तुर्न जन्तुत्वं पुनर्भजेत्[2] ॥५२॥
तुलसीं स्थापयेन्मर्त्य उच्चस्थाने परिष्कृते।
अक्षयस्वर्गवासो हि तेन लभ्यो न संशयः ॥५३॥
श्राद्धं दानं तपो होमः सन्ध्योपासनपूजने।

---

१ B has नयेत्तु।
२ C has लभेत्।

पुराणपठनं चापि तुलसीसन्निधौ चरेत् ॥५४॥

चरितमिदमपूर्व्वं वामवोचं नु सख्यौ

श्रुतिसुखकरमिष्टं कालदोषघ्नमेकम्।

शिवहरिसुखदञ्च प्रीतिदं मानवानां

श्रवणपठनमस्यानन्तपुण्यप्रदं स्यात् ॥५५॥

इति बृहद्धर्मपुराणे तीर्थसम्भवे तुलसीमाहात्म्यमष्टमोऽध्यायः।



## अथ नवमोऽध्यायः ।

देव्युवाच ।

अथातः शृणु तं सख्यौ माहात्म्यं श्रीफलस्य च ।
यत् श्रुत्वा सद्य एव स्याज्जनः शिवजनः स्मृतः ॥१॥
ब्रह्माण्डोपरि विख्यातो ब्रह्मलोकः सनातनः ।
यत्र सर्व्वे चतुर्बाहुवदना वेदवादिनः ॥२॥
शिवलोकस्ततस्त्वोर्द्धं यत्र सर्व्वे शिवात्मकाः ।
वैकुण्ठाख्यं परं धाम तत ऊर्द्धं हरेर्म्मतम् ॥३॥
यत्र सर्व्वे घनश्यामाः पीतकौषेयवाससः ।
चतुर्भुजाः शङ्खचक्रगदापद्मधराः सखि[1] ॥४॥
उज्ज्वलत्कुण्डलद्योतकपोलाश्चारुनूपुराः ।
दुर्गालोकस्ततस्त्वोर्द्धं यत्र सर्व्वाः स्त्रियः शुभाः ॥५॥
यः पृथिव्यां कामरूप इति देशोत्तमः सखि ।
तत ऊर्द्धञ्च गोलोको लसेत्तेजोमयः परः ॥६॥
यः पृथिव्यां समाख्यातो नाम्ना वृन्दावनाभिधः[2] ।
एतेषु यो मया प्रोक्तो वैकुण्ठाख्यो मनोरमः ॥
नारायणस्य देवस्य परमं धाम विश्रुतम् ।
तत्रैकदा हरिर्निद्रासमये ददृशे शिवम् ॥७॥८॥

---

१ C has ॰काराः समे ।
२ C has ॰त्मकः also क्षयः ।

कोटिचन्द्रप्रतीकाशं त्रिलोचनविराजितम् ।
त्रिशूलडमरुधरं स्वर्णाभरणभूषितम् ॥९॥
पृथिवीजलतेजोभिर्वाय्वाकाशयजन्तृभिः ।
सोमेन रविणा चापि स्तूयमानं सुरैस्तथा ॥१०॥
सिद्धिभिश्चाणिमाद्याभिः परितः सर्वतो दिशम् ।
एवम्भूतं महादेवं नृत्यन्तं मुदितं परम् ॥११॥
आनन्देनातिगाढ़ेन मग्नएव हरिः स्वयम् ।
उत्तस्थौ सहसा तल्पे पर्य्यङ्के श्रीविराजिते ॥१२॥
अहो किमिति लक्ष्म्योक्तः प्रबुद्धः स्तब्धवद् बभौ ॥१३॥

श्रीरुवाच ।

किमिदं ते प्रभो दृष्टं स्वप्ने वद जनार्द्दन ।
प्रेयसीं प्रति मां नाथ स्वप्नवृत्तं वदस्व मे ॥१४॥

देव्युवाच ।

इति पृष्टो महालक्ष्म्या देवदेवो जनार्द्दनः ।
वक्तुं न शक्त आनन्देनान्दोलितमनस्तनुः ॥१५॥
गद्गदाक्षरया वाचा तामुवाच ह. केशवः ॥१६॥

भगवानुवाच ।

दृष्टः स्वप्ने महालक्ष्मि मया देवो महेश्वरः ।
आनन्दमयदेहोऽतिसुन्दरोऽद्भुतदर्शनः ॥१७॥
उत्तिष्ठ गच्छ कैलासं मया सह समुद्रजे ।
महादेवं महात्मानं द्रक्ष्याम्यद्य त्रिलोचनम् ॥१८॥
मन्ये हन्त स्मृतस्तेन भाग्येन केनचित् सता ॥१९॥

देव्युवाच ।

इत्युक्ता विस्मिता लक्ष्मीस्तथा चक्रे त्वरान्विता ।
नारायणोऽपि कैलासगमनाय मनो दधे ॥२०॥
अथ मध्यपथे देवश्चन्द्रमौलिर्महेश्वरः ।
गच्छन् वैकुण्ठभवनं दृष्टो नारायणेन सः ॥२१॥
उभयोर्दर्शनं तत्र मिथः सन्दर्शनार्थिनोः ।
अत्युत्कण्ठावतोर्विष्णुशिवयोर्विस्मयप्रदम् ॥२२॥
न वाचा प्रतिपद्यन्तत् य आनन्दो[1] महात्मनोः ।
उत्पन्नस्तत्र समये मम लक्ष्म्याश्च सन्निधौ ॥२३॥
तावुभौ सुमहोत्साहावुभौ प्रणतितत्परौ ।
मिथः कृतालिङ्गनौ च रोमाञ्चितसुविग्रहौ ॥२४॥
आनन्दाश्रुप्लुतौ द्वौ च द्वावेव गद्गदोक्तिकौ ।
कस्मादागमनं कुत्रेत्युक्तिकौ तौ हरीश्वरौ[2] ॥२५॥
तत्राह विष्णुं गिरिशः क्षणं संस्तभ्य केशवः ।
मया त्वं स्वप्ने दृष्टोऽसि श्यामसुन्दरविग्रहः ॥२६॥
श्रीजुष्टवामपार्श्वस्थ शङ्खचक्रगदाधरः ।
अत्यद्भुतमहाशोभो यथा दृष्टोऽसि दृश्यते ॥२७॥
त्वं पुनः केशवानन्तनारायणजनार्द्दन ।

---

१ A has न वाचा प्रतिपाद्यान्तमुदानन्दो महात्मनोः । B has न वाचा प्रतिपाद्येत यदानन्दो महात्मनोः ।

२ A and B केशव० ।

कुतो गच्छसि सोत्कण्ठो मद्भाग्योपस्थितः पथि ॥२८॥

हरिरुवाच ।

दृष्टः स्वप्ने मयाऽपि त्वं शिव शङ्कर सर्व्वदा ।
स्वप्ने यथेक्षितोऽसि त्वं तथा दृष्टोऽधुनाऽपि च ॥२९॥
नमोऽष्टमूर्त्तये तुभ्यमेकादशभवाय च ।
पिणाकपाणये देवीपतये ते नमोनमः ॥३०॥
आगच्छ मत्पुरं नाथ वैकुण्ठं गिरिश प्रभो ।
तत्र त्वां पूजयिष्यामि योगिनां परमीश्वरम्
त्वमेव द्रष्टुमिच्छोर्मे मिलितोऽसि पथि प्रभो ॥३१॥

शिव उवाच ।

आत्मस्वरूप हे देव ममेदं मतमीप्सितम् ।
व्यक्तीकृतं मदात्मत्वात्तस्मान्मत्पुरमाव्रज ॥३२॥

देव्युवाच ।

एवन्तौ निदगन्तौ हि सखीदय परस्परम् ।
केन कस्य पुरं गम्यमिति प्रेम्णाऽपि संशयः ॥३३॥
उभौ संशयितौ तत्र समायातञ्च नारदम् ।
पप्रच्छतुः पूजयित्वा मध्यस्थत्वेन तौ तदा ॥३४॥
नारदोऽपि भ्रमच्चित्तो न शक्तस्तत्र निश्चये ।
प्रोवाच किं नु देवेशौ पृच्छथोऽत्र श्रियं शिवाम् ।
इमे देव्यौ युक्तिदत्ते कर्त्तव्यं वक्ष्यतोऽत्र वां ॥३५॥

देवदेवावूचतुः ।

वदस्व गिरिजे लक्ष्मि कः कस्य पुरमेतु नौ । ३६ ॥

इत्युक्ताहं ततस्ताभ्यां कृष्णेशाभ्यां सखीद्वय ।
वर्त्ममध्यं कयोः प्रेम चान्यूनानधिकं तदा ।
लक्षिता स्वामनन्यांश्च निर्नेत्रौ समुपस्थिताम् ।
तयोरिव मनो मेऽपि सन्देहि समजायत ॥३८॥३९॥
ततस्तदा स्थिरीभूय समवोचमिदं सखि ।
तौ देवदेवौ परमप्रीतिमन्तौ परस्परं ॥४०॥
युवयोर्यादृशी प्रीतिर्दृश्यते ह्यनुपाधिका ।
मन्ये तया प्रमाणेन न भिन्नवसती युवां[1] ॥४१॥
यादृशी दर्शिता प्रीतिर्युवाभ्यां नाथ केशव ।

---

(१) B has two additional verses here;
यादृशी दर्शिता प्रीतिर्युवाभ्यां नाथ केशव ।
मन्ये तया प्रमाणेन आत्मा न्यस्ततनुर्मिथः ॥
या प्रीतिर्दर्शिता देवौ युवाभ्यां नाथ केशव ।
मन्ये तया प्रमाणेन भार्ये आवां पृथङ् न वां ॥

C has five additional verses here;
यादृशी दर्शिता प्रीतिर्युवाभ्यां नाथ केशव ।
मन्ये तया प्रमाणेन आत्मिकोऽन्यस्तनुर्मिथः ॥
या प्रीतिर्दर्शिता देवौ युवाभ्यां नाथ केशव ।
मन्ये तया प्रमाणेव भार्ये आवां पृथङ् न वां ॥
यादृशी दर्शिता प्रीतिर्युवाभ्यां नाथ केशव ।
मन्ये तया प्रमाणेन द्वेष एकस्य स द्वयोः ॥
यादृशी दर्शिता प्रीतिर्युवाभ्यां नाथ केशव ।
मन्ये तया प्रमाणेन एका पूजा द्वयोर्मता ॥
यादृशी दर्शिता प्रीतिर्युवाभ्यां नाथ केशव ।
मन्ये तया प्रमाणेन अपूजैकस्य च द्वयोः ॥

मन्ये तया प्रमाणेन भेदकृद्वां चिरं पतेत् ॥४२॥
किं भ्रामयसि मध्यस्थचित्तं भेदप्रदर्शनात् ।
योगिनो यं प्रपश्यन्ति नाम्ना श्रीकृष्णशङ्करौ ॥४३॥
अतएव वदाम्येवं गच्छतं स्वं स्वमालयं[1] ।
वैकुण्ठोऽपि च कैलासः कैलासस्तत्पृथक्न च ॥४४॥
आत्मानं शिवमालोक्य वैकुण्ठं याहि केशव ।
विष्णुमालोक्य वैकुण्ठं कैलासञ्च मया शिव ॥४५॥

देव्युवाच ।

इत्युक्ता मद्वचः श्रुत्वा हसित्वा हरिशङ्करौ[2] ।
हर्षालिङ्गितसर्व्वाङ्गौ मामेव प्रशशंसतुः ॥४६॥
आलिङ्गनप्रणामादिं कृत्वा सख्यौ शिवाच्युतौ ।
गतौ कैलासवैकुण्ठौ नारदस्य स्थलान्तरं ॥४७॥

इति बृहद्धर्म्मपुराणे श्रीफलप्रादुर्भावे कृष्णशङ्कर-
समागमो नवमोऽध्यायः ।

---

१ A and B have स्वस्वमालयं ।
२ B and C read शिवशङ्करौ ।

## दशमोऽध्यायः ।

देव्युवाच ।

कैलासमागते शम्भौ वैकुण्ठे गरुड़ध्वजं ।
सुखासीनं प्रिया लक्ष्मीः पप्रच्छ मुदितानना ॥१॥
प्रभो देव जगन्नाथ प्रसन्नात्मन् श्रियःपते ।
कति प्रियतमाः सन्ति भगवन् भवतोऽनघ ॥२॥
माता गुरूणामधिका पुत्र एवात्मनो[१] वरः ।
सुहृदाञ्च प्रियाणाञ्च वरा भार्य्या जनार्द्दन ॥३॥
मन्येऽत एवमात्मानमनन्यां ते प्रियां श्रियं ।
मत्तोऽपि ह्यधिकः प्रेष्ठो[२] दृष्टः श्रीकण्ठ ईश ते ॥४॥
अतोऽपि ह्यधिकः प्रेष्ठ[२]स्तेनाज्ञातोऽस्ति कोऽपि ते ।
तन्मे वद प्रभो देव भार्य्याहं यदि ते मता ॥५॥

भगवानुवाच ।

न मे प्रियतमाः सन्ति शिव एकः प्रियो मम ।
अहेतुकः प्रियोऽसौ मे स्वकायः प्राणिनामिव ॥६॥
पुत्रार्था यौवनार्था च गृहार्था स्त्री प्रिया नृणां ।
पुत्रः प्रियस्य पिण्डार्थः कीर्त्त्यर्थस्य समुद्भवे ॥७॥

---

१ B reads आत्मनां ।
२ C has श्रेष्ठः ।

धनं प्रियं सुखार्थञ्च विपत्त्राणार्थमेव च ।
प्रियं शरीरं धर्म्मार्थं ते च धर्म्मात्मनां तथा ॥८॥
सर्व्वे प्रयोजनेनैव प्रिया लोकेषु पद्मिनि ।
केवलप्रीतये प्रेष्ठः[१] प्रिये न कोऽपि दृश्यते[२] ॥९॥
स्त्रीणां यथा पतिः प्रेष्ठः स्त्री पुंसां न तथा प्रिया ।
अहेतुकः प्रियः स्वामी स्त्री सहेतुः प्रिया मता ॥१०॥
अतोऽनुगच्छते पत्नी वह्नौ दीप्ते मृतं पतिं ।
पुमान् पत्न्यां मृतायान्तु पुत्रायोद्वहतेतरां[३] ॥११॥
प्रीतिस्त्वहेतुकी पुंसां पुरुषेष्वेव युज्यते ।
न स्त्रीषु भिन्नधर्म्मास्ता मैत्री साम्यमपेक्षते ॥१२॥
पुरा स्वयम्भुवावावां पृथिव्यां समुपस्थितौ ।
तत्राहं प्रियकाम्यायै चरन् कान्ते दिशो दश ।
मनसा निश्चयं चक्रे शृणु तत् कमलालये ॥१३॥
यथाहं प्रियकाम्यायै चरामि विदिशो दश ।
तथा चरन् यो दृष्टः स्यात् स स्यान्मेऽहेतुकः प्रियः ॥१४॥
एवं मनसि निश्चित्य चरन् दृष्टोऽहमीश्वरं ।
मम तस्य च दृष्ट्वैव दृष्टस्य नियतं[४] यथा ।
बभूव महती प्रीतिर्विधेव प्राक्तनोद्भवा ॥१५॥

---

१ C reads श्रेष्ठः ।
२ All the MSS read प्रियेऽलङ्कापि ।
३ B reads परां ।
४ B has नियमं ।

स एवाहं[1] महादेवः स एवाहं जनार्दनः ।
उभयोरन्तरं नास्ति घटस्थजलयोरिव ॥१६॥
शिवादन्यप्रियो मेऽस्ति भक्तो[2] यः शिवपूजकः ।
शिवस्यापूजको यश्च न कदापि प्रियो मम ॥१७॥

देव्युवाच[3] ।

इत्युक्ता कमला देवी विष्णुना प्रभविष्णुना ।
अमन्यताप्रियां विष्णोः शिवपूजापराङ्मुखी[4] ।
धिङ्मां धिङ्मामिदं वाक्यं प्रवदन्ती मुहुर्मुहुः ॥१८॥
तां दृष्ट्वा कमलां कृष्णो माभैरित्याह हर्षितः ।
मया प्रवर्त्तिता नासि शिवपूजाविधौ सति ॥१९॥
अद्यारभ्य महेशस्य पूजां कुरु यथाविधि ।
अबाधेन प्रतिदिनं शिववन्मे प्रिया भवेः ॥२०॥

देव्युवाच ।

इत्युक्ता सा प्रतिज्ञाय याचितां नारदेन च ।
शिवपूजां समारेभे कर्त्तुं पत्याज्ञया सखि ॥
दिने दिने शिवे भक्तिर्ववृधे पूजया श्रियः ॥२१॥
एवं यातेषु कालेषु कदाचिज्जलधेः सुता ।
पप्रच्छ केशवं देवं शिवभक्त्या समादरात् ॥२२॥

---

१ B has ०यं ।
२ B and C read भक्त्या ।
३ B omits देव्युवाच ।
४ C reads ०पराङ्मुखा ।

श्रीरुवाच ।

प्रभो श्रीपुण्डरीकाक्ष केन पुष्पेण सर्व्वथा ।
परितुष्यति ते प्रेष्ठः शितिकण्ठस्त्रिलोचनः ॥२३॥
तेन पुष्पसहस्रेण प्रत्यहं नीललोहितं ।
सङ्कल्प्य पूजयिष्यामि तन्मे पूरय मानसं ॥२४॥

भगवानुवाच ।

देवि प्रियतमे नाथे लक्ष्मि प्राणाधिके शुभे ।
अहो ते भगवानीशः सुप्रसन्नो न संशयः ॥
शृणुष्वाब्धिसुते येन तुष्टो भवति शङ्करः ॥२५॥
गवामष्टोत्तरशतं सवत्सं समलङ्कृतं ।
पयस्विं दत्त्वा विप्रेभ्यो यत् पुण्यं लभते नरः ।
तत् पुण्यं करवीराख्यं पुष्पं दत्त्वा लभेत् कृती ॥२६॥
सुरक्तकरवीरेण तत् पुण्यं द्विगुणं भवेत् ।
श्वेतेन करवीरेण तत् पुण्यं समुपार्ज्जयेत् ॥२७॥
शेफालिकाख्यपुष्पेण रूप्यकोटिफलं लभेत् ।
शेफालिका शतगुणं कुन्दपुष्पन्तु शम्भवे ॥
ततः शतगुणं प्रोक्तं मल्लीपुष्पमुदाहृतं ॥२८॥
निर्म्मितं मुक्तया लिङ्गं मुक्ताभिः पूजयेत् यदि ।
तत् पुण्यं लभते साधुर्द्रोणपुष्पप्रदानतः ॥२९॥
सुवर्णनिर्म्मितं लिङ्गं शम्भोः स्वर्णेन पूजितं ।
तत् पुण्यं लभते दत्त्वा पुष्पं चम्पकनामकं ॥३०॥
वैशाखे मासि शुक्लेन चामरेण सुवीजिते ।

शम्भौ या फलसिद्धिः स्यात्सा शिरीषप्रसूनतः ॥
अश्वमेधस्य यत् पुण्यं तत् पुण्यं नागकेशरात् ॥२१॥
मुचुकुन्दप्रसूनन्तु लब्ध्वा शम्भुः समुद्‌भजे।
गयाश्राद्धफलं दत्ते पितृणां परितोषदं ॥
तत् फलं स्यात् शतगुणं तुलसीपत्रदानतः ॥२२॥
शिवस्तगरपुष्पेण चन्द्रप्राप्तिफलं लभेत् ।
उपोष्य यत् फलं काश्यां तत् फलं वज्रपुष्पतः ॥२३॥
उन्मत्तपुष्पं यो दद्यात् शिवाय परमात्मने ।
स तत् पुण्यं लभेत् यत् स्यात् उपोष्यैकादशीशतं ॥२४॥
एवमन्यानि पुष्पाणि वर्जयित्वा तु केतकीं ।
शिवप्रियाणि ज्ञेयानि महालक्ष्मि निबोध मे ॥२५॥
एतानि सर्व्वपुष्पाणि दत्त्वा यत् फलमाप्नुयात् ।
तत् फलं समवाप्नोति शिवाय पद्मपुष्पदः ॥२६॥
पद्मपुष्पात् परं नान्यत् शिवप्रीतिकरं सदा ।
तस्मात् पद्मप्रसूनानि देहि सङ्कल्प्य शम्भवे ॥२७॥

देव्युवाच ।

इत्युक्ता देवदेवेन लक्ष्मीः पद्मालया शुभा ।
पद्मपुष्पप्रदानाय सङ्कल्पं प्रचकार ह ॥२८॥
स्वयमाहृत्य कासारात् स्वयं प्रक्षाल्य यत्नतः ।
स्वयं दत्ते महेशस्य स्वर्णलिङ्गोपरि ध्रुवं ॥२९॥
सहस्रं पद्मपुष्पाणि त्रिवारगणितानि च ।
प्रत्यहं भक्तिभावेन सुदृढ़ेन सखिह्रय ॥४०॥

एवं वर्षे गतप्राये कदाचिल्लक्षधीः सुता ।
प्रातः स्नात्वा सरो गत्वा निर्मलेनान्तरात्मना ।
प्रचिकाय सरोजानि सख्यौ संख्याय तत्परा ॥
पुनः प्रचालयामास न संख्यायैव संभ्रमात् ॥४१॥४२॥
पूजां कृत्वा स्वर्णलिङ्गे सहस्रं पङ्कजानि सा ।
संख्याय दातुमारेभे सा पद्मा विजये जये ॥४३॥
एकमेकं क्रमाद्दत्त्वा शेषे न्यूनाम्बुजद्वयं ।
विलोक्य चिन्तयामास शिवभक्ता समुद्रजा ॥४४॥
अहो नु किमिदं जातं क्व गतं पङ्कजद्वयं ।
चोरितं केन वा किंवा मया नैव चितं भ्रमात् ॥४५॥
धिङ्मामद्य चिधा नैव गणितं किल किं भवेत् ।
चयने चालनेऽर्चायां प्रत्यहं गणये मुहुः ॥४६॥
अद्यैवभक्तिशैथिल्यात् द्विरेव गणितं मया ।
तस्मान्मयैव विहितं भ्रान्त्यानर्थमेव हि ॥४७॥
किं कर्त्तव्यं भवेत् किंवा सङ्कल्पच्युतिरीच्यते ।
न कुत्रापि दिने पुष्पं परहस्तार्ज्जितं कृतं ॥४८॥
कथमद्य परद्वारा पङ्कजद्वयमानये ।
त्यक्त्वा पूजासनं नैव गन्तव्यमपि युज्यते ॥
अदत्तयोः पङ्कजयोरपि सङ्कल्पहानितः ॥४९॥
इत्येवं चिन्तयित्वा च मनसा निश्चिकाय सा ।
सस्मार वचनं विष्णो रतिकाले यथोदितं ॥५०॥
समुद्रकान्ते हे लक्ष्मि प्रिये तव कुचद्वयं ।

दत्तवान् कामदेवो मे पङ्कजद्वयमर्च्चकः ॥५१॥
अत एतेन हे लक्ष्मि सरसि त्वयि सुन्दरं ।
प्रीतिदं परमं चारु स्तनपङ्कजयुग्मकं ॥५२॥
अतएव स्तनावेतौ पद्मत्वे विष्णुवर्णितौ ।
न मिथ्या भवितुं योग्यौ पद्मावेतौ मतौ मम ॥५३॥
एताभ्यामर्च्चयामीशं पूर्णमस्तु सहस्रकं ।
अनेन कर्म्मणा प्रीतः केशवोऽपि भविष्यति ॥५४॥
इति निश्चित्य मनसा देवी पद्मालया शुभा ।
दधार कर्त्तृकां हस्ते छेत्तुं द्वे स्तनपङ्कजे ॥५५॥
स्तनाभ्यामिदमप्यूचे हर्षिताभ्यां सुहर्षिता ।
यथा नमति मे मौलिर्देवदेवं महेश्वरं ।
तथा स्तनौ मत्सरोजे भवतं शिवपूजने ॥५६॥
यथैव शङ्करः कृष्णो न भिन्नौ भवतः क्वचित् ।
तथा युवां नातिभिन्नौ भवतं पङ्कजात् स्तनौ ॥५७॥
हे स्तनौ मयि चेज्जातौ करमूर्द्धमुखादिवत् ।
तदास्तं शम्भुपूजाब्जसहस्रपूरकौ मम ॥५८॥
इत्युक्त्वा सा स्तनं वामं धृत्वा वामेन पाणिना ।
चकर्त्त पाणिना भक्त्या दक्षिणेन सकर्त्तृणा[१] ॥५९॥
छित्वा चाविकलात्मैकं स्तनं कमलसन्निभं ।
प्रफुल्लचारुशोणाभं स्पृष्टं पूर्वञ्च विष्णुना ॥
पश्चाच्चरेण मन्त्रेणास्मरन्ती छेदवेदनां ।

---

१ A has स-कर्त्रिया ।

छित्वा दत्त्वा स्तनं वामं मत्वात्मानं कृतार्थिकां ।
अपरं छेत्तुमारेभे स्तनं दक्षिणमुन्नतम् ॥६०॥६१॥६२॥
अकस्मात्तु स्तनच्छेदादृणीभूतो महेश्वरः ।
नोत्सहे द्रष्टुमीशानश्छेत्स्यमानं स्तनं परं ॥
आविर्भूय स्वर्णलिङ्गात् जगाद त्वरया श्रियं ॥६३॥

शिव उवाच ।

मातः समुद्रतनये मा मा छिन्धि स्तनं परं ।
यत्ते छिन्नः स्तनो वामो जायतां पुनरेव सः ।
ज्ञाता ते परमा भक्तिः पूर्णस्ते च मनोरथः ॥६४॥
यश्च छिन्नस्तनो दत्तो मल्लिङ्गोपरि ते शुभे ।
सोऽस्तु वृक्षः क्षितौ पुण्यो नाम्ना श्रीफल इत्युत ॥६५॥
मूर्त्तिमांस्तव वै भक्तिवृक्षः श्रीफलनामकः ।
त्वत्कीर्त्तये क्षितावास्तां यावच्चन्द्रदिवाकरौ ॥६६॥
स तरुर्मम वै लक्ष्मि परमः सुप्रियो भवेत् ।
तत्पत्रेणैव मे पूजा भविष्यति न चान्यथा ॥६७॥
स्वर्णमुक्ताप्रवालादिपुष्पाण्यन्यानि च ध्रुवं ।
श्रीफलच्छदने शस्यकलां नार्हन्ति कोटिकां ॥६८॥
यथा मे त्रीणि नेत्राणि यथा गङ्गाजलं मम ;
तथा प्रियतमो लक्ष्मि त्रिपत्रः श्रीफलच्छदः ॥६९॥

देव्युवाच ।

एवं वदति देवेशे लक्ष्मीः परमहर्षिता ।
रोमाञ्चितसमग्राङ्गी प्रणनाम पुनः पुनः ॥७०॥

ॐ नमः शिवाय शान्ताय कारणत्रयहेतवे ।
निवेदयामि चात्मानं त्वं गतिः परमेश्वर ॥७१॥
एवं गद्गदवाक्येन स्तुवन्तौ सा पुनः पुनः ।
शिवं प्रदक्षिणीकृत्य प्रणनाम पुनः पुनः ॥७२॥
उत्थायोत्थाय नमती स्थिरीभूता शिवाज्ञया ।
गद्गदोक्तिर्महेशानं लक्ष्मीः स्तौति पुटाञ्जलिः ॥७३॥

श्रीरुवाच ।

शशधरशुचिमूर्त्ते चन्द्रमौलेऽमलाभ
त्रिनयन मृदुचारुस्मेरवक्त्रामृताभ ।
धवलवृषभपृष्ठे भ्राजमान प्रसीद
प्रणतसदयदृष्टे देवदेवाधिदेव ॥७४॥
त्रिगुणमय विराजच्चञ्चधुस्तूरपुष्प
प्रविलसितसिताभ डिण्डिमध्वानवादिन् ।
सततसुखसुखाब्धौ त्वं शिवः सन् विहारी
जय जय जय शम्भो पार्व्वतीश प्रसीद ॥७५॥
भुवननिचयनीलाधार साकार शम्भो
अनलरविशशिक्ष्माश्वासभूताशुगेश ।
सृजसि हरसि पासि स्वेच्छया त्वं कथन्तद्
विदित इह ननु स्याः [1]ईदृशो वा इयान् वा ॥७६॥
मृतनिलयविचारी प्रेतधूल्याचिताङ्गो
विवसनकृतमालाकौकशो भूतनाथः ।

---

1 B and C read स्यादीदृश॰ ।

भवसि विभवभूतं त्वां पुनः साधुचित्तं
लसति धरितुकामं प्रेतभूमीवराष्ट्यं ॥७७॥
त्रिपुरहर महेश त्र्यच्च सर्व्वेश नाथ
प्रभव विभवनील श्वेतवक्त्र प्रसन्न ।
गिरिश गहनगोप श्रीगुरो नीलकण्ठ
जयकर हर दुःखं दुःखहन्तः प्रसीद ॥७८॥

देव्युवाच ।

इति स्तुवन्तीं सरिदीशपुत्रीं उवाच शम्भुः परमः प्रसन्नः ।
शुभे वरं प्रार्थय विष्णुपत्नि[1] श्रीस्तेऽहमीशो वरदो वराय॥७९॥

श्रीरुवाच ।

अद्याहं विष्णुपत्नीत्वं प्राप्ता[2] भक्त्येह भाविता[3] ।
दृष्टस्त्वञ्च महेशानः किमतोऽस्ति वरः परः ॥८०॥
त्वद्दर्शनात् प्राप्तवरा सदाहं निगदे यतः ।
नमः शिवाय शान्तायेत्येवमस्तु वरः परः ॥८१॥
भक्तिमेकां प्रयाचेऽहं शिवे त्वयि महेश्वरे ।
भक्तोपयुक्तकृत्यार्थं त्वमेव चतुरः परः ॥८२॥

देव्युवाच ।

इत्युक्तः स तथेत्युक्त्वा महेशोऽन्तर्दधे सखि ।
कपालमोचनक्षेत्रे वृक्षः श्रीफलकोऽर्जितः ॥८३॥
इति बृहद्धर्म्मपुराणे श्रीफलप्रादुर्भावे दशमोऽध्यायः ।

---

१ C has ०कान्ते ।  २ A reads प्राप्या ।
३ C has प्राप्ता तद्भक्तिभावतः ।

# एकादशोऽध्यायः ।

देव्युवाच ।

वैशाखे शुक्लपक्षस्य तृतीयायां सखिद्वय ।
जातो वै श्रीफलतरुर्म्माहात्म्यं तस्य कथ्यते ॥१॥
जाते तु श्रीफलतरौ देवाः सर्व्वे सवासवाः ।
ब्रह्मा नारायणश्चापि देवपत्न्यः समागताः ॥२॥
ददृशुः स्निग्धविटपं त्रिपत्रैः सुदलैर्युतं[1] ।
दीप्यमानं तेजसैव शिवरूपं शिवप्रदं ॥३॥
प्रणेमुः सिषिचुस्तत्र वासश्चक्रुः सुखान्विताः ।
तत्र चणाय भगवानुवाच विष्णुरव्ययः ॥४॥

भगवानुवाच ।[2]

अयं नाम्ना विल्व इति मालूरः श्रीफलस्तथा ।
शाण्डिल्यश्चाथ शैलूषः शिवः पुण्यः शिवप्रियः[3] ॥५॥
देवावासस्तीर्थपदः पापघ्नः कोमलच्छदः ।
जयो विजयनामा च विष्णुस्त्रिनयनो वरः ॥६॥
धूम्राक्षः शुक्लवर्णश्च संयमी श्राद्धदेवकः ।
इत्येकविंशतिं नाम्ना दधात्येष तरूत्तमः ॥७॥

---

१ C has मृदुलै° ।
२ C has विष्णुरुवाच ।
३ B has शिवप्रदः ।

धनुःशतञ्चास्य मूलात् खञ्चाग्रात्तीर्थमुच्यते ।
अधोभूमेस्तथा तीर्थमतस्तीर्थत्रयं सखि ॥८॥
ऊर्द्धपत्रं हरो ज्ञेयः पत्रं वामं विधिः स्वयं ।
अहं दक्षिणपत्रञ्च त्रिपत्रत्वमित्यतः ॥९॥
अस्य छायाञ्च पत्रञ्च लङ्घयेन्न पदा स्पृशेत् ।
हरते लङ्घनादायुः पादस्पर्शात् श्रियं हरेत् ॥१०॥
पद्मपुष्पसहस्रस्य फलमत्र ममापि च ।
दर्शने प्रणतौ स्पर्शे स्थानसम्मार्ज्जने तथा ।
पूजने चयने दाने क्रमान्मन्त्रानुदीरये[१] ॥११॥
विल्ववृक्ष महाभाग महेशस्य सदा प्रिय ।
शिवदर्शनकृज्ज्योतिः प्रसीदाश्रिसुतास्तन ॥१२॥
नर एतेन मन्त्रेण प्रफुल्लाक्षः प्रगे शुभं ।
प्रपश्येत् स शिवं पश्येत् प्रणमेत्तदनन्तरं ॥१३॥
ॐ नमो विल्वतरवे सदा शङ्कररूपिणे ॥
सफलानि ममाङ्गानि कुरुष्व शिवहर्षद ॥१४॥
मन्त्रेणानेन मालूरमष्टाङ्गैः प्रणमेत् कृती ।
स वैष्णवो मतो भक्तः स मे प्रियतमः[२] परः ॥१५॥
शिवपूजक मालूर प्रियस्पर्श महातरो ।
स्पृशामि त्वां महापापसञ्चयान्मे प्रणाशय ॥१६॥
देववृक्षवर श्रेष्ठ स्थलन्ते सुमनोहरं ।

---

१ B and C have उदीरयेत् ।
२ C has प्रियतरः ।

क्रोड़न्थ्यागत्य विबुधा मार्जये तत् प्रसीद मे[1] ॥१७॥
मन्त्रेणानेन विल्वस्य दशहस्तस्थलं मृजेत्।
सगोमयजलैः प्रातःसमये स तु वैष्णवः ॥१८॥
ॐ द्रुमाय श्रीफलाय नमो दशभिरक्षरैः।
मन्त्रेण पूजयेद्विल्वं जपेच्छक्तिक्रमात्तथा ॥१९॥
पुण्यवृक्ष महाभाग मालूर श्रीफल प्रभो।
महेशपूजनार्थाय त्वत्पत्राणि चिनोम्यहं ॥२०॥
मन्त्रेणानेन चिनुयात् विल्वपत्राणि भक्तितः।
पश्चात्तदादशीसायंमध्याह्नभिन्नकालतः ॥२१॥
शाखाभङ्गो न कर्त्तव्यो नैवारोहेत् तथा तरुं।
वरमारुह्य चिनुयात् न शाखाभञ्जनं क्वचित् ॥२२॥
खण्डितैश्च शिवः पूज्यः पत्रैरन्यस्त्वखण्डितैः[2]।
षण्मासानन्तरं विल्वपत्रं पर्य्युषितं भवेत् ॥२३॥
पूज्या एतेन वै देवाः सूर्य्यलम्बोदरौ विना।
विल्ववृक्षवनं यत्र सा तु वाराणसी पुरी ॥२४॥
पञ्चविल्वद्रुमा यत्र तत्र तिष्ठेत् स्वयं हरः।
सप्तविल्वद्रुमा यत्र तत्र दुर्गायुतो हरः ॥२५॥
एको विल्वतरुर्यत्र तत्र शम्भुर्मया सह।
विल्ववृक्षा यत्र दश तत्र शम्भुर्गणैः सह ॥२६॥
एतान्युक्तानि तीर्थानि देवाः सर्व्वमरुद्गणैः ॥२७॥

---

१ A has ते। २ C has पत्रैरस्य त्वखण्डितैः।

यत्र वाव्यां गृहस्थस्य कोणे ईशाननामके ।
जायते श्रीफलतरुर्न तत्र विपदः क्वचित् ॥२८॥
पूर्व्वस्यां सुखदः स स्यात् दक्षिणे यमभीतिहा ।
पश्चिमे च प्रजादायी वृक्षो विल्व उदाहृतः ॥२९॥
श्मशाने च नदीतीरे प्रान्तरे वा वनान्तरे ।
विल्ववृक्षतलं प्रोक्तं सिद्धपीठस्थलं सुराः ॥३०॥
न मध्यप्राङ्गणे वृक्षं स्थापयेत् श्रीफलाख्यकं ।
दैवाद्यदि प्रजायेत तदा शिववदर्च्चयेत् ॥३१॥
चैत्रादिचतुरो मासान् शम्भवे परमात्मने ।
दत्तं स्याद्विल्वपत्रैकं लक्षधेनुसमं सुराः ॥३२॥
मध्याह्नकाले ये मर्त्त्या विल्वं कुर्य्युः प्रदक्षिणं ।
तैः सुमेरुगिरिवरः कृत एव प्रदक्षिणं ॥३३॥
न छिन्द्यात् श्रीफलतरुं न दहेत् काष्ठमेव च ।
विना ब्राह्मणयज्ञार्थं पतितो विल्वविक्रयी ॥३४॥
पङ्कं विल्वसमिद्घृष्टं यो धत्ते मूर्द्ध्नि मानवः ।
यमाधिकारो[१] नात्र स्यात् कृतपापेऽप्युपातके ॥३५॥
विल्वपत्रं फलं वीजं भूमौ पतितमीश्वरः ।
स्वयं गृह्णाति शिरसा वैयर्थ्यभयशङ्कितः ॥३६॥
चैत्रादिचतुरो मासान् सिञ्चेत् विल्वतरुं कृती ।
यथाक्षिगधो भवेद्वृक्षस्तथा तत् पितरोऽपि च ॥३७॥

---

१ A has मभाधिकारो नात्र स्यात् कृतपापेऽप्यपातके ।

चैत्रादिचतुरो मासान् सदा भ्रमति शङ्करः।
नवीनविल्वपत्रार्थी भक्तिमुक्तिप्रदायकः॥३८॥
हरिद्रानगरे यत्र वैद्यनाथो महेश्वरः।
तत्राचयो विल्ववृक्षः स्वर्णवृक्ष उदाहृतः॥३९॥
कामरूपे कामतरुः काश्यामुक्तस्तथादिमः।
काञ्चीपुरेऽपरः[१] प्रोक्तः श्रीफलोऽचयपुण्यदः।
तेऽपि तीर्थविशेषाः स्युस्तीर्थेष्वपि सदातनाः॥४०॥

देव्युवाच।

एतस्मिन्नेव काले तु शम्भुरागत्य वै सखि।
ब्रह्मणा विष्णुना पत्रैः पूजितः श्रीफलैरभूत्॥४१॥
ततः सर्व्वे यथास्थानं जग्मुर्न्नारायणादयः।
कथितोऽयं मया सख्यौ विल्ववृक्षस्तरूत्तमः॥४२॥
अयं वां सम्प्रोक्तः शिवकथापुण्यनिचयः
पवित्रः श्रोतव्यः श्रवणरमणीयः खलु सतां।
शिवे विष्णौ भेदापहरण उदारः सुमनसां
सुसेव्यः पापस्य प्रभवति शिवस्यापि निकटे॥४३॥

इति वृहद्धर्मपुराणे विल्ववृक्षमाहात्म्यं[२] एकादशोऽध्यायः।

---

१ C has पुरः।

२ B has विल्वमाहात्म्यं।

# द्वादशोऽध्यायः ।

सख्यावूचतुः ।

उक्तस्त्वया महेशानि तुलसीविल्वसम्भवः ।
अनयोस्तुल्य एकः कः शिवविष्णुप्रियस्तरुः ॥१॥
तदावां श्रोतुमिच्छावः शिवसुन्दरि कथ्यताम् ।
त्वं सखी स्वामिनी त्वं वां त्वं वां परमदेवता ॥२॥

देव्युवाच ।

अस्ति विल्वतुलसीतरुतुल्यः
पुण्य एक उत विष्णुशिवार्हः ।
नामतोऽमलक इत्यपि सख्यौ
रोपितः कमलयाथ मयापि ॥३॥

कदाचित् देवयात्रायां प्रभासपुण्यतीर्थके ।
सर्व्वे देवाः समायाता दिने पुण्ये च कुत्रचित् ॥४॥
तत्रायातः स्वयं ब्रह्मा हंसारूढश्चतुर्मुखः ।
शिवो भूतगणैः सार्द्धं चन्द्रमौलिर्मया सह ॥५॥
लक्ष्म्या च सह गोविन्दः प्रसन्नवदनः[1] सुरैः ।
इन्द्रः सुरपतिश्चैव वह्निः शमननैरृतौ ॥६॥
यादोभिर्वरुणश्चैव पवनः स्वगणैः सह ।
कुवेरो धनदः श्रीमान्महेश्वरधनाधिपः ॥७॥
ईशानश्च स्वयं देवः शिवमूर्त्तिः सनातनः ।

---

१ A has प्रसन्नवदनैः ।

इत्यादयो देवगणा नारदाद्यैः सुरर्षिभिः ॥८॥
गौतमः कश्यपः साक्षात् वशिष्ठश्च्यवनोऽसितः ।
कण्वो[1] मेधातिथिर्व्यासः पलाशश्च पराशरः ॥९॥
विश्वामित्रः सजावालिर्जैमिनिश्च तपोधनः ।
आर्ष्टिषेनः पिप्पलादोऽप्यङ्गिराः पैल एव च ॥१०॥
जामदग्न्यो भरद्वाजो जैगीषव्यः स्वयं मुनिः ।
इत्याद्या मुनयः सर्व्वे सशिष्याः सुकुतूहलैः ॥११॥
आजग्मुर्ऋषयः सर्वे वेदवेदाङ्गपारगाः ।
ते सर्वे पुण्यकर्म्माणि चक्रुरेव यथोचितं ॥१२॥
सर्वे संहृत्य मुदिताः शिवं कृष्णं विधिन्तथा ।
अपूजयन् सुराधीशास्तीर्थभूतान् स्वयंप्रभान् ॥१३॥
तत्राहञ्च स्वयं लक्ष्मीरेकस्थाने समागते ।
नानाकौतूहलकथाश्चकार हि तया सह ॥१४॥
तत्रावयोर्म्मतिर्जाता शिवविष्णुप्रपूजने ।
अहं श्रियमवोचञ्च सामुद्रि शृणु मे मतिं ॥१५॥
स्वकल्पितेन द्रव्येण पूजयेऽहं हरिं प्रभुं ।
हरिः प्राणभृतामात्मा पूज्यश्च परमः सताम् ॥
तच्चिन्तय महाभागे किं सृष्ट्वा पूजये हरिम् ॥१६॥

देव्युवाच ।

इत्यूचे च[2] यदि मया तदा श्रीरपि हर्षिता ।
रोमाञ्चिताङ्गी सजये दण्डवत् प्रणनाम माम् ॥१७॥

---

१ A has कर्णो । २ A has इत्यवोचं ।

अहन्तु प्रणतां लक्ष्मीं समुत्थाप्य च बाहुना।
समालिङ्ग्य[1] समुत्थाय गाढ़मेव शुभाननाम् ॥१८॥
मामुवाच ततो लक्ष्मीर्गद्गदाक्षरभाषिणी।
ममाप्येवं मतिर्जाता त्वमवोचः स्वयं यथा॥
स्वकल्पितेन द्रव्येण पूजयेऽहं महेश्वरं[2] ॥१९॥

देव्युवाच।

सजये विजये देवि नाविवं भूतयोस्तदा।
नयनेषु सुजातानि अमलाश्रुजलानि च ॥२०॥
तानि नौ नयनेभ्यश्च निपेतुर्भुवि हे सखि।
अमलानि कानि नाम द्वयोरेव त्वसम्मुदोः ॥२१॥
ततो जाता द्रुमाः पृथ्व्यां चत्वारो विमलप्रभाः।
ख्याता आमलकी नाम्ना जाताः कादमलाद्यतः ॥२२॥
श्यामलच्छदवृन्तास्ते कर्ब्बूरस्कन्धमूलकाः।
शिवाग्रथितपर्व्वाली पञ्चमालैकपत्रकाः[3] ॥२३॥
विल्वस्य च तुलस्याश्च ये गुणाः कथिताः सखि।
ते ते गुणाः सर्व्व एव आमलक्यां समाश्रिताः ॥२४॥
पञ्चमालादलैरस्याः शिवविष्णुसुरेश्वरौ।
सर्व्वथा पूजितौ स्यातां सख्यौ नास्त्यत्र संशयः ॥२५॥
माघे मासि सितायां तामेकादश्यां समुद्भवां।
शुभामामलकीं दृष्ट्वा समेताः सर्वदेवताः ॥२६॥

---

१ C has समालिङ्ग्य।  २ C has त्रिलोचनम्।
३ A and C have शिवाग्रथितपत्राणी पञ्चमालाकपत्रकाः।

ऋषयस्ते सशिष्याश्च हर्षमापुः परं तदा।
शिवाच्युतस्वरूपञ्च दहृशुस्तुष्टुवुस्तदा ॥२७॥
नमाम्यामलकीं देवीं पञ्चमालाखलंकृतां।
शिवविष्णुप्रियां दिव्यां श्रीमतीं सुन्दरप्रभां ॥२८॥
एतेन खलु मन्त्रेण सर्वा अस्याः क्रिया मताः।
एतामुद्दिश्य तीर्थानि त्रीण्युक्तानि मनीषिभिः ॥२९॥
विल्ववृक्षवदेवेह पृथिव्यां कर्म्मणां स्थले।
सिषिचुस्तामामलकीं सर्वतीर्थजलैर्द्विजाः ॥३०॥
अथ सर्वसुराणाञ्च मुनीनाञ्च तदाग्रतः[१]।
मया संपूजितः कृष्णः श्रीश्च शम्भुमपूजयत् ॥३१॥
तदा जयजयध्वानो बभूव चितिमण्डले।
आकाशे पुष्पवृष्टिस्च शङ्खशब्दाश्च पुष्कलाः ॥३२॥
दृष्टा ह्यामलकीं[२] देवी दधारानन्दमुत्तमं।
तेन धात्रीति नाम्नापि राजलामलकी शुभा ॥३३॥
नमस्कृत्य ह्यामलकीं गता देवा द्विजास्तथा।
ब्रह्मविष्णुशिवाश्चापि तत्राधिष्ठानमाश्रिताः ॥३४॥
जाता ह्यामलकी देवी परमानन्ददायिनी।
मान्या स्थाप्या च पूज्या च प्रणन्तव्या सखीद्वय ॥३५॥
इति वृहद्धर्मपुराणे आमलकीप्रादुर्भावो द्वादशोऽध्यायः।

---

१ B has तदाश्रुतः।
२ For verses 33, 34 and 35 B has
दृष्ट्वा ह्यामलकी देवी परमानन्ददायिनी।
मान्या स्थाप्या च पूज्या च प्रणन्तव्या सखिद्वय ॥

## त्रयोदशोऽध्यायः ।

---

देव्युवाच ।

अथातः शृणुतं सख्यौ देशतीर्थानि नामतः ।
गङ्गाया अन्यतो यानि विश्रुतानि चितौ खलु ॥१॥
प्रभास इति विख्यातो देशः पुण्यतमः सखि ।
यत्र चन्द्रो दक्षशप्तो विमुक्तो यक्ष्मणा बभौ ॥२॥
ततः पश्चिमतो नाम्ना तीर्थं सख्यौ पृथूदकम् ।
यत्राब्धिः स्वयमागत्य स्नाति प्रतिदिनं दिनम् ॥३॥
ततो विन्दुसरो नाम तीर्थं सख्यौ सुविश्रुतम् ।
विधेर्यत्र गतस्याभूदानन्दाश्रुस्रवो बहुः ॥४॥
यत्र स्वयं तपस्तेपे कर्द्दमो वै प्रजापतिः ।
तत उत्तरतस्तीर्थं ब्रह्मतीर्थमिति श्रुतम्[१] ॥५॥
यत्र पूर्वमुखी देवी नदी याति सरस्वती ।
तस्य पश्चिमतो नाम नैमिषारण्यमुत्तमम् ॥६॥
सततं यत्र मुनयस्तिष्ठन्ति सत्क्रियान्विताः ।
यत्र नास्ति कलिर्द्देवः सत्त्वहारी नृणां सदा ॥
शृणुतं येन तत् चेत्रं प्रशंसन्त्यृषयः सदा ॥७॥

---

१ B omits verse 5.

पुरा सर्वे मुनिगणाः सशिष्याः कलिसन्निधौ।
ब्रह्माणं शरणापन्नाः कलिभीता अथावदन् ॥८॥

ऋषय ऊचुः।

ब्रह्मन्नव्यय देवेश सत्त्वमूर्त्ते सनातन।
चतुर्वक्त्र चतुर्बाहो हंसवाह नमोऽस्तु ते ॥९॥
नमः श्वेताय नीलाय ब्रह्मणे शोणशोचिषे।
सर्जकब्रह्मणे रक्षाब्रह्मणे प्रलयाय च ॥१०॥
ब्रह्मणे ते नमस्तुभ्यं प्रमागम्याय ते नमः।
प्रणवाधिष्ठातृदेव तुभ्यं [ब्रह्मन्नमो नमः ॥११॥
नमः कमलभूताय कमलासनसंस्थित।
चतुर्मुख नमस्तुभ्यं नमस्तेऽष्टविलोचन ॥१२॥
नमोऽक्षसूत्रपाणे ते कमण्डलुकराय च।
नमः पुस्तकहस्ताय नमस्ते कुशपाणये ॥१३॥
सदा तिलकिने तुभ्यं सदा][1] वद्धशिखाय च।
सदोपवीतिने तुभ्यं सत्यवाक्याय ते नमः ॥१४॥
गायत्रीपतये तुभ्यं ब्राह्मणाय नमो नमः।
नमो विष्णुशिवाराध्य देवर्षीड़ित ते नमः[2] ॥१५॥
नमस्ते ऋग्यजुःसामाथर्ववेदविदे नमः।
अनादिमध्यनिधनसर्वज्ञाय नमो नमः ॥१६॥

---

१ B omits the portion bracketted.

२ B has देवर्षिऋषभे.।

ब्रह्मोवाच।

प्रसन्नो वोऽहमृषयः स्वाभिप्रायं वदन्तु च।
आगता वा कथं यूयं तन्मे कथयतर्षयः॥१७॥

ऋषय ऊचुः।

पृथिवी कलिना व्याप्ता नृणां सत्यापहारिणा।
वयं तपोधना ब्रह्मन् कुत्र तस्यामहे क्षितौ॥१८॥

देव्युवाच।

इत्युक्तः स तदा ब्रह्मा चिन्तयामास च त्रिधा।
तस्य चिन्तयतोऽत्यर्णोऽभूद्देवः कश्चिन्महाप्रभः॥१९॥
शशाङ्ककोटिधवलो द्विबाहुश्च त्रिलोचनः।
श्वेतमाल्याम्बरधरः स्मितशोभिशुभाननः॥
दधानो हस्तयुग्मेन जपमालाकमण्डलू।
तं दृष्ट्वा मुनयः सर्वे कोऽयमित्यब्रुवन् विधिम्॥२०॥२१॥

विधिरुवाच।

एष वै निमिषो नाम सत्त्वमूर्त्तिः सनातनः।
सत्यकालोचिततनुर्युष्मदर्थेऽभ्युपस्थितः॥२२॥
एनमग्रसरं कृत्वा यूयं गच्छत भूतले।
यत्रैष तत्र गन्तव्यं स्थातव्यं यत्र तिष्ठति॥२३॥
यत्र चान्तर्हितो ह्येष भविष्यति हरेस्तनुः।
स देशः कलिना त्यक्तो युष्मदिष्टो भविष्यति॥२४॥

देव्युवाच।

इत्युक्तास्ते मुनिगणा ब्रह्मणा क्षेमदायिना।

निमिषाग्रेश्वरा जग्मुर्ब्रह्मलोकाद्धरातलम् ॥२५॥
उत्तरं कुरुमागत्य भूमिष्ठास्ते तदाभवन् ।
अतीत्य पर्वतान् सर्वान् वर्षाणि षड़तीत्य च ।
हिमाद्रेर्दक्षिणे वर्षे भारताख्ये च बभ्रमुः ॥२६॥
तत्रैकत्र स्थले पृथ्व्यां सौराष्ट्रस्य समीपतः ।
विप्राः सोऽन्तर्दधे श्वेतो निमिषाख्यः सखोदय ॥२७॥
तत्र चान्तर्हिते देवे मुनयस्ते महाव्रताः ।
सर्व्वं नारायणमयं ददृशुः स्थावरादिकं ॥२८॥
विस्मिता मुनयः सर्व्वे जगदुस्तत्र ते मिथः ।
इदमेवोत्तमक्षेत्रं निमिषक्षेत्रमाहितम् ॥
अस्पृष्टं कलिना नृणां परमक्षेमदायकम् ॥२९॥
अत्र ये पशुपक्ष्याद्या लताद्रुमनरादयः ।
सर्वे नारायणा एव यथा गङ्गातटक्षितौ ॥
यज्ञाध्ययनदानानां स्थानमेकमिदं स्मृतम् ॥३०॥
जम्बुद्वीपक्षितौ तत्र भारतं वर्षमुत्तमं ।
तत्रापि नैमिषारण्यं तीर्थं परममुच्यते ॥३१॥
इत्युक्त्वा मुनयः सर्व्वे तत्र वासं दधुश्चिरं ।
जुहुवुः सततपस्विरः सस्तुः कृष्णपरायणाः ॥३२॥
एतत्तु वैष्णवक्षेत्रं नैमिषारण्यसंज्ञितम् ।
अधिष्ठायाद्यापि विप्राः कुर्व्वन्ति सत्क्रियाः सदा ॥३३॥
यत्र सूत उग्रश्रवा लोमहर्षणजो महान् ।
श्रावयामास बहुधा पुराणानि सुधीः शुचिः ॥३४॥

एतद्वां कथितं सख्यौ नैमिषारण्यसम्भवं ।
एतद् यः शृणुयात् सोऽपि मुच्यते कलिदोषतः ॥२५॥
अत्र यत् कथितं स्तोत्रं ब्रह्मणः परमात्मनः ।
तत् श्रुत्वा ब्राह्मणो मोक्षमन्ये जन्मान्तरे सति ॥
जायते ब्राह्मणो विद्वान् मुक्तिपात्रं हरेस्तनुः ॥२६॥

इति बृहद्धर्मपुराणे नैमिषारण्यसम्भवो नाम त्रयोदशोऽध्यायः ।

---

# चतुर्द्दशोऽध्यायः ।

---

देव्युवाच ।

पुलहस्याश्रमस्तीरे गण्डक्यास्तीर्थमुत्तमम् ।
गण्डकी च नदी तीर्थं गिरेर्गण्डकतो भवा ॥१॥
यत्र शालग्रामशिला वज्रकीटेन निर्म्मिताः ।
भवन्ति तन्महत्तीर्थं क्षितौ त्रैलोक्यविश्रुतम् ॥२॥
अगस्त्याश्रमस्तत्र मलयस्तीर्थमुच्यते ।
महेन्द्रपर्व्वते चैव भृगुरामस्य चालयः ॥३॥
कावेर्य्याश्च तटे तीर्थं रङ्गनाथस्य चालयः ।
विन्ध्ये गिरौ च वासन्तीनिलयस्तीर्थमुच्यते ॥४॥
श्रीशैलं ऋषभश्चैव पर्वतं प्राङ्करेव च ।
पम्पासरःसरस्तीर्थं गोकर्णाख्यं शिवस्थलम् ॥५॥
सूर्पारकं तथा तीर्थं दण्डकारण्यमेव च ।
माहिष्मती पुरी चैव विशाला च तथा पुरी ॥६॥
त्रितकूपं परं तीर्थं काञ्चीद्वयञ्च वेङ्कटम् ।
तीर्थमाङ्कस्तथा वेणा कावेरी च सरस्वती ॥७॥
यमुना सरयू पम्पा चन्द्रभागा च कौशिकी ।
गोदावरी विपाशा च नर्मदा च सरिद्वरा ॥८॥
विपाशा कृतमाला च ताम्रपर्णी वटोदका ।
एतानि जलतीर्थानि कथितानि मनीषिभिः ॥९॥

[मथुरा द्वारका चैव तथा गोवर्द्धनो गिरिः ।
वृन्दावनं महातीर्थं यमुनायास्तटे शुभे ॥१०॥
कुरुक्षेत्रं तथा यत्र जामदग्न्यस्य वै यशः ।
सामुद्रश्च तथा सेतुरयोध्या च तथा पुरी ॥११॥
गोतमस्याश्रमः पुण्यं तीर्थं प्रोक्तं मनीषिभिः[१]] ।
तीरे ब्रह्मनदस्यापि कामकोष्ठी च पुण्यदा ॥१२॥
कामरूपमिति ख्यातं यत्र योनिः शिवा मता ।
दक्षालये मृतायाः मे यत्र योनिः पपात ह ॥१३॥
उज्जयिन्यां तथा पुर्य्यां पीठं मङ्गलकोष्ठकम् ।
शुभा मङ्गलचण्ड्याख्या यत्राहं वरदायिनी ॥१४॥
ज्ञातयो बहवो यत्र मतं तत्तीर्थमुत्तमं ।
हिंसा न कार्य्या ज्ञातीनां ज्ञातिपूजारतो भवेत् ॥१५॥
सहस्रब्राह्मणैस्तुल्य एकः स्वजन उच्यते ।
ब्राह्मणः स्वर्णतुल्यः स्यात् स्वजनस्य तुषो मतः[२] ॥१६॥
पुष्णीत स्वजनं दीनं सहायः स्याद्विपत्तिषु ।
कर्मणा मनसा वाचा ध्यायेत् स्वजनमङ्गलम् ॥१७॥
स्वजनाय ऋणं दत्त्वा यो गृह्णात्यधिकेन तत् ।
तस्य वंशविलोपः स्यान्मृतः प्रेतत्वमाप्नुयात् ॥१८॥
अपुत्रं स्वजनं स्वेन पुत्रेण पुत्रिणञ्च यः ।
कुरुते स भवेत् सख्यौ जन्म जन्म प्रजापतिः ॥१९॥

---

१ B omits the portion bracketted.
२ B has स्वजनस्तृणसमो मतः। C has स्वजनस्य तु यो मतः।

बान्धवन्तु विषीदन्तं यः स्थापयति बान्धवः ।
शिवलिङ्गसहस्रस्य प्रतिष्ठाता स गीयते ॥२०॥
अप्यकार्य्यशतं यस्तु ज्ञात्यर्थे कुरुते जनः ।
न स दोषेण लिप्तः स्यात् सखीह्यत्र न संशयः ॥२१॥
पातकादुद्धरेत् ज्ञातिं दोषान्नापि प्रकाशयेत् ।
स्वदोषानपि न ज्ञातौ गोपयेत् तारके[1] ततः ॥२२॥
राजद्वारं बान्धवार्थे न गच्छेत् परितापितः[2] ।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥२३॥
आत्मनः साधुशीलेन ज्ञातिवर्द्धिं सदा नरः ।
शान्तयद्वायकार्य्ये[3] तु नोपेचेत[4] कदाचन ॥२४॥
ज्ञातिश्रेष्ठः स एव स्यात् नैव दोषैश्च लिप्यते ।
अतएव ज्ञातिदेशः परमं तीर्थमुच्यते ॥२५॥
प्रसङ्गात् कथितं सख्यौ ज्ञातिकार्य्यमिदं मया ।
यः शृणोति पठेच्चैतत् स ज्ञातिप्रियकृद्भवेत् ॥२६॥
जलतीर्थं पुष्करं स्यात् देशतीर्थं गया मतं ।
पुराणपठनं यत्र यत्र पद्मवनानि च ॥२७॥
तत्र तीर्थं समाख्यातं गुरुदेवगृहं तथा ।
शालग्रामशिला यत्र तीर्थन्तत् क्रोशयुग्मकम् ॥२८॥

---

१ B and C have तारयेत् ।
२ A and C have पारितोऽपि च ।
३ B has राजकार्य्येषु ।
४ A and C have नापेच्चेत ।

वैद्यनाथसमाख्यातं तीर्थं कैलाससम्मितम् ।
वक्रेश्वरस्थलञ्चैव सुतीर्थं समुदाहृतम् ॥२९॥
यत्र पापहरा नाम नदी पुण्यजला शुभा ।
ब्रह्माण्डाख्ये पुराणेऽस्य ज्ञेयं विवरणं शुभम् ॥३०॥
देवपीठानि सर्वाणि विख्यातानि क्षितौ सखि ।
तीर्थान्युक्तानि मुक्तीनां क्षेत्राणि विमलानि च[१] ॥३१॥
लवणाम्बुनिधेस्तीरे तीर्थं श्रीपुरुषोत्तमम् ।
मोक्षक्षेत्रं परं प्रोक्तं यत्रास्ते पुरुषोत्तमः ॥३२॥
वाराणसी च कामाख्या द्वारका पुरुषोत्तमः ।
प्रयागञ्च गया वृन्दावनं तीर्थोत्तमानि च ॥३३॥
वनवासगतो रामो यत्र यत्र व्यवस्थितः ।
तानि चोक्तानि तीर्थानि शतमष्टोत्तरं क्षितौ ॥३४॥

इति वृहद्धर्मपुराणे तीर्थप्रादुर्भावे चतुर्द्दशोऽध्यायः समाप्तः ।

---

१ C'has विविधानि च ।

## पञ्चदशोऽध्यायः ।

देव्युवाच ।

अथातः शृणु वक्ष्यामि तीर्थानीन्द्रियदेहतः ।
विप्राणां चरणौ तीर्थं[1] गवां पृष्ठं तथा मतम् ॥१॥
एते यत्र हि तिष्ठन्ति तत्र तीर्थमुदाहृतम् ।
स्त्रीणां सर्वाणि चाङ्गानि तीर्थान्युक्तानि सूरिभिः ॥२॥
बालानाञ्च शिरस्तीर्थं स्वं तीर्थं चक्षुरुच्यते ।
तथैव दक्षिणः कर्णस्तीर्थं स्वं परिगण्यते ॥३॥
सत्यवाक्यन्तु वाक्तीर्थं पुराणपठनन्तथा ।
देवलिङ्गधरं चित्तं तीर्थमित्युच्यते बुधैः ॥४॥
असच्चिन्ताविरहितं मानसन्तीर्थमुच्यते ।
दातृणाञ्च करौ तीर्थं देवपूजाकरौ तथा ॥५॥
अन्तस्तीर्थं भूतशुद्धा प्राणायामाश्च नासिके ।
मन्त्रितश्चासनन्तीर्थं पैतृकी वसतिस्तथा ॥६॥
अथातः शृणु वक्ष्यामि कालतीर्थानि सुन्दरि ।
वैष्णवानि च शाक्तानि शैवसौरादिकानि च ॥७॥
काल एको विभुः साक्षात् देवो नारायणः प्रभुः ।
क्रियाकृतेरवच्छेदैर्भेदात् स त्रिविधो मतः ।

---

१ B and C have तीर्थे ।

वर्त्तमानस्य भूतस्य भविष्यस्येति सोपधिः ॥८॥
सूर्य्यचन्द्रमसोर्गत्या परमाणुक्षणादयः ।
उपायोऽस्य च बहवो वैदिकव्यवहारतः ॥९॥
दण्डा मनुष्यमानेन षष्ठी रात्रिन्दिवं मतम् ।
ते पञ्चदश पक्षः स्यात् द्वौ पक्षौ मास उच्यते ॥१०॥
इन्दोः कलास्तु तिथयो वर्द्धमानाः परस्परं ।
शुक्लास्ता पञ्चदश वै शुक्लपक्ष इति स्मृतः ॥११॥
सर्वाणि देवकार्य्याणि स्नानदानोत्सवादयः ।
प्रशस्यन्ते तत्र सख्यौ शशी यत्र हि वृद्धिमान् ॥१२॥
अन्यास्च पञ्चदश वै कृष्णपक्ष उदाहृतः ।
क्षिणोति चन्द्रमा यत्र नाम्ना प्रतिपदादिषु ।
चन्द्रस्य तु बलं यत्र मतमापञ्चमीतिथि ॥१३॥
एवं पक्षौ शुक्लकृष्णौ पितृणां तदहर्न्निशम् ।
आश्विनाद्या मता मासाः सौरचान्द्रप्रमाणतः ॥१४॥
मासद्वयमृतुः प्रोक्तो यथैवं कार्त्तिकौ शरत् ।
एवं षडृतवो मासा द्वादशैवायने समा ॥
साहर्न्निशा च देवानामयनोत्तरदक्षिणे ॥१५॥
तत्राषाढ़ः कार्त्तिकस्य माघो वैशाख एव च ।
तीर्थान्युक्तानि मासा वै चत्वारोऽभीष्टदायकाः ॥१६॥
हविष्यं ब्रह्मचर्य्यञ्च कुर्य्यादेषु व्रती नरः ।
स्नानं दानं तपो होमो गुरुदेवद्विजार्च्चनम् ॥१७॥
इतिहासपुराणादिपाठश्रवणकर्म्मणी ।

कूपारामतडागादिदीर्घाद्याश्च क्रियाः शुभाः।
मासेष्वेषु प्रशस्यन्ते विप्रास्तीर्थास्तथा इव ॥१८॥
वैशाखे यो वसेत् काश्यां शुचौ श्रीपुरुषोत्तमे।
कामरूपे कार्त्तिके प्रयागे माघमासि च।
यत्र कुत्र मृतोऽप्येष निर्वाणमुक्तिभाग् भवेत् ॥१९॥
अथ वासौ च्चमीष्वेव कालेषु च स्थलेषु च।
अन्तर्जले वा गङ्गायां मृतोऽवश्यं तथा भवेत्[१] ॥२०॥
आषाढ़े पद्मकुसुमैः कार्त्तिके तुलसीदलैः।
दीपैर्बहुविधैश्चैव नैवेद्यैश्च यथोचितैः।
कुन्दैर्माघे विल्वपत्रैराधे स्वेष्टान् प्रपूजयेत् ॥२१॥
विशिष्टमासेष्वेतेषु कालतीर्थं विशिष्यते।
तृतीया नाम वैशाखे शुक्ला नाम्नाक्षया तिथिः।
हिमालयगृहे यत्र गङ्गा जाता चतुर्भुजा ॥२२॥
पुराणे कथिता या च युगाद्या प्रथमा सखि।
ततो जह्नुसप्तमी च यत्र नामास्तु जाह्नवी ॥२३॥
तत एकादशी शुक्ला कालतीर्थं हि माधवे।
ततो हि द्वादशी शुक्ला प्रशस्तजलदानिका[२] ॥२४॥
वैशाखी पौर्णमासी च संयुता च विशाखया।
शुक्लाषाढ़ा द्वितीया च वैष्णवी तिथिरुत्तमा ॥२५॥

---

१ B omits verse 20.
२ B has दायिका।

ततश्च सप्तमी सूर्य्य-प्रीतिदा दशमी ततः ।
मन्वन्तरा च विज्ञेया तत एकादशी शुभा ॥२६॥
हरेरतितरां प्रेष्ठा युक्ता भेनानुराधया ।
यत्र स्वपिति वै विष्णुराद्यपादे जगत्पतिः ॥२७॥
पौर्णमासी तथाषाढ़ी मता मन्वन्तरा तु या ।
ततो हि पञ्चमी शुक्ला नागदेवी-प्रियेष्यते ॥२८॥
अथैवं कार्त्तिके मासि द्यूतप्रतिपदित्यपि ।
शिवेन गिरिजया यत्र कृतं द्यूतं जयप्रदम् ॥२९॥
दीव्यन्ति भूमिपास्तत्र सेवन्ते तौ द्विजातयः ।
पराजये न कर्त्तव्यं दुःखचित्तं नृपैः सदा ॥३०॥
ततो भ्रातृद्वितीयेति यमुना यत्र चागतम् ।
अपूजयद्धर्मराजं स च तां भक्ष्यभूषणैः ॥३१॥
यमुना च यमश्चैव तौ परस्परपूजितौ ।
द्वितीयायै तु तिथये ददतुः प्रथमं वरम् ॥३२॥
द्वितीये शुक्लपक्षीये प्रिये भ्रातुः स्वसुः सदा ।
त्वयि ये सोदराः पूजां करिष्यन्ति मिथः सुखैः ॥३३॥
माल्यचन्दनताम्बूलैर्भोजनैर्विविधैः शुभैः ।
तेषां तासां यशः पापक्षयः स्वजनसङ्गतिः ॥३४॥
आयुर्वृद्धिश्च भवति धर्मवृद्धिर्दिने दिने ।
न चापि कलहं द्वेषं पापकर्म च किञ्चन ॥३५॥
पैशुन्यादि च नो कुर्य्यान्न चाध्ययनपाठने ।
ब्राह्मणान् भोजयेत् भ्रातॄन् भगिनीरपि पूजयेत् ॥३६॥

ततोऽष्टमी कालतीर्थं गवां मङ्गलपूजनम्।
ततो युगाद्या नवमी यत्र त्रेतायुगोद्भवः ॥२७॥
ततोऽपि द्वादशी तीर्थं या तु मन्वन्तरा श्रुता।
यत्र चोत्तिष्ठते विष्णुः शयनात् पापनाशकः ॥२८॥
ततो मन्वन्तरा नाम पौर्णमासी तु कार्त्तिकी।
यत्र दामोदरो देवो भक्त्या तु तुलसीदलैः।
प्रदीपैश्चारुनैवेद्यैरिष्ट आत्मानमर्पयेत् ॥२९॥
ततः कृष्णा च नवमी युगान्त इति कथ्यते।
माघे मासि सिता ख्याता चतुर्थी वरदा शुभा ॥४०॥
ततः श्रीपञ्चमी नाम यत्र लक्ष्मीः प्रपूज्यते।
महाकालीसरस्वत्यौ पूज्येते विविधार्च्चनैः ॥४१॥
ततोऽपि सप्तमी शुद्धा स्मृता मन्वन्तरा सखि।
अरुणोदयवेलायां तत्र स्नायात् शुचौ जले ॥४२॥
सूर्य्यायार्घं मुदा दद्यात् सप्तजन्माघमुक्तये।
गङ्गास्नानममुष्यान्तु सूर्य्यग्रहशतैः समं। ४३॥
स्नाने चार्क्कार्घदाने च मन्त्रावेतावुदीरयेत् ॥४४॥
यद्यज्जन्मकृतं पापं मया सप्तसु जन्मसु।
तन्मे रोगञ्च शोकञ्च माकरी हन्तु सप्तमी ॥४५॥
जननी सर्व्वभूतानां सप्तमी सप्तसप्तिके।
सप्तव्याहृतिके देवि नमस्ते रविमण्डले ॥४६॥
ततोऽष्टमी यत्र भीष्मो विष्णुं प्राप त्यजन्नसून्।
तत्र सन्तर्पयेत् भीष्मं सतिलाञ्जलिभिस्त्रिभिः ॥४७॥

वैयाघ्रपद्यगोत्राय सांकृतिप्रवराय[1] च।
अपुत्राय ददाम्येतत् सलिलं भीष्मवर्म्मणे ॥४८॥
अनेन खलु मन्त्रेण दद्यादम्भोऽञ्जलित्रयं।
पितरस्तेन तृप्ताः स्युर्विष्णुश्चापि सनातनः ॥४९॥
ततोऽपि नवमी नाम महानन्देति गीयते।
यत्र विष्णोर्महानन्दो भीष्मं प्राप्तस्य निर्वृतम् ॥५०॥
ततो माघी युगाद्या च पौर्णमासीति गीयते।
यत्राभिषिच्यते विष्णुः सुगन्धिपुण्यवारिभिः ॥५१॥
ततः कृष्णाष्टमी तीर्थं पितरो यत्र सर्व्वथा।
पूज्यन्ते साधुभिः शाकैर्यान्तः कलियुगस्य च ॥५२॥
ततश्चतुर्द्दशी कृष्णा रात्रियोगे शिवप्रिया।
अगण्यमहिमाद्या वै शिवरात्रिस्तु गीयते ॥५३॥
यस्यां पातालभूस्वर्गवासिनः शिवमोदिनः।
रात्रौ चतुर्षु यामेषु शिवः संपूज्यते मुदा ॥५४॥
उपवासश्च पूजा च जागरश्च प्रमोददः।
येषां भवन्ति तद्रात्रौ स कृती सर्व्वधर्म्मकृत् ॥५५॥
एष्वेकमपि पापघ्नं किं पुनस्त्रिविधो विधिः।
शम्भोश्चतुर्द्दशी रात्रिर्विष्णोर्जन्माष्टमी तथा।
देव्या महाष्टमी चैव मोक्षदाः स्युरुपोषणात् ॥५६॥
अमावास्या ततो नाम ख्याता मन्वन्तरा सखि।
चतुर्ष्वेतेषु मासेषु कालतीर्थानि विद्धि मे ॥५७॥

१ A has ०व्यासाङ्कृति०।

दिनानि खलु सर्व्वाणि सखि मासचतुष्टये ।
पुण्यानि कालतीर्थानि सत्कर्म्मार्हाणि सर्व्वतः ॥५८॥
तथाप्येतानि वां सख्यौ विशिष्य कथितानि च ।
मासेष्वन्येषु यान्येव सन्ति वच्यामि तानि च ॥५९॥

इति वृहद्धर्मपुराणे तीर्थकथने वैशाखादिकथनं
पञ्चदशोऽध्यायः ।

# षोडशोऽध्यायः ।

देव्युवाच ।

पञ्चमी चैत्रमासस्य शुक्ला तीर्थमुदाहृतम् ।
यत्र श्रीर्ब्रह्मलोकाद्धि संप्राप्ता मानुषालयम् ॥ १ ॥
तस्मात्तां पूजयेत्तत्र यस्तं लक्ष्मीर्न मुञ्चति[1] ।
एषा श्रीपञ्चमी कार्य्या विष्णुलोकगतिप्रदा ॥ २ ॥
ततः शुक्लाष्टमी चैत्रे ख्यातांऽशोकाष्टमीति या ।
यस्यामशोककलिकायुक्तं वारि पिबेन्नरः ॥ ३ ॥
भवत्यशोकभाक् तेन स्नात्वा देवीञ्च जाह्नवीम् ।
त्वामशोक हराभीष्ट मधुमाससमुद्भव ।
पिबामि शोकसन्तप्तो मामशोकं सदा कुरु ॥ ४ ॥
गङ्गे देवि शिवे मातरशोके शोकनाशिनि ।
इह लोके परत्रापि शोकं हर महेश्वरि ॥ ५ ॥
एताभ्यामेव मन्त्राभ्यां स्नानं गङ्गाजले चरेत् ।
अशोकपुष्पकलिकायुक्तं वारि पिबेदपि ॥ ६ ॥
ततः श्रीरामनवमी पुष्यानक्षत्रसंयुता ।
यस्यां रावणनाशाय प्रादुर्भूतो जनार्द्दनः ॥ ७ ॥
यस्यां ससीतासौमित्रिभरतं राममीश्वरम् ।

---

१ A has लक्ष्मीर्न मुञ्चति ।

संपूज्योपोष्य तत्प्रीत्यै न भूयो जन्म लभ्यते ।
दशम्यां भोजयेद्विप्रान् जुहुयाच्च तिलैः शतं ॥ ८ ॥
ततस्त्रयोदशी शुक्ला चैत्रे मासि श्रुता सखि ।
यस्यां संपूज्यते कामः सर्व्वकामसमृद्धये ॥ ९ ॥
ततश्चतुर्द्दशी नाम दमनाख्या[१] शिवप्रिया ।
तत्र ये मूलमन्त्रेण समूलदमनोच्चयम् ।
निवेदयन्ति गौरीशे तेषां चैत्रार्चनं फलम् ॥ १० ॥
चन्दनागुरुकर्पूरकुङ्कुमैर्माल्यवस्त्रकैः ।
नानाविधैश्च नैवेद्यैः पूजा कार्य्या सखीदय ॥ ११ ॥
ध्वजच्छत्रवितानादि देयं कार्य्यः प्रजागरः ।
महत्पुण्यमवाप्नोति चाश्वमेधशताधिकम् ॥ १२ ॥
ततः सौभाग्यदा चैत्री चित्रानक्षत्रसंयुता ।
तस्यां चित्रर्चगां पूजां कृत्वा चान्द्रपदं व्रजेत् ।
पूजयेन्मां भक्तिभावात् चन्द्रशोभितमस्तकाम् ॥ १३ ॥
वारेऽर्कगुरुमन्दानां चैत्रे मन्वन्तरा यदि ।
अश्वमेधाधिकं पुण्यं तत्र स्नात्वा लभेन्नरः ।
दानञ्चाक्षयतां याति पितॄणाञ्चापि तर्पणम् ॥ १४ ॥
वैशाखे मासि शुक्लायां तृतीयायां जनार्दनः ।
यवानुत्पादयामास युगञ्चारब्धवान् कृतम् ॥
ब्रह्मलोकात् त्रिपथगां पृथिव्यामवतारयत् ॥ १५ ॥
तस्यां कार्य्यो यवैर्होमो यवैर्विष्णुं समर्च्चयेत् ।

---

१ A and B have मदनाख्या ।

यवान्दद्यात् द्विजातिभ्यः प्रयतः प्राशयेद्‌यवान् ॥ १६ ॥
पूजयेच्छङ्करं गङ्गां कैलासञ्च हिमाचलम्।
भगीरथञ्च नृपतिं सागरानपि सर्व्वतः ॥ १७ ॥
स्नानं दानं तपः श्राद्धं जपहोमादिकञ्च यत्।
श्रद्धया कल्पते यत्तु तदानन्त्याय कल्पते ॥
गङ्गातीरे विशेषेण सर्व्वमक्षयमुच्यते ॥ १८ ॥
ज्यैष्ठशुक्लचतुर्थ्यान्तु जाता पूर्व्वमुमा सती।
तस्यां संपूजनीया सा स्त्रीभिः सौभाग्यवृद्धये ॥ १९ ॥
उपचारैश्च विविधैः नृत्यगीतोत्सवादिभिः।
होमं विल्वदलैः कुर्य्यात् ब्राह्मणान् भोजयेदपि ॥ २० ॥
अथ शुक्ला च दशमी ज्यैष्ठे दशहरा स्मृता।
हस्तर्क्षसंयुता भौमे वारे तीर्थे विशेषतः ॥ २१ ॥
अस्यां स्नानञ्च दानञ्च महापातकनाशनम्।
यां काञ्चित् सरितं प्राप्य दद्याद्दर्भतिलोदकम्।
पितृभ्यः पातकैस्तेन मुच्यते दशभिः परैः ॥ २२ ॥
गङ्गाञ्च पूजयेद्भक्त्या माल्यचन्दनकादिभिः।
गङ्गास्तवांश्च शृणुयात् भोजयेत् ब्राह्मणानपि ॥ २३ ॥
गङ्गावतीर्णा धरणीमस्यां शैलाद्धिमालयात्।
तस्मात् संपूजयेदत्र शम्भुं भूपं भगीरथम् ॥ २४
विरिञ्चिं कुलशैलांश्च धरणीं सागरानपि।
हंसकारण्डवाख्यांश्च[१] पक्षिणः स्त्रीगणानपि ॥

---

१ A and C have •ख्या•।

होमं कुर्य्याद्विशेषेण करवीरैः सितैः शतम् ॥२५॥
एवं दशहरा-पूजां यः करोति नरोत्तमः ।
ब्राह्मणः क्षत्त्रियो वैश्यः शूद्रो वा भक्तितत्परः ॥
अश्वमेधादयो यज्ञास्तेनैव तु कलौ कृताः ॥२६॥
पूर्णिमा ज्यैष्ठमासस्य युक्ता चेत् ज्येष्ठया भवेत् ।
महाज्यैष्ठीति विज्ञेया युक्ता वाप्यनुराधया ॥
शनिवारस्य योगस्तु फलाधिक्यात् प्रशस्यते ॥२७॥
महाज्यैष्ठ्यान्तु यः पश्येत् पुरुषः पुरुषोत्तमम् ।
विष्णुलोकमवाप्नोति मोचं गङ्गाम्बुमज्जनात् ॥२८॥
इन्दुग्रहसहस्राणां सूर्य्यग्रहशतेष्वपि ।
फलं दत्ते भगवती महाज्यैष्ठी महाफला ॥
स्नानदानजपादिस्व[१] गङ्गातीरे विशेषतः ॥२९॥
आषाढ्याः परतः कृष्णा पञ्चमी श्रवणायुता ।
अर्हा वाजसनीशाखाध्यायिनान्तु द्विजन्मनाम् ॥
उपाकर्मणि केषाञ्चित् केवलापि मता तथा ॥३०॥
सखि भाद्रपदेऽष्टम्यां कृष्णपक्षे कलौ युगे ।
अष्टाविंशतिमे जातः कृष्णोऽसौ देवकीसुतः ॥३१॥
गन्धमाल्यैस्तथा वस्त्रैर्यवगोधूमपिष्टकैः ।
सगोरसैर्भक्ष्यभोज्यैस्तथा बहुविधैः फलैः ॥
रात्रौ जागरणं कुर्य्यात् नृत्यगीतमहोत्सवैः ॥३२॥
निर्माय प्रतिमांस्तासु कृष्णं नन्दवधूस्तथा ।

---

१ A has जपिष्वपि ।

[१]देवकीञ्चापि संपूज्य लभेत् सर्व्वार्थसाधनम् ॥२३॥
अष्टम्यां केवलायाञ्च पूजा कार्य्या विधानतः ।
निशीथव्यापिनी युक्ता रोहिण्या सा फलाधिका ॥२४॥
तस्यां संपूजयेत् कृष्णं दुर्गां नन्दवधूस्तथा ।
देवकीं रोहिणीं रामं यमुनां नन्दमेव च ॥
वसुदेवं तथा कंसं नारदञ्च महामुनिम् ॥२५॥
विनापि भाद्रमासेन रोहिण्या सहितासु च ।
कृष्णाष्टमीषु सर्व्वासु सम्पूज्यौ शिवकेशवौ ॥२६॥
तत्रापि रजनीयोगोऽपेक्ष्यते वै फलाधिकः ।
शृणुयात् कृष्णमाहात्म्यं कृष्णजन्मकथामपि ॥
उपवासश्च कर्त्तव्यो जागरश्च महोत्सवैः ॥२७॥
जयन्ती नाम योगोऽयं देवतैश्च प्रशस्यते ।
पूजोपवासकर्म्मादौ नवम्या वेध दृश्यते ॥
जन्माष्टम्यान्त्वर्द्धरात्रिव्यापायां वैदिकक्रियाः ॥२८॥
यद्बाल्ये यच्च कौमारे यौवने वार्द्धके च यत् ।
सप्तजन्मार्ज्जितं पापं स्वल्पं वा यदि वा बहु ॥
तत्क्षालयति भूतेशं तस्यामभ्यर्च्य भक्तितः ॥२९॥
होमजप्यादिदानानां फलञ्च शतसम्मितम् ।
संप्राप्नोति न सन्देहो यच्चान्यन्मनसेप्सितम् ॥
उपवासस्तु तत्रोक्तो महापातकनाशनः ॥४०॥

---

१ B omits four lines from
देवकीञ्चापि संपूज्य to दुर्गां नन्दवधूस्तथा ।

एवं कृत्वा विधिं सम्यक् परेऽचाह्नि भक्तिमान् ॥
अरुणोदयवेलायां स्त्रियोऽपि च विभूषिताः ॥४१॥
नदीषु च तड़ागेषु प्रतिमाः स्नापयेच्च ताः।
कृत्वा महोत्सवांस्तत्र चागच्छेयुर्गृहानपि।
तिथिभान्ते मुदा कुर्य्युः पारणं वैष्णवैः सह ॥४२॥
यद्येकयामरात्र्यन्तादधिके तिथिभे उभे।
तथा सतीच्छया काले पारणाचरणं सखि।
दक्षिणां रुचिरान्दद्यात् गुरवे ब्राह्मणाय वा ॥४४॥
गवां पूजा च विविधा कर्त्तव्या नवमीदिने।
गोपानां प्रीतिदानेन धर्मः सम्यक् वर्द्धते ॥४५॥
कृष्णपक्षे भाद्रपदे छन्दोगानां द्विजन्मनां।
पुष्यायां प्रोक्तमतुलमुपाकर्म्मविधानतः ॥४६॥
भाद्रे सिता तृतीया च पुण्या मन्वन्तरा मता।
स्त्रीणान्तत्रोत्सवः पुण्यं स्नानदानादिमङ्गलं ॥४७॥
पञ्चम्याञ्च ततः कुर्य्यात्सर्पाणां देवतार्च्चनं।
ततः षष्ठी च सामान्या मासि भाद्रपदे शिवा ॥४८॥
नाम्ना पापहरा तत्र स्नानाद्यक्षयमुच्यते।
ततश्चतुर्दशी कृष्णा द्वापराद्या महाफला ॥४९॥
ततः प्रतिपदं शुक्लामारभ्य चाज्ञया हरेः।
इन्द्रः पालयते पृथ्व्यां व्रीहिशस्यौषधीः स्वयं ॥५०॥
तस्मात् स तत्र संपूज्यः सभार्य्यश्च दिने दिने।
सगणः सानुयाचश्च सायुधश्च सवाहनः ॥५१॥

पटभित्तिकृतो देवो राज्ञा पूज्यो विशेषतः ।
पक्षेऽपि समुदायेऽत्र प्रत्यहं सुपवेक्ष्यते ॥५२॥
सप्तम्याञ्च तथाष्टम्यां नवम्याञ्च विशिष्य च ।
शिवौ शिवञ्च देवीञ्च पूजयेयुः स्त्रियो व्रतैः ॥५३॥
द्वादश्यामथ नृपतिः शक्रमुत्थाप्य पूजयेत् ।
अत्र पार्श्वपरीवर्त्तः शयानस्य हरेरपि ॥५४॥
इयञ्च श्रवणायोगात् श्रवणद्वादशी मता ।
कश्यपाद्दितौ जात उपेन्द्रो यत्र वामनः ।
स्नानदानोपवासादि कुर्य्यात्तत्र हि वैष्णवः ॥५५॥
अत्रैव शुक्लपक्षे हि सिंहांशे दिनसप्तके ।
अगस्त्यं पूजयेत्प्रातः प्रत्यहं मानवो गृही ॥५६॥
पञ्चरत्नसमायुक्तं घृतपायससंयुतं ।
नानाभक्ष्यफलैर्युक्तं ताम्रपात्रसमन्वितं ॥५७॥
अङ्गुष्ठमात्रपुरुषं कुम्भजातं चतुर्भुजं ।
सुवर्णप्रतिमायान्तु पूजयेद्दक्षिणामुखः ॥५८॥
धान्यसप्ताम्बरै[१]र्युक्ते निदध्यात्प्रतिमां घटे ।
धेनुं सवत्सां दद्याच्च ब्राह्मणाय पयस्विनीं ॥५९॥
एवमेव विधानेनागस्त्यायार्घ्यं प्रदापयेत् ।
काशपुष्पप्रतीकाश अग्निमारुतसम्भव ।
मित्रावरुणयोः पुत्र कुम्भयोने नमोऽस्तु ते ॥६०॥
होमं कृत्वा ततः पश्चात् वर्जयेन्मानवः फलं ॥६१॥

१ B has धान्यसम्बाम्बरैः ।

एवं कृत्वा चेन्द्रलोकं[1] रूपारोग्यसमन्वितः ।
प्राप्नोति सखि यः सम्यक् सप्तैवार्घान् प्रयच्छति ॥६२॥
उदेति यावद्भगवानगस्त्यो व्योम्नि तावतः ।
कालान् संपूजयेत्तं वै कन्यासिंहांशकान्तरे ॥६३॥
तावच्च भोजयेद्विप्रान् परमान्नफलादिभिः ।
दत्त्वा च दक्षिणां शुद्धं दद्यात्सर्व्वं द्विजातये ॥६४॥
यद्यहं प्राप्नुयां कामं भगवन्मनसेप्सितं ।
त्वत्प्रसादादविघ्नेन भूयस्त्वां पूजयाम्यहं ॥६५॥
इत्येवं प्रार्थयेत्काशीवासिनं कुम्भसम्भवं ।
इत्येवं सखि ते प्रोक्तान्येतानि दश पञ्च च ।
कालतीर्थानि परतः शृणु वक्ष्यामि पक्षतः ॥६६॥

इति बृहद्धर्मपुराणे व्यासजाबालिसम्वादे तीर्थकथने
अगस्त्यार्घ्यः षोड़शोऽध्यायः ॥

---

१ C has चन्द्रलोकं ।

# सप्तदशोऽध्यायः ।

देव्युवाच ।

सप्ती तीर्थानि तिथयः पितॄणां प्रीतये पराः ।
अश्वयुक्कृष्णपक्षीयाः पितरस्तत्र लिप्सवः ॥१॥
प्रत्यहं तासु कुर्व्वीत श्राद्धं वै पार्वणं विधिं ।
देवीं मामेव विधिना पितृरूपामधिष्ठितां ॥२॥
यजेयुः प्रयता मर्त्याः कन्यासंस्थे रवौ सति ।
पूजा मे श्राद्धरूपेयं परमप्रीतिदायिनी ॥३॥
अहमेव स्वधा स्वाहा नम ओङ्कार एव च ।
विशेषात् स्वयमेवाहं विष्णौ सुप्तेऽत्र सर्व्वथा ॥४॥
तस्मादपरपक्षेऽस्मिन् श्राद्धं कुर्य्याद्दिने दिने ।
तदशक्त्या पञ्चमीतो दशमीतस्ततोऽप्यलं ॥५॥
ततोऽप्यशक्तौ त्रीण्येव दिनानि तत्र नापि चेत् ।
अमावस्यादिने श्राद्धं कर्त्तव्यं नात्र संशयः ॥६॥
तत्राप्यभावे कर्त्तव्यं श्राद्धं दीपान्वितातिथौ ।
तस्माद्यत्नोऽपरे पक्षे कर्त्तव्यः श्राद्धतर्पणे ॥७॥
सतिलं तर्पणं कार्य्यं गङ्गायामितरत्र वा ।
निषिद्धेऽपि दिने कुर्य्यात्तर्पणं सतिलं त्विह ॥८॥
मघायां पिण्डदानन्तु न कुर्य्यात्पुत्रवान् गृही ॥९॥
आहवेषु विपन्नानां जलाग्निभृगुपातिनां ।
चतुर्द्दश्यां भवेत् पूजा अमावास्यां तु कामिकी ॥१०॥

उपसर्गमृतानाञ्च तथैव चात्मघातिनाम् ।
पिण्डञ्चोदकदानञ्च कर्त्तव्यमिह वर्त्तते ॥ ११ ॥
स्त्रियाः सूतिविपन्नायाः श्राद्धमत्र विधीयते ।
शाकश्राद्धमिहाष्टम्यां पितॄणां प्रीतिदायकम् ॥ १२ ॥
त्रयोदश्यान्तु मधुना पायसैः श्राद्धमिष्यते ।
पुत्त्रवानपि तत्कुर्य्यात् न चेत्काम्यं भवेद्धि तत् ॥ १३ ॥
इयं युगाद्यापि मता कृष्णाश्विनत्रयोदशी ।
अथातः शृणु वक्ष्यामि शरत्पूजादिनानि मे ॥ १४ ॥

जाबालिरुवाच ।

पितृरूपा कथं देवी स्वधाभोक्त्री स्वयं शिवा ।
कथं वा शारदी पूजा अकाले युज्यते गुरो ॥ १५ ॥

व्यास उवाच ।

एवमेव ततः सख्यौ देवीं पप्रच्छतुः शिवां ।
तदहं तेऽभिधास्यामि शृणुष्वैकमना द्विज ॥ १६ ॥

सख्यावुचतुः ।

कथं नु भवती भूता पितृरूपा स्वधार्थिनी ।
शरत्काले तवार्च्चा वा कथमाकालिकी शिवे ॥ १७ ॥

इति बृहद्धर्मपुराणे सप्तदशोऽध्यायः ।

---

# अष्टादशोऽध्यायः ।

देव्युवाच ।

आसीद्राजा दशरथः कोशलाधिपतिर्नृपः ।
सूर्य्यवंशसमुत्पन्नः सप्तद्वीपपतिर्महान् ॥ १ ॥
यज्वा दाता धर्मपरः शास्त्रतः सत्पराक्रमः ।
सार्द्धसप्तशतं भार्य्यास्तस्यासन् पृथिवीपतेः ॥ २ ॥
कौशल्या केकयी चापि सुमित्रा चापि तस्य ह ।
तिस्रो महिष्यः सुभगाः सच्छीलाश्चारुलोचनाः ।
आसंस्तस्य नृपस्यासीत्तासु योग्या न सन्ततिः ॥ ३ ॥
विभाण्डकसुतं नाम्ना ऋष्यशृङ्गं समाश्रितः ।
पुत्त्रार्थमुद्यतः कर्तुं क्रतुं क्रतुमतां वरः ॥ ४ ॥
एतस्मिन्नेव काले तु ब्रह्मा सुरगणैः सह ।
गत्वा वैकुण्ठभवनं वैकुण्ठं समुवाच सः ॥ ५ ॥

ब्रह्मोवाच ।

नारायण जगन्नाथ वैकुण्ठ परमेश्वर ।
जनार्द्दन हृषीकेश केशवानन्त माधव ॥ ६ ॥
लङ्कायां राक्षसपतिर्विहितस्ते दुरासदः ।
तं निहन्तुं क्षितौ नाथ मानुषीं तनुमाश्रय ॥ ७ ॥

मया लस्मै वरो दत्तः सर्वावध्यत्वमीप्सितम्
नाम्रत्वात् स स्वयं मोहान्मानुषावध्यतां कुधीः ॥८॥
भव्या सो मानुषा एवमवलेपाज्जनार्द्दन ।
तस्मात् त्वं मानुषो भूत्वा रावणं जहि कण्टकम् ॥९॥
राजा दशरथो भार्य्या पुत्त्रार्थी यततेतराम् ।
तस्य त्वं वैष्णवाग्र्यस्य पुत्त्रत्वं याहि माधव ॥१०॥

भगवानुवाच ।

ब्रह्मन् सत्यमिदं ज्ञातं मयापि निश्चयेन वै ।
मानुषोऽहं भविष्यामि तं वधिष्यामि राक्षसम् ॥११॥
किन्त्वेकमस्ति कर्त्तव्यं गोपनीयं त्वया सह ।
देवाः स्वस्वालयं यान्तु माहाय्याय च मे भुवि ।
ऋक्षवानरसङ्घेषु भवन्तु भावयन्तु च ॥१२॥
इत्युक्त्वा देवतावर्गान्विनियोज्य तथा तथा ।
ब्रह्मणः सह कृष्णोऽगात् कैलासं यत्र पार्वती ॥१३॥
तौ तत्र शम्भुना दृष्टौ पूजितौ च समर्हणैः ।
ततो ब्रह्महरीशास्ते उपतस्थुरुमान्तु माम् ॥१४॥
उद्यतेषु प्रणन्तुं मां तेषु देवेषु सत्तमाः ।
निःसृतैका भगवती महामेघप्रभा शुभा ॥१५॥
अष्टादशभुजा चन्द्रकलाकलितमस्तका ।
देवीभिरष्टभिर्युक्ता जयन्त्यादिभिरुत्तमा ॥१६॥
नवयौवनसम्पन्ना नानाभरणकोज्ज्वला ।
स्वर्णसिंहासने पट्टे लसन्ती लोललोचना ॥१७॥

तामेव संप्रपश्यैव जगद्गुरो स्वमीप्सितम् ।
तत्र विष्णुरुवाचेदं शृण्वतः कामवैरिणः ॥१८॥

भगवानुवाच ।

मातरम्ब विष्णुमाये ब्रह्माद्यं दैवतैः सह ।
उपायं रावणस्य बधाय लोकदूषिणः ॥१९॥
अतस्तस्य बधार्थाय मानुषत्वं व्रजाम्यहम् ।
ऋक्षवानरसङ्घेषु देवा यास्यन्ति सम्भवम् ॥२०॥
किन्तु त्वं सेवितानेन रावणेन महात्मना ।
अयञ्च पूजितः शम्भुर्यावज्जीवं दिने दिने ॥२१॥
त्वद्भक्तः शिवभक्तो वा मद्भक्तो वा कथं मया ।
हन्तव्यः शैलतनये न मां च द्वेष्टि स क्वचित् ॥२२॥
युवाभ्यां देवदेवीभ्यां वर्द्धितः स च दर्पितः ।
विशेषतस्त्वमेवास्ते देवी लङ्केश्वरी शुभा ॥२३॥
अतस्त्रैलोक्यरक्षायै रावणस्य बधादिह ।
चिन्तयोपायमतुलं यत्त्वत्प्रीत्या म्रियेत सः ॥२४॥

देव्युवाच ।

इत्युक्ता सा भगवती चण्डिका चण्डविक्रमा ।
विहस्योवाच देवेशं विष्णुं प्रभुमनामयम् ॥२५॥

चण्डिकोवाच ।

सत्यं तेनाराधिता च भक्त्या च समुपासिता ।
शम्भुश्चाराधितस्तेन सम्यक् मम्यञ्च तांवृषी ॥२६॥
नैवावशिष्टं किञ्चास्ति प्राप्यञ्च तस्य दुर्लभम् ।

अधुना स्वविनाशाय लोकानुद्वेजयत्यसौ ॥२७॥
मया विचिन्त्यते तस्य निधनाय दुरात्मनः।
ब्रह्मणा तु वरो दत्तस्तेन चाहमुपासिता ॥२८॥
आराधितस्य भूतेशस्तस्य न द्वेष्टि स कश्चित्।
मानुषा भोजनं तस्य कस्मादेष मरिष्यति ॥२९॥
उपायश्चिन्तितो यो हि ब्रह्मणा कृत एव सः।
यस्मात्तमुपारुणस्तस्य वधे मानुषभावतः ॥३०॥
किन्तु त्यक्ता मया लङ्का त्वया सा धर्षिता भवेत्।
तस्मात् त्यच्यामि तां लङ्कां तत्रोपायं शृणुष्व मे ॥३१॥
त्वयि मानुषतां जाते तव पत्नीश्च मानुषीम्।
श्रियं देवीं मद्विभूतिं हरिष्यति दुरात्मवान् ॥३२॥
सा तु लक्ष्मीर्यदा तस्य पुरीं यास्यति सुन्दरी।
तदा शम्भोरनुमते तां त्यच्यामि पुरीं प्रभो ॥३३॥
मम प्रतिनिधीभूतां यदा लक्ष्मीं तव प्रियाम्।
अवमंस्यति दुष्टात्मा तदा स ह्रासमेष्यति ॥३४॥
अतस्त्वं याहि मानुष्यं तद्वधे च मनः कुरु।
त्वया च स्मरणीयाहं हृदि गुप्ता तदा तदा।
साहाय्यन्ते करिष्यामि शम्भुश्चैव प्रसाद्यताम् ॥३५॥

देव्युवाच।

इत्युक्तः स तया देव्या शृण्वतोर्देवयोस्तयोः।
परमं प्रीतिमापन्नः शिवमैचत केशवः ॥३६॥
देव्या अनुमतः शम्भुरीचिते हरिणा तदा।

उवाच वचनं हर्षात् प्रोत्फुल्लनयनः शिवः ॥३७॥
अहञ्चावतरिष्यामि वानर्य्यां पृथिवीतले ।
त्रैलोक्ये दुष्करं कर्म्म करिष्यामि मुदे तव ॥३८॥
तवाज्ञामनुयास्यामि लोकातीतपराक्रमः ।
दशशीर्षेण तेनाहं नत एकादशो न च ॥३९॥
तेन चैवापराधेन मर्द्दयिष्यामि तं ध्रुवम् ।
नन्दिना मेऽभिशप्तोऽसौ रावणो राक्षसाधिपः ॥४०॥
मत्तुल्यवदना जीवा भवितारो बधे तव ।
अतोऽहं वानरो भूत्वा करिष्यामि मुदं तव ॥४१॥
मयि याते तु लङ्कायां देवी त्यक्ष्यति तां पुरीम् ।
किं करिष्यति च ब्रह्मा ब्रूतां तत्र तु कर्म्मणि ॥४२॥

देव्युवाच ।

इत्युक्तः शूलिना कृष्णः परं हर्षमुपागतः ।
हर्षाश्रुपूर्णया दृष्ट्या ब्रह्माणं समुदैक्षत ॥४३॥

ब्रह्मोवाच ।

अहञ्चावतरिष्यामि ऋक्षयोनौ महाबलः ।
तव मन्त्री भविष्यामि शुभाशुभविवेचनः ॥४४॥
जात एव पुरा तत्र धर्म्मो देवो विभीषणः ।
सर्व्वथा लङ्कनाते रक्षो देव मानुषतां व्रज ॥४५॥

देव्युवाच ।

इत्येवमुक्ता विजये जये सखि
ब्रह्मादयस्ते मुदिता बभूवुः ।

तं मेनिरे चैव हतश्च रावणं
जग्मुस्तथा चक्रुरथोचिताः क्रियाः ॥४६॥
समाजगामाथ महीं हरिः स्वयं
राज्ञोऽजपुत्रस्य वधूसु जन्मने।
एकश्चतुर्द्धा चरुसंविभागात्
ब्रह्मैव तद्दाशरथं चतुष्कम् ॥४७॥

इति बृहद्धर्मपुराणे रावणवधोपायोऽष्टादशोऽध्यायः ॥

---

# ऊनविंशोऽध्यायः ।

देव्युवाच ।

कौशल्या सुषुवे रामं भरतं केकयी नृपात् ।
सुमित्रा सुषुवे पुत्रौ शत्रुघ्नलक्ष्मणौ यमौ ॥ १ ॥
रामश्च भरतश्चैव श्यामौ दूर्व्वादलप्रभौ ।
पीतौ लक्ष्मणशत्रुघ्नौ सर्व्वे सुन्दरविग्रहाः ॥ २ ॥
रामस्यानुगतो बाल्याल्लक्ष्मणो लक्षणान्वितः ।
भरतस्य च शत्रुघ्नो लोकचित्तानुरञ्जकाः ॥
सर्वे बभूवुः सततं सर्वदा धर्मचारिणः ॥ ३ ॥
अथायोध्यां समागत्य विश्वामित्रो महामुनिः ।
रामं दशरथं भूपमयाचत मखारकम् ॥ ४ ॥
राजा कष्टाद्ददौ पुत्रं रामं लोकमनोरमम् ।
रामश्च पितरं नत्वा लक्ष्मणानुगतो ययौ ॥ ५ ॥
ताड़कां राक्षसीं हत्वा लब्ध्वा चास्त्राणि तन्मुनेः ।
जगाम मुनिना सार्द्धं यत्र रक्षोभयं[१] क्रतौ ॥ ६ ॥
हत्वा सुबाहुं तद्यज्ञे राक्षसं ताड़कासुतम्[२] ।
मारीचमपि निःसार्य्य बाणेनैकेन राघवः ।

१ A has यक्ष० । २ B has ताड़काराक्षसीसुतं ।

रचित्वा तत्कृतं लेभे मुनिभ्यस्तु शुभाशिषः ॥७॥
ततस्तु मुनिभिः सार्द्धं विश्वामित्रेण चर्षिणा।
जग्मतुर्मिथिलां वीरौ भ्रातरौ रामलक्ष्मणौ ॥८॥
गच्छन्नहल्यामिन्द्रेण रतां गौतमशापिताम्।
विमोच्य शापात् प्रापय्य गौतमं रघुनन्दनः ॥९॥
प्रविश्य च पुरीं तत्र ददृशे जनकं नृपम्।
ददौ[1] परिचयं तस्मै जनकाय स कौशिकः।
रामलक्ष्मणयोर्भ्रात्रोः श्रुत्वा स मुमुदे नृपः ॥१०॥
रामोऽथ चापं परमं शूराणां शौर्य्यनाशनम्।
श्रुत्वामाय्य समानस्य[2] बभञ्ज भीमनिस्वनम् ॥११॥
ततः स जनको राजा भूपं दशरथं मुदा।
दूतैः सपुत्रमानाय्य तत्सुतेभ्यो ददौ सुताः ॥१२॥
सीतां ददौ स रामाय भरताय च माण्डवीम्।
लक्ष्मणायोर्मिलान्तस्यानुजाय श्रुतकीर्त्तिकाम् ॥१३॥
रामादयस्ते संप्राप्तसंमानाः सह यत्नतः[3]।
अयोध्यां गन्तुमारब्धा ददृशुः पथि भार्गवम् ॥१४॥
तस्य दृप्तं महाक्रोधं तथा स्वर्गपथं प्रभुः।
तस्यैव धनुषैकेन वाणेन रघुनन्दनः।

---

१ A has ददं। २ A and B have श्रुत्वानाय्य समानाय्य।
३ A has सह पत्नयः। C has सह पुत्रयः।

हत्वा गृहीत्वा तच्चापं भार्गवेण नतः स्तुतः।
आजगाम मुदा सर्वैः सहायोध्यां मुदान्विताम् ॥१५॥१६॥
रामस्य विरहेणार्त्तान् पौरान् सम्पूरयन्निव।
प्रमोदैर्द्विगुणीभूतैः सद्वितीयः स्त्रिया तदा॥१७॥
मातामहगृहं याते भरते मातुलेन वै।
इयेष सम्मतः सर्वैः राजा रामाभिषेचने ॥१८॥
तद्दासीमुखतः श्रुत्वा कैकेयी विमनान्तरा।
दासीबुद्ध्या विघटिता प्रावृषा स्वर्धुनी यथा ॥१९॥
निजपुत्रे तु भरते प्रतिपादयितुं श्रियम्।
विवासयामास रामं बद्धा सत्येन भूपतिम् ॥२०॥
सा दैवचोदिता रामं सखि हे विजये जये।
गुणाभिरामं सर्व्वेषामारामं कटुवाचया ॥२१॥
रामस्तु प्रस्तुतान्तां वै राज्यलक्ष्मीं विहाय वै।
पितुः सत्यं पालयितुं क्षिप्वा शोकार्णवे जनान्।
याचामरण्यवासाय चकार रघुनन्दनः ॥२२॥
तातं शोकार्णवे मग्नं कौशल्यां मातरं तथा।
सुमित्रां सम्प्रणम्येव स्फीतवक्त्रो जगाम ह ॥२३॥
अनुवव्राज वैदेही लक्ष्मणश्च महाबलः।
चीराजिनजटाधारं रामं राजीवलोचनम् ॥२४॥
कैकेयी त्वरयामास वनं गच्छेति निष्ठुरम्।
रामश्च दत्त्वा विप्रेभ्यो धनानि प्रययौ पुरात् ॥२५॥
पुष्यायां शुक्लदशमीदिने रामः स्मितामनः।

राज्यप्रतिनिधीभूतं वनवासमरोचयत् ॥२६॥
अनुजग्मुः समं[1] पौराः सुमन्त्रसहितं रथम्।
प्रारुह्य नावं सरयूं तीर्त्वा गङ्गां ददर्श सः॥२७॥
तत्र सीता सुरधुनीं नत्वा स्तुत्वा च भक्तितः।
बलिभिर्मत्स्यमांसाद्यैर्गङ्गापारं ततो ययुः॥२८॥
शृङ्गवेरपुरे तत्र मत्स्यजीविगुहालये।
सूतो विसर्जितोऽयोध्यामागमत्पौरकाश्च ते।
विलप्य बहुधा रामं ध्यात्वा प्राणान् जहौ नृपः॥२९॥
रामश्च सह सौमित्रिसीताभ्यां हि वने भ्रमन्।
धनुष्पाणिर्मुनीन् रक्षन् बभ्राम वनराजिषु।
चित्रकूटं ययौ शैलं भरद्वाजस्य शासनात्॥३०॥
इह त्वराजकेऽमात्या वशिष्ठाद्याश्च भूसुराः।
आनाय्य भरतं राज्ञः सत्क्रियां समकारयत्।
रामशून्यां पुरीं दृष्ट्वा मातरं समभर्त्सयत्॥३१॥
सपौरः सानुगामात्यो रामं द्रष्टुं ययौ वनम्।
शत्रुघ्नेन सह भ्राता सर्वाभिरपि मातृभिः॥३२॥
समतीत्य बहून् देशान् भरद्वाजं प्रणम्य च।
ददर्श चित्रकूटाद्रौ रामं चीरजटाधरम्॥३३॥
भरतेनाथ पौरैश्च वशिष्ठाद्यैस्तथर्षिभिः।

---

१ A and C have समे।

उक्तं वाक्यमनादाय रामे[1]वनमरोचयत् ॥ २४ ॥
भरतस्तु न्यासभूतं रामराज्यमुपाददत् ।
पादुके चाभिषिच्यास्य नन्दिग्रामे तथा स्थितः ॥ २५ ॥
रामस्तु दण्डकारण्यं जगाम दुर्गमं वनम् ।
तत्र हत्वा विराधाख्यं दनोः पुत्रं महाबलम् ।
स्थितिं चक्रे पञ्चवट्यां कृत्वा पर्णकुटीद्वयम् ॥ २६ ॥
तत्र सूर्पनखा नाम राक्षसी कामरूपिणी ।
राममैच्छत् पतिं कर्त्तुं सीतां भुक्त्वा सखीद्वय ॥ २७ ॥
तस्यास्तु दृष्टनिर्बन्धं दृष्ट्वा सौमित्रिरेव हि ।
रामाज्ञया शरेणास्या नासे कर्णौ जघान ह ॥ २८ ॥
छिन्ननासा सूर्पनखा खरदूषणकादिकान् ।
जगाद रुदती सर्वं श्रुत्वा तेऽपि समागताः ॥ २९ ॥
तान् राम एक एकेन चतुर्द्दशसहस्रिणः ।
जघान सापि तत् दृष्ट्वा जगाम रावणं प्रति ॥ ४० ॥
रावणस्तन्मुखात् श्रुत्वा सीतां परमसुन्दरीम् ।
हर्तुं मारीचमकरोत् सहायं ताड़कासुतम् ॥ ४१ ॥
निवारितोऽपि बहुशो मारीचेन स रावणः ।
कालेन बलिनापन्नो नागृह्णात्तद्वचो हितम् ॥ ४२ ॥
मारीचो राघवान्मृत्युं वरं मत्वा तथाकरोत् ।
सौवर्णो हरिणो भूत्वा सीतादर्शनमागतः ॥ ४३ ॥
तं जानकी मृगं चित्रं चर्म्मण्यैच्छत् प्रभोः पुरः ।

---

१ A has रामम् and B has रामः ।

रामस्यागाद्धनुष्पाणिर्लक्ष्मणो रक्षकः स्थितः ॥ ४ ४॥
स रावणस्य कार्य्यार्थी मारीचो मृगदर्शनः[1]।
दूरं गतोऽनु रामोऽपि ययौ तं चित्रदर्शनम्[2] ॥ ४ ५॥
रामक्षिप्तेषुणा रक्षः पपात लक्ष्मणं हृवन् ॥ ४ ६॥
लक्ष्मणेत्याकुलं शब्दं श्रुत्वा सीताथ लक्ष्मणम्।
अवदद्भ्रातरं याहि मायाविनाशितं द्रुतम् ॥ ४ ७॥
यदि यास्यसि नैनं त्वं तदा पीत्वा विषं म्रिये।
इत्यादिकटुवाक्येन स ययौ यत्र राघवः ॥ ४ ८॥
एतदन्तरमासाद्य रावणो भिक्षुरूपधृक्।
आगत्य चोक्त्वा कौशल्या त्वां दिदृक्षुरिति त्वरा।
गृहीत्वा रथमारोप्य स्वरूपेण खमापतत् ॥ ४ ९॥
सा दृष्ट्वा खेगतात्मानं राक्षसस्य रथोपरि।
राक्षसेन हृतां मत्वा चुक्रोश रामलक्ष्मणौ ॥५ ०॥
क्रोशन्तीं तां भूषणादि क्षिपन्तीं कौ नृपात्मजाम्।
हरन् खेऽदृश्यत सखि पक्षिराज्ञा जटायुषा ॥५ १॥
जटायुर्युयुधे भूरि सखा दशरथस्य सः।
तं पराभूतवान्दैवात् तेन चैव निपातितः ॥५ २॥
तं निपात्य गतो लङ्कां राक्षसीगणमध्यतः।
अशोकवनिकामध्ये ररक्ष जनकात्मजाम् ॥५ ३॥
सा रामहीना तत्रैव तस्थौ रावणवेश्मनि।
बहुशः कथिता चापि स्मरन्ती राघवं सदा ॥५ ४॥

---

१ C has राक्षसो मृगः। २ C has चित्ररूपिणं।

ब्रह्मणो वचनादिन्द्रः प्राशयच्चरु मैथिलीम्[१] ।
तेन तस्याः क्षुधा तृष्णा गता यावत् स्थिता तथा[२] ॥५५॥
अथ रामः समागत्य तामदृष्ट्वा प्रियां रुदन् ।
बभ्रामाप्राप्य हत्वा च कवन्धं घोरराक्षसम् ।
श्वाससमात्रावशेषं तं ददर्श च जटायुषम् ॥५६॥
स चोक्त्वा रावणं सीताहारकं सकृदेव तु ।
तत्याज प्राणमालोक्य रामं लक्ष्मणमेव च ॥५७॥
ततः स शवरीं दृष्ट्वा कृत्वा स्वर्गगताञ्च ताम् ।
ऋष्यमूकं ययौ शैलं सुग्रीवो यत्र वानरः ॥५८॥
वानरैर्हनुमन्नीलनलतारैः सह स्थितम् ।
सुग्रीवं वालिना भ्रात्रा हृतभार्य्यं सुदुःखितम् ॥५९॥
सखायमकरोद्वीरं सूर्य्यपुत्त्रं कपीश्वरम् ।
अस्थिकूटं पदा क्षिप्त्वा भित्त्वा शालांश्च सप्त वै ॥६०॥
हत्वा च वालिनं वीरं लाङ्गूलवद्धरावणम् ।
स्थापयामास किष्किन्ध्याराज्ये सुग्रीवमीश्वरम् ॥६१॥
एवन्तु श्रावणे मासि कर्म्म कृत्वा वने स्थितः ।
सुग्रीवस्य प्रतिज्ञाय सीतोद्धारं पुरं ययौ ॥६२॥
पौर्णमास्यान्तु कार्त्तिक्यां सुग्रीवो राममागमत् ।
दूतैः कपीन् समानाय्य जगाद रघुनन्दनम् ॥६३॥

---

१ B has पायसचरु मैथिलीं ।

२ B has another line here भोजयामास सुस्वादु शाल्मन् हृति-कारं पयः ।

प्रभो एते समायाता ऋक्षाश्च वानरा अपि ।
जाम्बवद्वालिपुत्रादिप्रधानास्तत्क्रियार्थिनः ॥६४॥
सैकादशसहस्राणि सप्ततानि दशैव तु ।
लक्षाणि खलु कोटीनां तथा लक्षाणि केवलम् ॥६५॥
चत्वारिंशत् सप्त वापि तथा दशसहस्रकम् ।
ऋक्षवानरसंघानां संख्येयं परिगण्यते ॥६६॥
अत्र लक्षन्तु ऋक्षाणां जाम्बवान् यत्र चाधिपः ।
अपरे वानराः सर्वे गोलाङ्गूलादिजातयः ॥६७॥
सुमेरुमलयादिस्थाः सर्वे एते महाबलाः ।
यान्तु भूमण्डलं सर्वं मृगयन्तु नृपात्मजाम् ॥६८॥
मासस्याभ्यन्तरे वृत्तं कथयिष्यन्ति मामिति ।
इत्युक्त्वा प्रेषयामास वानरांस्त्रिदिशः[1] परान् ॥६९॥
ततो याता दिशं याम्यां जाम्बवानङ्गदादयः ॥७०॥
हनूमांस्तत्र रामस्य गृहीत्वैवाङ्गुरीयकम् ।
करिष्यन्दुष्करं साक्षात् देवदेवो महेश्वरः ॥७१॥
सुग्रीवदेशितान्देशान् विचित्याप्राप्य मैथिलीम् ।
अतीतकालनियमा मरणे निश्चयं दधुः ॥७२॥
एतस्मिन्नेव काले तु सम्पाती पक्षिसत्तमः ।
श्रुत्वा रामं दग्धपक्षः पक्षौ प्राप जगाद च ।
सीता वसति लङ्कायां रावणेन हृतेति तान् ॥७३॥

---

१ A and C have त्रिदश ।

देव्युवाच ॥

इदन्ते वै श्रुत्वा वचनममलं पक्षिवरतः
समुत्तस्थुर्हृष्टा जलधितटमीयुः कपिगणाः ।
विलोक्याब्धेर्वेलां चकितहृदया आसत स मे
हनूमांस्तत्पारं जिगमिषुरभूद्दृप्तमतः ॥७४॥

इति बृहद्धर्मपुराणे तीर्थप्रादुर्भावे सीतावृत्तान्तलाभे ऊन-
विंशोऽध्यायः ॥

## अथ विंशोऽध्यायः ।

देव्युवाच ॥

वायुजो वायुवेगेन खे गच्छन् सुरसामुखं ।
प्रविश्य कर्णरन्ध्रेण निःसमाराणुतां गतः ॥१॥
ततः स सिंहिकां हत्वा स्पृष्ट्वा मैनाकमेव च ।
सायं विवेश लङ्कायां भूत्वौतुर्व्यचरत् पुरीम् ॥२॥
विचित्य सप्त रात्राणि लङ्कायां पवनात्मजः ।
रहस्यातिरहस्यादि ददर्श न च जानकीम् ॥३॥
सोऽनुमेनेऽनुमानज्ञः प्रमेयेऽचानुमानिके ।
अदृष्ट्वा चिन्तयित्वा चादृष्टं स कपिकुञ्जरः ॥४॥
अशोकालीवनं रक्तं पुष्पितं प्रददर्श ह ।
तद्गत्वा राक्षसीमध्ये स्थितां परमसुन्दरीम् ।
दृष्ट्वाऽनुमेने तां सीतां साध्वीचिह्नैः सुधीः कपिः ॥५॥
तरुमारुह्य स कपिरागतं रावणाह्वयम् ।
प्रलोभयन्तं तां भीतां भर्त्सितश्च तया मुहुः ।
तर्जयन्तं च गच्छन्तं ददर्श निस्पृहं कपिः ॥६॥
ततोऽवरुह्य वृक्षात् स प्रणनाम विदेहजाम् ।
रामदासोऽस्मि हनूमानित्याभाष्य सखीदय ॥७॥
सीता तदद्भुतं दृष्ट्वा श्रुत्वा च मधुराक्षरम् ।

पप्रच्छ विविधप्रश्नैः स चोवाच प्रमा वचः ॥८॥
ततो ददावभिज्ञानं रामहस्ताङ्गुरीयकम् ।
सीता रुरोद तत् प्राप्य वक्षस्यारोप्य सुप्रभम् ॥९॥
उवाच सीता मम वै मासोऽयं श्रावणाख्यकः ।
दर्शस्य परमं सार्थो नाथवृत्तान्तलाभकः ॥१०॥
कृतस्त्वया कपे वत्स चिरं जीव सुखी भव ।
एवं गतास्त्र षड्यामा निशीथे घोरदर्शने ।
प्रणम्य सीतामुत्तस्थौ दिदृक्षुस्तां पुरीं पुनः ॥११॥
चरन्ददर्श तत्रैव ऐशान्यां सुमनोहरम् ।
तिन्तड़ीवनमध्यस्थे स्वर्णपीठे च पुष्कले ।
फुल्लमेकमशोकाख्यं वृक्षं तन्मूलमुत्तमे ।
ददर्श मन्दिरं चारु मणिमुक्तादिनिर्मितम् ।
तच्छैलशिखराकारं बृहद्द्वारकवाटकम् ॥१२॥१३॥
तस्मिंस्तु विवृते द्वारे ददर्श रुचिराननाम् ।
श्यामां रुचिरदोर्दण्डचतुष्कां स त्रिलोचनाम् ॥१४॥
मुण्डैर्मन्दारपुष्पैश्च मालाश्च दधतीं शुभाम् ।
अट्टहासां दिग्वसनां यौवनाभरणोज्ज्वलाम् ॥१५॥
असंख्यकामसंस्थानकटाक्षां शिञ्जिनूपुराम् ।
नृत्यन्तीं वादयन्तीं च शङ्खघण्टाघनादिकान् ॥१६॥
दिगम्बरीभिरष्टाभिरष्टवर्णैस्तथाविधैः ।
योगिनीभिः परिवृतां रावणे जयवादिनीम् ॥१७॥
विलोक्य मारुतिर्दर्पात् हुंकारं घोरमुन्नदन् ।

खमुत्पत्यापतत्तत्र काप्तीतिभयदं वदन् ॥ १८ ॥
सा तं चकितदृग्दृष्ट्वा समाश्वास्य च योगिनी ।
पप्रच्छ को भवानेवंविधो वानररूपधृक् ॥ १९ ॥

हनूमानुवाच ॥

अहं वै हनूमान्नाम प्रभञ्जनसुतो बली ।
रामदासत्वमापन्नोऽन्वेष्टुं सीतां समागतः ॥ २० ॥
समग्रां धरणीं युक्तां सागरैः साद्रिकाननाम् ।
दन्तैश्चर्वयितुं शक्त एकेन कवलेन हि ।
त्वं पुनः कासि वद मे रावणे जयमिच्छसि ॥ २१ ॥

चण्डिकोवाच ॥

अहं हिमगिरेः कन्या चण्डरूपा महाभुजा ।
भक्त्या वशीकृतानेन रावणेन महात्मना ॥ २२ ॥
नाम्नाहं चण्डिका काली पार्वतीत्यादिनामिका ।
त्वं पुनर्भीमरूपत्वं मह्यं दर्शय वानर ॥ २३ ॥

देव्युवाच ॥

इत्युक्तः स तया वीरः कामरूपोऽनिलात्मजः ।
बभूव भीषणाकारो व्यावृताचो महामुखः ॥ २४ ॥
ददर्श तस्य काये सा शरीराणि च रक्षसाम् ।
नखदन्ताग्रलग्नानि कोटिशः कोटिसञ्चशः ॥ २५ ॥
तथाकारान्महाभीमान्लोमसन्धिषु वानरान् ।
शीर्षे तस्य धनुष्पाणिं नवदूर्वादलप्रभम् ॥ २६ ॥
महाबलं महासत्वं रामं कमललोचनम् ।

रावणस्येषुलग्नस्य हरन्तं किल जीवितम् ॥२७॥
कुम्भकर्णं चापमुष्टौ दधतं वामपाणिना ।
हनूमतो ललाटे च सा ददर्श च लक्ष्मणम् ॥२८॥
जाज्वल्यमानं तिलकं रोचनाया इवातुलम् ।
चापमुष्टौ चरणाग्रेऽतिकायेन्द्रजितौ सखि ॥२९॥
लक्ष्मणस्य किरीटे च ददर्श जनकात्मजाम् ।
पश्यन्तीं रामचरणौ रावणेन निरीक्षिताम् ॥३०॥
भ्रुवोर्मध्ये पुरीं लङ्कां ज्वलन्तीं राक्षसैः सह ।
ततो ददर्श कौशस्य हृदये तु विभीषणम् ॥३१॥
मूर्त्तिमन्तं भ्राजमानं धर्मं लङ्काधिपं सखि ।
एवं तस्य तथाङ्गेषु ददर्श सकलं शिवा ॥३२॥
उवाच वचनं किञ्चिद्विनयेन महेश्वरी ।
जानामि त्वां कपितनो साक्षाद्देवं महेश्वरम् ॥३४॥
रावणस्य वधार्थाय ह्यस्वतन्त्रं रघूत्तमे ।
मया तु करणीयं किं यद् तत्सौम्यतां व्रज ॥३५॥

देव्युवाच ।

इत्युक्तः स तया देव्या चण्डीमाह महेश्वरः[1] ।
व्रज स्थानान्तरं लङ्कां त्यक्त्वा रावणपालिताम् ।
सीतावमानिता येन किं तस्य जयमिच्छसि ॥३६॥
त्वयि स्थितायामेतस्यां रामो नेमं हनिष्यति ।
अहते रावणे लोकः समूलो हि विनङ्क्ष्यति ॥३७॥
मम या लक्षिता शक्तिः सा च कुण्ठा भविष्यति ।

१ C has हरीश्वरः ।

न चेदिमां शक्तिरूपां त्वं लङ्कां परिहास्यसि ॥३८॥

चण्डिकोवाच।

सीतावमानिता येन तेनाहमवमानिता।

त्यक्तुकामा त्वया चोक्ता त्यजाम्येनां पुरीं कपे[1] ॥३९॥

हनूमानुवाच।

त्वां नमामि महेशानीं देवीं पर्व्वतनन्दिनीम्।

लङ्केशीं विन्ध्यनिलयां कालरूपाञ्च सैन्धवीम् ॥४०॥

ब्रह्मविष्णुशिवाराध्यां शक्तिमाद्यां सनातनीम्।

सृष्टिपालनसंहारकारिणीं भक्तवत्सलाम्।

देवदेवादिदेवालिपालिनीं शत्रुनाशिनीम् ॥४१॥

श्रीरामाय वरान्देहि यथा जयति रावणम्।

साहाय्यञ्च विधातव्यं यथा जयति रावणम् ॥४२॥

चण्डिकोवाच ॥

वरान्ददामि रामाय रावणं स विजेष्यते।

सीतां प्राप्स्यति कीर्त्तिञ्च राज्यञ्चेदं कुशासितम्।

साहाय्यं युज्यते नैव कर्त्तुं कालविरोधतः ॥४३॥

देवासुरनरादीनां देवताकार्य्यसाधने।

भवन्ति बोधिताः पूजाविधानैर्व्वेदनिर्म्मितैः ॥४४॥

---

* For verses 37 to 40 A has

सीतावमानिता येन तेनाहमवमानिता।

त्यक्तुकामा त्वया चोक्ता त्यजाम्येनां पुरीं कपे॥

Bhas सीतावमानिता येन किं तस्य जयमिच्छसि।

त्वयि स्थितायां मे तत्र रामो नैनं हनिष्यति॥

अहते रावणे लोकः समूलो हि विनंक्ष्यति।

अरकामा त्वया चोक्ता त्यजाम्येनां पुरीं कपे॥

पूजाकालस्तु पौषस्य त्रयोदशदिनात्परम्।
श्रावणे दशमीं यावत् मुख्यचान्द्रे परापि वा ॥४५॥
रामस्तु पूजितः पूर्व्वं समीतः सर्व्वदैवतैः।
अकालपूजया कस्मादहं स्यां खलु वोधिता ॥४६॥
वैदिकस्य विधेः कालो यदि स्यादेष मे कपे।
तदा स्यात् दुस्त्यजा लङ्का दुर्ज्जयः स्याच्च रावणः।
अतएव वरो दत्तो रामो जेष्यति रावणम् ॥४७॥

हनूमानुवाच।

स्वाहा त्वं देवता प्रीत्यै पितॄणामसि च स्वधा।
अतः स्वधेव साहाय्ये रामेण पूजिता भव ॥४८॥
ब्रह्मणा तु पुरा सृष्टाः पितरो दर्शपर्व्वणि।
तस्माद्दर्शेषु सर्वेषु पितरः कव्यभोजिनः ॥४९॥
त्वं रामदत्तं कव्यं च भुक्त्वा रामक्रियां कुरु।
अमा नाम कलेन्दोर्या वसत्यर्क्केऽणुरूपिणी ॥५०॥
निष्प्रपञ्चा ह्यशेषा च परमामृतरूपिणी।
निर्वाणमोक्षरूपां यां चन्द्रद्वारेण यान्ति वै ॥५१॥
सा कला त्वं हि परमा पितॄणां कव्यरूपिणी।
अरण्यतो हि सावाप्ता पितृभिर्दक्षिणायने ॥५२॥

चण्डिकोवाच।

एवमस्तु यदा रामः समेष्यति पुरीमिमाम्।
ततः प्रभृति दर्शान्तां यास्यामि पितृरूपताम् ॥५३॥
अपर्वस्वपि पर्वत्वं तद्दिनानां भविष्यति।

तेन तेष्वेव कुर्वीत श्राद्धं पार्वणवेधकम् ॥५४॥
वानरेन्द्र भवेन्नैवं शुक्लपक्षे ह्यसम्भवात् ।
संग्रामे रावणबधे पक्षोऽत्येत्यसितो यदि ॥५५॥
तदा प्राणहरा दृष्टिर्न रक्षःसु भवेन्मम ।
ये पञ्चदश वै देवाः क्रमेणेन्दुकलाश्च ताः ॥५६॥
ते समेष्यन्ति मामेव सुधाकरकलार्थिनः ।
किन्तु त्वं शङ्करः साक्षात् कलामंशश्चतुर्द्दशीम् ॥५७॥
न समेष्यसि मां युद्धे तत्र पूर्णपराक्रमौ ।
अतश्चतुर्द्दशीतिथ्यां न श्राद्धं विहितं भवेत् ॥५८॥
तत्रामृतेक्षणेनैव सर्व्वाञ्छास्त्रहतान् कपे ।
प्रीणयिष्यामि चेत्युक्तं यथावदुपयोगतः ॥५९॥

हनूमानुवाच ।

एवमेव विधेयन्ते भविष्यति न संशयः ।
अस्माभिरपि यत्नेन कार्य्यं युद्धं त्वरायुतैः ॥६०॥
त्वामहं पूजयिष्यामि लङ्कायामिह संप्रति ।
तिष्ठ स्थानान्तरे देवि यावत्तिष्ठामि चेह वै ॥६१॥

देव्युवाच ।

एवन्तु भाषमाणस्य गतप्राया क्षपाभवत् ।
तत्याज पीठं तं देवी हनूमांश्च ततः परम् ।
बभञ्ज दुर्गमान्येव वनानि कपिकुञ्जरः ॥६२॥
तत् श्रुत्वा प्रेषयत् क्रुद्धो रावणो राक्षसान् बहून् ।
तेषां रक्तैस्तदा चण्डी पाद्यार्घ्याचमनान्यदात् ॥६३॥

क्षिपन् सपुष्पान् वृक्षौघान् पुष्पैस्तां समपूजयत्।
अक्षादिकान्राजपुत्रान् हत्वा बलीनिहाप्यदात् ॥६४॥
ततो रात्रौ महायुद्धं मेघनादेन तस्य ह।
बद्धः प्रातर्ययौ द्रष्टुं लङ्केशं विजये जये ॥६५॥
बद्धो हनूमानकरोत्सम्वादान्रावणेन हि।
वैरूप्यकरणार्थाय तल्लाङ्गूलमदीपयत् ॥६६॥
हनूमान्दीप्तलाङ्गूलो देवि दीपं गृहाण मे।
धूपांश्च विविधानेवं ध्यायन् लङ्कां ददाह सः ॥६७॥
ययौ देवी कामरूपं कपिस्तापश्यज्जानकीम्।
सीता तु जानकी प्रोचे कपिं रामप्रियं सती ॥६८॥
वत्स वायुसुत श्रीमन् यस्मिन्नहनि राघवम्।
गत्वा द्रक्ष्यसि मां तत्र कथयिष्यसि मां यथा ॥
उद्धरेत्स राक्षसेशं हत्वा चाचिरतः स्वयम् ॥६९॥
आगमन्तेऽनुकाङ्क्षन्ती द्वौ मासौ प्राणधारणाम्।
करोमि गतयोर्मासोरहं त्यक्ष्यामि जीवितम् ॥
इदञ्च वाच्यं कार्य्यञ्च भवतापि च तादृशम् ॥७०॥

देव्युवाच।

ओमित्युक्त्वा कपिवरो ययौ सागरलङ्घने।
लङ्घयित्वा तथैवाब्धिं ज्ञातीन्सर्व्वानतोषयत् ॥७१॥
इत्युक्तं ते यथा पृष्टं पितृरूपत्वमेव मे।
उक्तानि कालतीर्थानि तानि पञ्चदशैव तु ॥७२॥
इति बृहद्धर्मपुराणे हनूमदागमनं विंशतितमोऽध्यायः॥

# एकविंशतितमोऽध्यायः ।

देव्युवाच ।

अथागत्य ततः षड्भिर्दिनैः पवननन्दनः ।
अङ्गदाद्यैः सह श्रीमान् ददर्श रघुनन्दनम् ॥
प्रणम्य सर्ववृत्तान्तं जगाद मुदिताननः ॥१॥
रामोऽपि दशमीं शुक्लां श्रावणे मासि निर्णयन् ।
सर्वया सेनया सार्द्धं यात्रां चक्रे मुदान्वितः ॥२॥
अहोरात्रैश्चलन्तस्ते षोड़शप्रहरैः सखि ।
द्वादश्यामपराह्णे वै समुद्रं ददृशुः समे ॥३॥
समुद्रपारसंप्राप्तौ तेषां चिन्तयतां ततः ।
त्रयोदश्यां समायातः शरणार्थी विभीषणः ॥४॥
चतुर्भिः कर्वुरैर्युक्तं रामस्तच समीचया ।
बुद्धा सखायं कृत्वा च लङ्काराज्येऽभ्यषेचयत् ॥५॥
तस्यैव मन्त्रणाद्रामस्त्रिरात्रनियमैः स्वयम् ।
सिन्धुराजं प्रसाद्यैव चक्रे स्वीकृतबन्धनम् ॥६॥
स विंशतिशतं वार्द्धि[१]र्योजनानि स्वकं जलम् ।
अस्तम्भयत्तदा सेतुं कर्त्तुमारेभिरे स मे ।
गिरिभिर्गिरिशृङ्गैश्च वृत्तैः शालपियालादिभिः[२] ॥७-८॥

---

१ B has सार्द्धं ।   २ A and C has पियादिभिः ।

यमपुत्रो नलश्चक्रे सेतुं सिन्धौ सुदुष्करम् ॥
श्रावण्यां पौर्णमास्यान्तु शेषयामद्वये स्थिते ।
चकार सागरे सेतुं योजनानि चतुर्द्दश ॥९॥
ततोऽष्टयोजनं त्यक्त्वा द्वितीयदिवसे नलः ।
षड्विंशतियोजनानि बबन्ध सागरे जलम् ॥१०॥
योजनानि ततः सप्त त्यक्त्वाहनि तृतीयके ।
पञ्चाशतं योजनानि बबन्ध सागरे जलम् ॥११॥
योजनानि ततः पञ्च त्यक्त्वाहनि चतुर्थके ।
बबन्ध सागरे सेतुं चकार दशयोजनम् ॥१२॥
बद्धे सेतौ त्रिभुवने बभौ जयजयध्वनिः ।
न दृष्टो न श्रुतो दृष्टः श्रुतः सेतुः सरस्वति ॥१३॥
अयं रत्नाकरे सेतुर्यस्याप्रतिहता प्रभोः ।
आज्ञा वा खलु याञ्ञा वा स रामो जयति श्रुतः ॥१४॥
कोटीनामर्द्धलक्षेण वानराणां सहैव तु ।
रामः कृष्णत्रयोदश्यां पुष्यायां दक्षिणं तटम् ॥
सिन्धोः प्रापन्महाबाहुर्विभीषणसहायवान् ॥१५-१६॥
श्रुत्वा दशाननः प्राप भयं शोकञ्च दिग्भ्रमम् ।
प्रलापं बुद्धिमोहञ्च कम्पं चिन्तामहर्निशम् ॥१७॥
परामर्शं सुहृद्वाक्याश्रवणं कटुवादिताम् ।
दशावस्थां ततश्चक्रे चरप्रस्थापनादिकम् ॥१८॥
रामेण प्रेषितो दूतो वालिपुत्रः प्रतापवान् ।
मुकुटं रावणशिरादादायागात्प्रभोः पुरः ॥१९॥

निश्चित्य रावणो युद्धं पुरगुप्तिमथाकरोत्।
रामस्योत्तीर्णमालोक्य बलं निरवशेषतः ॥
सर्व्वया सेनया युक्तो भ्रातृभिः परदिने प्रगे।
प्रविवेश पुरीं लङ्कां व्याप्ता च वानरैः पुरी ॥२०॥२१॥
जले स्थलेषु वृक्षेषु प्राचीरेषु गृहेषु च।
गृहप्रान्तरकोष्ठेषु दृश्यन्ते तत्र वानराः ॥२२॥
अथ रामो महाबाहुर्हनूमन्तञ्च लक्ष्मणम्।
विभीषणं जाम्बवन्तं सुग्रीवमङ्गदं तथा।
समाहूयाब्रवीद्वाक्यं विशुद्धां मतिमुद्वहन् ॥२३॥
मनो मम महाभागाः प्रसन्नं भाति संप्रति।
अपर्व्वणि पितॄन् यष्टुं त्वरते च मतिर्मम ॥२४॥
मन्ये तिथिरियं कृष्णा त्वश्वयुक् प्रथमा सिता।
एतामारभ्य सर्व्वासु पक्षेऽत्र तिथिषु ध्रुवम्।
अमाख्या भाविनी देवी व्याप्नुते पर्व्वरूपिणी ॥२५॥
तस्मादद्य समारभ्य यावद्दर्शं महत्तमाः।
करिष्ये पार्व्वणेनैव विधिना पितृपूजनम् ॥२६॥
हनूमानुवाच ॥
भद्रन्ते पुण्डरीकाक्ष क्रियतामेष वै विधिः।
ध्रुवं तव जयो भावी कीर्त्तिरेषा च पैतृकी ॥२७॥
सर्व्वे खलु करिष्यन्ति श्राद्धान्यत्र स्वधाभुजाम्।
ज्ञातिश्रैष्ठ्यं शुभां बुद्धिं विपक्षाशं धनं बहु।
जयं धर्मञ्च विपुलं कामान् प्राप्स्यन्ति चापरान् ॥२८॥

पितॄणामपराख्यानामर्चनाच्च यतः शुभा ।
तस्मादपरपक्षोऽयमश्वयुक् कृष्ण इत्युत ॥२९॥
श्राद्धस्य तर्पणस्याच तिलैर्गङ्गोदकैरपि ।
अनेकहयमेधानां प्रदत्ते फलमव्ययम् ॥३०॥

देव्युवाच ।

इत्युक्तो वायुपुत्रेण रामः प्रीतियुतः परः ।
गाढमालिङ्ग्य श्राद्धार्थमुवास दक्षिणामुखः ॥३१॥
यदैव प्रतिपत्श्राद्धं कृत्वा रामो व्यवस्थितः ।
तदा ददर्श रक्षांसि घोराणि प्रेषितानि च ।
रावणेन बलवता चतुरङ्गबलैः सह ॥३२॥
अकम्पनाख्यं सेनान्यं महाबलपराक्रमम् ।
अक्षौहिणीपतिं तं तु मारुतिर्निजघान ह ।
मुमोद परया प्रीत्या रामो दशरथात्मजः ॥३३॥
एवं प्रतिदिनं श्राद्धं कृत्वा युद्धं करोत्यसौ ।
निहत्याकम्पनं सख्यौ धूम्राक्षं निजघान ह ॥३४॥
धूम्राक्षं च निहत्यापि वज्रदंष्ट्रं जघान ह ।
वज्रदंष्ट्रे हते वीरे चिन्तया व्याकुलः परः ।
प्रहस्तं मातुलं युद्धे प्रेषयामास सज्जितम् ॥३५॥
तस्य युद्धे रात्रिरभूद् युद्धं तत्र महत्तरम् ।
देवासुरनराणाञ्च दैत्यानाञ्च भयानकम् ॥३६॥
तस्मिन्विनिहते प्रातः सचिन्तोऽभूद्दशाननः ।
प्रियार्थं तस्य चायातो मेघनादस्तथात्मजः ॥३७॥

मायाविना चेन्द्रजिता शरैर्बद्धौ रघूत्तमौ।
गरुड़ान्मोचितौ वीरौ रावणस्त्वागतस्ततः॥३८॥
रामरावणयोर्युद्धं महदासीत्तदद्भुतम्।
यत्र वीरा निपतिता दशकोटिसहस्रकम्॥३९॥
मुण्डमाला रक्तनद्यो बह्व्यस्तत्र समावहन्।
स्कन्धा अनृत्यन्बहुशः प्राहसन् मस्तका अपि॥४०॥
अक्षौहिणीप्रमाणेन वीरेषु निहतेषु हि।
स्कन्ध एकः समुत्थाय नृत्यते कुहको यथा।
दशस्कन्धेषु नृत्यत्सु मुण्ड एको हसत्युत॥४१॥
अथ राक्षसनाथोऽसौ युद्ध्वा रात्रिन्दिवद्वयम्।
हतभग्नरथाश्वादिः समरेऽभूत् पराङ्मुखः॥४२॥
ततः प्रबुद्धो यत्नेन कुम्भकर्णो महाबलः।
सर्वां तां वानरीं सेनां शक्तस्त्वर्वयितुं सखि॥४३॥
तस्मिन् प्रबुद्धे देवारौ कुम्भकर्णे महाबले।
देवाश्चिन्तासमायुक्ता ब्रह्माणमिदमब्रुवन्॥४४॥

देवा ऊचुः॥

कोटीनां पञ्चलक्षैश्च रक्षोवीरैः सुदुर्मदैः।
आवृतः कुम्भकर्णोऽसौ रामं योत्स्यति संयुगे।
वयं स्वस्त्ययनं कुर्मः प्रभो ब्रह्मन् मतं कुरु॥४५॥

देव्युवाच॥

इत्युक्तो देवतैर्ब्रह्मा पक्षं युद्धात्यशेषकम्।
रावणस्य बधस्यापि शुक्लपक्षेऽप्यनन्यथा॥

देव्या दृष्टिं विना नापि मरिष्यति दशाननः।
कदाचित् शुक्लपक्षे स देवीं यक्ष्यति रावणः॥
अविनाश्यस्तदा स स्यादतो देवी प्रबोध्यते।
इति संचिन्त्य मनसा ततो देवानुवाच ह॥४६॥४७॥४८॥

ब्रह्मोवाच।

सर्वैः स्वस्त्ययनं कार्य्यं श्रीरामस्य जयाय नः।
विधानज्ञाः कुरुध्व वै करोम्यहमपि ध्रुवम्।
किन्त्वृते बोधनं देव्याः कार्य्यसिद्धिः सुदुर्लभा॥४९॥
इत्युक्तास्ते देवगणाः सर्वे ते ब्रह्मणा सह।
देवीं सन्तुष्टुवुर्भक्त्या रावणेन प्रपीड़िताः॥५०॥

देवा ऊचुः॥

नमस्ये पुण्डरीकाक्षीं देवीं परमदेवताम्।
कालीं त्रिनेत्रां वरदां शाम्भवीं[1] शाङ्करीं शिवाम्॥५१॥
भक्तिप्रियां भक्तिरूपां भवानीं भववल्लभाम्।
भैरवीं भीमवदनां भीमां भीमाननां शुभाम्॥५२॥
वैष्णवीं विष्णुरूपाञ्च विष्णुकार्य्यकरीं क्रियाम्।
संहारकारिणीं सृष्टिकारिणीं स्थितिकारिणीम्॥५३॥
कपर्द्दिनीं करालाक्षीं चन्द्रशोभितमस्तकाम्।
श्यामां श्वेतां तथा गौरीं विचित्रां चित्रसुन्दरीम्॥५४।
कौमारीं शक्तिधात्रीञ्च देवानां शक्तिरूपिणीम्।

---

१ B has शाकम्भरीं।

चतुर्भुजाञ्च द्विभुजां षड्भुजाष्टभुजान्तथा ॥५५॥
देवीं दशभुजां कालीं बाहुषोड़शसंयुताम् ।
अष्टादशभुजां कालस्वरूपां लघुनेत्रिणीम् ॥५६॥
सत्त्वस्वरूपां कोटिच्छविं निष्कलरूपिणीम् ।
स्थूलां शुद्धाञ्च सूक्ष्माञ्च खर्वाञ्चाथ महत्तमाम् ॥५७॥
दीर्घजिह्वामप्रमेयां स्तवनीयां वृहच्छिलाम् ।
कामरूपां कामगमां मन्त्ररूपां जगन्मयीम् ॥५८॥
ब्रह्माण्डकोटिजठरां सर्वामाकाशवासिनीम् ।
विन्ध्याद्रिनिलयां शैलतनयां लोकपावनीम् ॥५९॥
शिववृक्षस्थितां विल्वदलस्थां गिरिवासिनीम् ।
श्रीदुर्गां दुर्गतिहरां शान्तां शान्तजनप्रियाम् ॥६०॥
पद्मालयाञ्च पद्माक्षीं सहस्रदलवासिनीम् ।
त्वं स्वाहा त्वं स्वधा त्वं ह्रीस्त्वं बुद्धिस्त्रिविधा प्रभुः ॥६१॥

देव्युवाच ।

एवमुक्त्वा तदा देवी सत्त्वरूपा सनातनी ।
कन्यारूपेण देवानामग्रतो दर्शनं ददौ ॥६२॥

देवा ऊचुः ॥

त्वां नमस्यामहे देवीं दयार्द्रहृदयां शिवाम् ।
स्त्रीरूपां परमानन्दरूपां ब्रह्मसनातनीम् ।
नमामः प्रणमामस्त्वां संनमामः सुभक्तितः ॥६३॥
सर्वस्वरूपां सर्वेशीं सर्वशक्तिसमन्विताम् ।
त्वां नमस्यामहे देवी भयेभ्यस्त्राहि नोऽम्बिके ॥६४॥

कन्योवाच ।

देवा ब्रह्मादयः सर्वे परितुष्टास्मि वो ध्रुवम् ।
दुर्गया प्रेषिता चाहं शृणुध्वं यत् ब्रवीमि वः ॥६५॥
श्वो विल्ववृक्षे तां देवीं बोधयिष्यथ सम्प्रति ।
युष्माकमुपरोधेन बोधनं सा गमिष्यति ॥६६॥
स्तुत्वा प्रणम्य तां बोध्य पूजयिष्यथ तां शिवाम् ।
भविता कार्यसिद्धिर्वो रामस्य च महात्मनः ॥६७॥
इत्युक्ता सा तदा देवी तत्रैवान्तरधीयत ।
ब्रह्मा देवगणैः सार्द्धं क्षितौ विल्वं समागतः ॥६८॥

इति बृहद्धर्मपुराणे व्यासजाबालिसंवादे देवीबोधनोपाय एकविंशतितमोऽध्यायः ॥

---

# अथ द्वाविंशतितमोऽध्यायः ।

देव्युवाच ।

पृथिवीतलमागत्य ब्रह्मा देवगणैः सह ।
निर्ज्जने क्वापि ददृशे विल्ववृक्षं सुदुर्गमे ॥१॥
तस्यैकपत्रे रुचिरे[१] रुचिरां नवबालिकाम् ।
निद्रितां तप्तहेमाभां बिम्बोष्ठीं तनुमध्यमाम् ।
अनावृताङ्गीं निश्चेष्टां रुचिरां नवबालिकाम् ॥२॥
विरिञ्चिरथ तां दृष्ट्वा विस्मितस्तत्त्वरित्ववित् ।
तुष्टाव भूयः प्रणतः सर्वैः सुरगणैः सह ॥३॥

ब्रह्मोवाच ।

जाने देवीमीदृशीं त्वां महेशीम्
क्रीड़ास्थाने स्वागतां भूतलेऽस्मिन् ।
शत्रुस्त्वं वै मित्ररूपा च दुर्गा
दुर्गम्या त्वं योगिनामन्तरेऽपि ॥४॥
एकानेका सूक्ष्मरूपाविकारा
ब्रह्माण्डानि कोटिकोटिः[२] प्रसूषे ।
कोऽहं विष्णुः कोपरो वा शिवाख्यो
देवास्त्वन्ये स्तोतुमीशा भवेम ॥५॥

---

१ B omits three lines from तस्यैकपत्रे रुचिरे ।
२ A has ब्रह्माण्डानी कोटीकोटीः ।
B has ब्रह्माण्डानीः कोटिकोटिः ।
C has ब्रह्माण्डानी कोटिकोटिः ।

त्वं वै स्वाहा त्वं स्वधा त्वञ्च वौषट्
त्वञ्चौङ्कारस्त्वञ्च लज्जादिबीजम्।
त्वं वै स्त्री च त्वं पुमान् सर्वरूपा
त्वां संनत्वा बोधये न प्रसीद ॥ ६ ॥
त्वं वै वर्षा देवता कालरूपा
त्वं वै मासस्त्वं ऋतुश्चायने द्वे।
कव्यं भुङ्क्ते त्वं यथा वै स्वधाख्या
तद्वत् स्वाहा हव्यभोक्त्र्यम्ब देवि॥ ७॥
त्वं वै देवाः शुक्लपक्षेषु पूज्या-
स्त्वं पित्राद्याः कृष्णपक्षे प्रपूज्याः।
त्वं वै सत्यं निष्प्रपञ्चस्वरूपम्
त्वां नत्वाहं बोधये नः प्रसीद॥ ८॥
द्वारेणार्केणायने त्वाद्यके त्वाम्
मुक्तिं यान्ति त्वत्पदध्यानयोगात्।
चन्द्रद्वारेणायने तु द्वितीये
त्वां वै मुक्तिं यान्त्यसौ देवि सूक्ष्माम्॥ ९॥
उच्चैर्नीचं नीचमुच्चैश्च कर्तुम्
चन्द्रश्चार्कं त्वं विधातुं समर्था।
तत्राकाले शक्तिरूपा भव त्वम्
त्वां नत्वाहं बोधये तत् प्रसीद॥ १०॥
त्वं वै शक्ती रावणे राघवे वा
रुद्रेन्द्रादौ मय्यपीहास्ति या च।

सा त्वं शुद्धा राममेकं प्रवर्त्त
तत् त्वां देवीं बोधये नः प्रसीद ॥११॥

देव्युवाच।

एवं स्तोत्रैः सा प्रबुद्धा महेशी
बाल्यं त्यक्ता सा युवत्यास्त सद्यः।
निद्रां त्यक्ता चोत्थिता देवतानां
दृष्टिं प्राप्ता चोग्रचण्डेति नाम्ना ॥१२॥

चण्डिकोवाच।

तुष्टाहं वो वाञ्छितं वै वृणुध्वं
तान्ते देवाः संप्रपन्ना बभूवुः।
ब्रह्मोवाच। श्रीमतीं त्वां स्वमिष्टं
देवादीनां शृण्वतां मोदयुक्तः ॥१३॥
ऐं रावणस्य बधार्थाय रामस्यानुग्रहाय च।
अकाले तु शिवे बोधस्तव देव्या कृतो मया ॥१४॥
तस्मादद्यार्द्रया युक्तनवम्यामाश्विने शुभे।
रावणस्य बधं यावत् अर्च्चयिष्यामहे वयं ॥
ततो विसर्ज्जितास्माभिः यथास्थानं गमिष्यसि ॥१५॥
एवं क्षितितले स्वर्गे पाताले च नरादयः।
अर्च्चयिष्यन्ति विशेषेण यावत् सृष्टिः प्रवर्त्तते ॥१६॥
नवम्यां कृष्णपक्षार्द्रानक्षत्रे त्वां महेश्वरीं।
बोधयिष्यन्ति पूजायै महत्यै जगदम्बिके ॥१७॥

देव्युवाच।

इत्युक्ता ब्रह्मणा देवी प्रत्युवाच दयावती।
अनुग्रहाय लोकानामिह लोके परत्र च ॥१८॥

चण्डिकोवाच।

एवमेवास्तु सत्यं मे[१] वचो ब्रह्मन्महामते।
बोधिताहं त्वया कार्य्यं करिष्यामि तवेप्सितं ॥१९॥
अद्य रक्षः कुम्भकर्णो मरिष्यति महाबलः।
अतिकायस्त्रयोदश्यां लक्ष्मणास्त्रैः मरिष्यति ॥२०॥
रावणस्तु चतुर्द्दश्यां युद्धयात्रां करिष्यति।
मेघनादममावास्यानिशीथे स हनिष्यति ॥२१॥
ततः प्रतिपदं प्राप्य मकराख्यो मरिष्यति।
मरिष्यन्ति द्वितीयायां वीरा देवान्तकादयः ॥२२॥
ततो रामधनुर्द्दिव्यं सुमेरुगुरु चाद्भुतम्।
सप्तम्यां संप्रवेक्ष्यामि ततोऽष्टम्यां रणो भवेत्॥ २३॥
रामरावणयोस्तीव्रं दृष्टं त्रैलोक्यवासिभिः।
अष्टमीनवमीसन्धौ पतिष्यन्त्यस्य मौलयः ॥२४॥
पुनः पुनः शिरोवृन्दनिपातोऽस्य भविष्यति[२]।
नवम्यामपराह्ने वै रावणोऽसौ पतिष्यति।
दशम्यां परमानन्दो जयी रामो भविष्यति ॥२५॥
एवं पञ्चदशाहानि मम पूजामहोत्सवः।

---

१ B has ते।

२ B has पुनः पुनः शिरोवृन्दोनिपातितोऽस्य भविष्यति।

अत्र त्रयोदशाहानि बिल्वे मां पूजयेत्ततो ॥२६॥
सप्तम्यां गृहमानीय पूजयित्वा दिनद्वयं ।
नानाविधैश्च बलिभिः पूजाजागरणादिभिः ॥
अष्टम्यामुपवासेन नवम्यां बलिदानतः ।
अर्च्चयेन्मां महाभक्त्या योगिनीश्चापि कोटिशः॥२७॥२८॥
अष्टमीनवमीसन्धिकालोऽयं वत्सरात्मकः ।
तत्रैव नवमीभागः कालः कल्पात्मको मम ॥२९॥
सर्व्वैरपि मे पूजा कर्त्तव्या तु दिनद्वयम् ।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा भक्तिसंयुतः ॥३०॥
त्यक्त्वा विषयकार्य्याणि हिंसाकलहमत्सरान् ।
स्वच्छचित्ता अपचये लाभबुद्धियुताः सदा ॥३१॥
नाध्यापनं नाध्ययनं न युद्धं क्रयविक्रयौ ।
न चार्घा न च कर्षादि कर्त्तव्यं तत्र वै क्वचित् ॥३२॥
भगलिङ्गाभिधानैश्च शृङ्गारवचनैस्तथा ।
गानं कार्य्यं भोजयेच्च ब्राह्मणांस्तोषयेत् स्त्रियः ॥३३॥
जुहुयाद्बिल्वपत्रैश्च सघृतैः परमादरात् ।
एवं यः कुरुते पूजां स सर्व्वार्थेश्वरो भवेत् ॥३४॥
अकुर्व्वाण इमां पूजां शारदीं मम पुष्कलाम् ।
प्रत्यवायी पितॄन् देवान् पीड़येच्चिरनारकी ॥३५॥
महाविपत्तारकत्वाद्गीयतेऽसौ महाष्टमी ।
महासम्पद्दायकत्वात् सा महानवमी मता ।
कर्मणाञ्च समारम्भे विजया दशमी मता ॥३६॥

मूलापूर्वोत्तराषाढाश्रवणाभानि चेत्तथा ।
तिथिषु स्युः क्रमाद्ध्रुवंसदा बहुतरं फलम् ।
यथा प्रीतिर्महापूजा जनितेयं भविष्यति ॥ ३७॥
यथा च रावणवधात् कीर्त्तीरामस्य पुष्कला ।
तथा तव महाकीर्त्तिर्मत्पूजास्थापनात् भवेत् ॥ ३८॥
पूजां कुरु महाभाग ममाद्यां त्वन्तु शारदीम् ।
कारयापि च देवादीन् स्वर्गब्रह्माण्डलादिषु ॥ ३९॥

देव्युवाच ।

इत्युक्त्वा सा तदा देवी तत्रैवान्तरधीयत ।
देवा अपूजयन्देवीं स्वर्गेऽथ पृथिवीतले ॥ ४०॥
मनुष्यरूपतां गत्वा महापूजामवर्त्तयत् ।
रामोऽपि नाशयामास नवम्यां रावणानुजम् ॥ ४१॥
ततोऽतिकायमरणं यात्रा वै रावणस्य च ।
इन्द्रजिन्मरणञ्चैव देवान्तकवधस्तथा ।
शुक्लद्वितीयापर्यन्तं मकराचवधस्तथा ॥ ४२॥
एवं नवसु घस्रेषु रात्रिन्दिवमहारणैः ।
निपेतुर्वानरा लक्षकोट्यो राक्षसैर्हताः ।
कोट्यः पञ्च लक्षाणि सहस्राणि च षोड़श ॥ ४३॥
निपेतूराक्षसा वीराः साश्वेभरथपत्तिकाः ।
स्कन्धा अनृत्यन् बहुशो मुण्डाश्च जहसुः सखि ॥ ४४॥
मुण्डमालावहा घोरा रक्तनद्यश्च लक्षशः ।
भूताः सागरगा वेगान्महायुद्धे भयानके ।

काका ऊर्द्ध्वमुखैरस्रमपिवन् परमादरात् ॥४५॥
ततस्तृतीयामारभ्य रामरावणयोर्महत्।
महाभयानकं युद्धं दारुणं संबभूव ह।
नवाहयुद्धद्विगुणं युद्धमासीन्महत्तरम् ॥४६॥
ततो रामो ववर्षाथ रावणस्य दुरात्मनः।
वाक्ययुद्धं महत्कृत्वा सुदीप्तं धनुराददे ॥४७॥
दुर्निरीक्ष्यस्तदा रामो बभूवातिभयङ्करः।
मेरुतुल्यगुरौ चापे दश वाणान् समादधौ।
पातयामास दश वै मस्तानि कालसन्निके ॥४८॥
एवमष्टोत्तरशतं छिदान् कृत्वा रघूत्तमः।
नवम्यामपराह्णे वै पातयामास रावणम् ॥४९॥
पतिते च महावीरे रावणे लोकरावणे।
सुभीमे विंशतिभुजे दशास्ये लोककण्टके ॥५०॥
चकम्पे पृथिवी सर्वा गिरयः सागरा अपि।
स्त्रियो रुरुदुरागत्य सच्चकार विभीषणः ॥५१॥
ततः प्रभाते विमले दशम्यां विजये जये।
सीतामानाय्य सुश्रुणीं ददर्श रघुनन्दनः ॥५२॥
वानराः ददृशुः सर्वे सीतां साक्षादिव श्रियम्।
प्रणेमुः परया भक्त्या जानकीं जननीमिव ॥५३॥
अस्या अर्थे वयं सर्वा पृथिवी विचिता मुहुः।
सखा यदर्थे सुग्रीवो बाली नष्टो यदर्थतः ॥५४॥
दग्धा लङ्का यदर्थेन बद्धः सिन्धुर्यदर्थतः।

यस्या अर्थे हताः सर्वे राक्षसाश्च सरावणाः।
सेयं सीता रामभार्या जानकी नृपतिस्नुषा॥५५॥

देव्युवाच।

सीताथ रामवाक्येन प्रवेष्टुमग्निमैच्छत।
ब्रह्मेशाद्याः सुराः सर्वे समागत्य न्यषेधयन्॥५६॥
अग्निप्रविष्टां सीताञ्च रामः प्राप ह्यकल्मषाम्।
मृतान् सर्वान् वानरर्क्षानिन्द्रश्चामृतवर्षणैः।
अजीवयत्तांश्च नीत्वा लङ्कायाञ्च विभीषणम्।
भूपं कृत्वा तेन सार्द्धं ययौ रामः पुरात्ततः॥५७॥५८॥
सेतौ शिवं स्थापयित्वा तीर्त्वा सत्यं पितुः प्रभुः।
अयोध्यामागतो रामः पुनः पौरान् प्रमोदयन्॥५९॥
दशवर्षसहस्राणि दशवर्षशतानि च।
रामो राज्यमुपास्यासौ ब्रह्मलोकं ततोऽगमत्॥६०॥
इत्येतद्वां समाख्यातं कालतीर्थौघकं समम्।
आश्विनी पौर्णमासी च शेषतीर्थं किलाश्विने॥६१॥

इति बृहद्धर्मपुराणे कालतीर्थकथने रावणबधो
द्वाविंशोऽध्यायः।

---

## अथ त्रयोविंशोऽध्यायः ।

देव्युवाच ।

आश्विन्यां पौर्णमास्यान्तु लक्ष्मीः कमलसम्भवा ।
रात्रौ भ्रमति सर्वत्र कृपया ब्रुवती त्विदम् ॥१॥
उपोष्य दिवसं सर्वं प्रदोषे संप्रपूज्य च ।
नारिकेलोदकं पीत्वा को जागर्त्ति महीतले ॥२॥
अस्याहमनुगच्छामि धर्मार्थकाममोक्षदा ।
तस्मात् संपूजयेल्लक्ष्मीं भक्त्या श्रद्धया सखीद्वय ॥३॥
प्रदोषसमये मर्त्यः संलिप्सुः परमां श्रियम् ।
अतः परममावास्या शुभा दीपान्विता श्रुता ॥४॥
पार्वणेन विधानेन श्राद्धं कुर्यादिहैव तु ।
सायं विसर्ज्जयेच्चैव पितॄनस्यां तिथौ सखि ॥५॥
रात्रौ निशीथव्याप्तायाममावास्यामिहैव तु ।
पृथ्वीतलं समायाता काली दिग्वसनाम्बिका ॥६॥
असुराणां वधार्थाय भवाय च सुपर्वणाम् ।
यदा चकम्पे पृथिवी तद्भारासहने स हि ।
तदा शिवः शवो भूत्वा तां दधार त्रिलोचनाम् ।
तदा सर्वे स्थिरीभूता कूर्मशेषधरादयः ॥७॥८॥

अतस्तामत्र वै भक्त्या[१] देवदेवीं द्विजातयः ।
पूजयेयुर्मुदा श्यामां पशुपुष्पार्घ्यसम्पदा ॥९॥
वासोभिर्भूषणैरन्नैः पायसैर्विविधैरपि ।
गीतैर्वाद्यैश्च नृत्यैश्च दीपमालासमन्वितैः ॥१०॥
मालसीगाननिरता भगलिङ्गाभिशब्दिनः ।
जितेन्द्रिया जिताहारा जितनिद्रा महाशया ॥११॥
पूजयेयुर्महा[२]कालीं श्यामां चारुचतुर्भुजाम् ।
वराभयकरां वामे दक्षिणेऽसिनृमुण्डकाम् ॥१२॥
संहारकालनिविड़ध्वान्तकायां दिगम्बरीम् ।
पापकोटितरध्वान्तं संहरन्तीमिवोज्ज्वलाम् ॥१३॥
शवरूपमहादेवहृदये परमासने ।
तिष्ठन्तीं मुक्तकेशीञ्च ललज्जिह्वां हसन्मुखीम् ॥१४॥
द्रवद्रक्तां सृक्कणीभ्यां दानवानां भयानकाम् ।
सत्वरूपां सदा शुद्धां केवलां निष्कलां शिवाम् ॥१५॥
पीनोन्नतस्तनां देवीं नानाभूषणभूषणाम् ।
ब्रह्मविष्णिवन्द्रकालादिप्रणतां प्राणरूपिणीम् ॥१६॥
योगिनीभिः परिवृतां नृत्यन्तीभिरितस्ततः ।
ददतीभिः पिवन्तीभिः शोणितं मधुचासवम्[३] ॥१७॥
इत्यादि चिन्तयित्वा तां पूजयेयुर्मुदान्विताः ।
प्रीतये सर्वदेवानां विष्णोस्तु परमात्मनः ॥१८॥

---

१ B has भक्त्यैव । २ B has मुदा ।
३ B has मधुरासवम् ।

महाष्टमीविधानेन विधिनागमिकेन वा।
पूजामिमां प्रकुर्वीत बल्यन्नाद्यैर्यथोचिताम् ॥१९॥
ब्राह्मे मुहूर्त्तसमये तां विसर्ज्य जगन्मयीम्।
चतुष्प्रहरपूजाया दद्याद्विपुलदक्षिणाम्।
परत्राहनि वै विप्रान् भोजयेद्भक्तितत्परः ॥२०॥
ततश्च कार्त्तिकीनाम पौर्णमासी सुविश्रुता।
यत्र रासोत्सवश्चक्रे गोपीभिर्नन्दनन्दनः ॥२१॥
तस्मात्तत्र मुदायुक्तो गोपिकापतिमीश्वरम्।
पूजयेत् सह गोपीभिः प्रतिमासु यथाविधि ॥२२॥
दिवसेऽनशनं कृत्वा सायञ्चातीत्य मानवः।
चन्द्रे च विपुले पूर्णे पूजयेन्नन्दनन्दनम् ॥२३॥
नवीननीरदश्यामं कृष्णं कमललोचनम्।
वनमालानिवीताङ्गं हारकेयूरशोभितम् ॥२४॥
तप्तहेमोज्ज्वलत्कान्तिवसनेन विराजितम्।
गोरोचनायास्तिलकं ललाटे लोलकुन्तले ॥२५॥
शोभयन्तं मञ्जुरावौ नूपुरौ चरणद्वये।
मदनालसविभ्रान्तनयनद्वयपङ्कजम् ॥२६॥
युवतीभीरसाढ्याभिः ज्वलत्कनककान्तिभिः।
कामभावेन शीत्कारवाससूखलनसालसम् ॥२७॥
नयनद्वयमारक्तं दधानाभिः सुमण्डितम्।
पार्श्वस्थयोर्युवत्योस्तु मध्यस्थं नीलसुन्दरम् ॥२८॥
एवन्तु गोपीस्राङ्कल्यादनेकचारुविग्रहम्।

सर्वाभिः स्वस्वनिकटे पूर्णरूपश्च लक्षितम् ॥ २९ ॥
अन्यत्र प्रतिबिम्बांश्च प्रपश्यन्तीभिरुज्ज्वलम् ।
एवं युगलकैशोरमुज्ज्वलं भावमाश्रितम् ।
चिन्तयेत् सततं नन्दनन्दनं ब्रह्मवन्दितम् ॥ ३० ॥
रम्ये वृन्दावने पूर्णे ज्योत्स्नापुष्पैः सुशोभिते ।
स्वागतासनपाद्याद्यैर्नैवेद्यैर्विविधैरपि ॥
वस्त्रालङ्कारभूषाद्यैराहूय ब्राह्मणानपि ।
नृत्यगीतादिवाद्यैश्च कारयेद् गोपिकोत्सवम् ॥ ३१ ॥ ३२ ॥
संपूज्य दक्षिणान्दत्त्वा ब्राह्मणान् परितोष्य च ।
विसर्जयेत्ताः प्रतिमाः परत्राहनि तूत्सवैः ॥ ३३ ॥
भोजयेत् ब्राह्मणान्मिष्टं कृत्वैवं विधिमुत्तमम् ।
सपुत्त्रपौत्त्रस्वजनो विमुक्तः पापसञ्चयैः ॥ ३४ ॥
वैकुण्ठेश्वरपादाब्जमन्ते याति निरामयः ।
ततोऽग्रहायणी नाम पौर्णमासी च पुण्यदा ॥ ३५ ॥
युक्ता मृगशिरोभेण कालतीर्थमुदाहृतम् ।
पौषमाघाख्यमासाभ्यां रवेर्वारे दिवा यदि ॥ ३६ ॥
अमावास्याव्यतीपातश्रवणाः सन्ति योगतः ।
तदार्द्धोदय आख्यातः कोटिसूर्य्यग्रहैः समः ॥ ३७ ॥
स्नानदानादि कुर्वीत श्राद्धञ्च तीर्थ उत्तमे ।
नातः परतरः कालो वर्त्तते कालतीर्थतः ॥ ३८ ॥
अयं सुदुर्लभः कालो मन्तव्यः पुण्यलिप्सुभिः ।
ततश्च फाल्गुणे मासि द्वादशी धवला शुभा ॥ ३९ ॥

गोविन्दः पूज्यते तत्र गोविन्दद्वादशीति सा।
अत्र संपूजयेद्देवं गोविन्दं परमेश्वरम् ॥४०॥
देवदेवीभिराराध्यं नैवेद्यपुष्पचन्दनैः।
पूर्वेऽह्नि संयमी भूत्वा गोविन्दनाम संस्मरन् ॥४१॥
चिनुयात् द्वादशीघस्रैः पूर्वाह्णव्यापके सति।
पुष्पाणि द्वादशभेदानि तुलसीच्छदनानि च ॥४२॥
दद्यात् द्वादशनैवेद्यं भोजयेत् द्वादश द्विजान्।
स्वयञ्च फलमूलादि भुञ्जीत सुसमाहितः ॥४३॥
इन्द्रञ्च सुरभिञ्चैव तथा गोवर्द्धनं गिरिम्।
गोगोपगोपीश्च मुदा पूजयेच्चन्दनादिभिः ॥४४॥

सख्यावूचतुः।

मातर्देवि शिवे कस्माद्विधिरेष तु फाल्गुणे।
युज्यते भाद्रमासेऽसौ न कथं विधिरुत्तमः ॥४५॥

देव्युवाच।

पुराभिषिक्त इन्द्रेण गोविन्दो मासि भाद्रके[१]।
गोपगोपीगवां मध्ये सर्वदेवेश्वरः स्वयम् ॥४६॥

---

१ B and C have the following additional Verses.
नाभिषिक्तो भवेद्भाद्रद्वादश्यां जगताम्पतिः।
इन्द्रश्चक्रे पयः सार्धं सुरभे न तु मे कुधीः॥
अहञ्चैवाभिषेक्ष्यामि गोविन्दद्वादशीतिथौ।
कथं वा द्वादशी सा च विना मम जलेन वै॥
उपस्थिताभिषेकाय गोविन्दस्य महात्मनः।

समुद्रस्तत्समाकर्ण्य पयोभिः सुरभेर्हरिम् ।
अभिषिक्तं महात्मानं चिन्तयामास सागरः ॥४७॥
मम तोयैः कथं देवो हरिः श्रीमान्सनातनः ।
इति संचिन्त्य जलधिर्विप्ररूपेण भूतलम् ।
बभ्रामान्विष्य भाद्रीयां द्वादशीं यत्नवान् परः ॥४८॥
सप्तमे मास्यनुप्राप्ते फाल्गुणे नाम तां तिथिम् ।
अप्राप्नुवन्रुषाविष्टो जगाद द्वादशीं प्रति ॥४९॥

समुद्र उवाच ।

तिथे द्वादशि रे मूर्खे किं न जानासि मामपि ।
त्वद्दिने धरणीं सर्वां प्लावये प्रतिवत्सरम् ।
यथा त्वयि न पूजा स्यात् हरेः[1] सर्वेश्वरस्य हि ॥५०॥
एवं यदा तु चुक्रोध समुद्रो द्वादशीं प्रति ।
तदा प्रादुरभूद्देवी द्वादशी सभया शुभा ॥५१॥
गौराङ्गी पीतवसना द्विभुजा श्यामपृष्ठिका ।
उवाच वचनं किञ्चिद्विनयेन जलेश्वरम् ॥५२॥

द्वादश्युवाच ।

अहं भाद्रपदीया तु फाल्गुणे मास्युपस्थिता ।
कल्पयित्वा फाल्गुणीं तु मामेव त्वं व्रतं कुरु ॥५३॥

समुद्र उवाच ।

बिभेषि द्वादशि कथं भाद्रीया फाल्गुणे सिता ।
त्वय्येव फाल्गुणीयायां श्रीपतिः पूर्वमेव च

---

१ C. has विष्णोः ।

अभिषिक्तः किलेन्द्रेण कश्यपादितिसम्भवः ॥५४॥
योऽभिषिक्तः किलेन्द्रेण गृहीतयज्ञसूत्रकः ।
छलयित्वा बलिं सर्वं ददाविन्द्राय वामनः ॥५५॥
तस्मात् त्वयि पुरा भूतो गोविन्दोऽदितिनन्दनः ।
त्वय्यहं पूजयिष्यामि गोविन्दं यदुनन्दनम् ॥५६॥
तामभिक्रम्य भाद्रीयां अद्यारभ्य तिथे त्वयि ।
गोविन्दं पूजयिष्यन्ति मात्कथाश्चित्तकुञ्जनम् ॥५७॥
कथामेताञ्च शृणुयात् त्रयोदश्यां पुनः पुमान् ।
ब्राह्मणान् भोजयेद्भूयो भोजनञ्च स्वयञ्चरेत् ॥५८॥

हेत्युवाच ।

इत्युक्त्वा सा द्वादशी च प्रणनाम जलेश्वरम् ।
तदा प्रादुरभूद्देवो देवकीनन्दनो हरिः ॥५९॥
समुद्रस्याद्भुतं दृष्ट्वा वाञ्छितार्थप्रपूरकम् ।
रोमाञ्चितसमग्राङ्गो गोविन्दमभ्यषेचयत् ॥६०॥
तदा दिशासु सर्वासु बभौ शङ्खजयध्वनिः ।
अभिषिक्तो ययौ कृष्णः सेन्द्रैः सुरगणैः स्तुतः ।
समुद्रस्य कृतार्थोऽगात् स्वस्थानं देवपूजितः ॥६१॥
इत्येतत् कथितं सख्यौ कालतीर्थं हि द्वादशी ।
व्रतमेतद्विधेयन्तु स्त्रीपुंसामनुवार्षिकम् ॥६२॥
शुद्धकाले समारभ्य द्वादशाब्देषु या सिता ।
फाल्गुणे मासि भवति द्वादशी द्वादशीश्वरम् ॥६३॥
तस्यां संपूजयेद्देवं नरा नार्य्यश्च भक्तितः ।

समापयेत् शुक्लकाले जुहुयात् द्वादशाहुतीः ॥६४॥
भोजयेद्द्वादश द्रव्यं सुमिष्टं द्वादश द्विजान् ।
द्वादशाक्षरमन्त्रस्य द्वादशापि[1] स्तवांश्चरेत् ॥६५॥
ॐकाररूपजगतामाद्य ब्रह्मस्वरूपक ।
अनन्तजगदाधार गदाधर नमस्तु ते ॥६६॥
[2]तेजःप्रसादरूपाय तेजोरूपाय तेजसे ।
तेजः प्रदीप्तलोकाय नमस्ते तेजसात्मने ।६७॥
न क्षीणस्त्वं न चरसि नारायण नरोत्तम ।
नवनीरधरश्याम नमस्ते नलिनेक्षण[3] ॥६८॥
मोक्षसेवितपादाब्ज मोहव्यूहविमोहन ।
मोदेनात्मस्वरूपेण मोदिताय नमोऽस्तु ते ॥६९॥
[4]भजतां भवनाशाय भव्योदधिशयाय च ।
भवाय भवभङ्गाय नमस्ते भवलक्षण: ॥७०॥
गगनालक्षरूपाय गगनव्याप्तिकारिणे ।
गरिष्ठाय गरीयाय गहनाय नमोऽस्तु ते ॥७१॥
वरिष्ठे वरणार्थाय वन्दनीयप्रदाय च ।
वरबीजप्रबीजाय वरहन्त्रे नमोऽस्तु ते ॥७२॥
तेजःप्रसादरूपाय तेजोरूपाय तेजसे ।
तेजःप्रदीप्तलोकाय नमस्ते तेजसात्मने ॥७३

१ C has जपश्चो द्वादशैव तु ।
२ B omit this verse ।
३ B has भवलक्षण ।
४ B omit ।

वाणीनाथाय बालाय वायुरूपाय वाहिने।
बान्धवाय बलद्वाङ्गबलयुक्ताय ते नमः ॥७४॥
सुखाय सुखगम्याय सुदत्ताय[५] सुखात्मने।
सुन्दरत्नसमुद्रैकदेशलेशाय ते नमः ॥७५॥
देशदेशकरूपाय देशाय देशकाय च।
देवत्रिकोटिदेहाय देवदेहाय ते नमः ॥७६॥
वामदेवस्वरूपाय वामनाय नमो नमः।
वाराहतनवे बालवपुषे ते नमो नमः ॥७७॥
यज्ञयज्ञाय यज्ञाय यजमानाय ते नमः।
यजुरादिविदे यज्ञयष्टव्याय नमो नमः ॥७८॥
द्वादश स्तव एकोऽसौ जप्तव्यो गेय उच्यते।
सर्ववेदार्थसारोऽयं ब्रह्मलोकेऽपि गीयते ॥७९॥
भगवन्तं वासुदेवं स्तवेनानेन चान्वहम्।
स्तुत्वा नत्वा फाल्गुनस्य द्वादश्यान्तु विशेषतः।
स मुक्तः सर्वपापेभ्यो वैष्णवीमाप्नुते गतिम् ॥८०॥
कृत्वा चैवं गुरूनत्वा दत्त्वा विपुलदक्षिणाम्।
सर्वाभीष्टं लभेन्मर्त्यो गोविन्दद्वादशीव्रतात् ॥८१॥
ततश्च फाल्गुनी पौर्णमासी मन्वन्तरा मता।
चैत्रमासस्य कृष्णा या तिथिर्नाम त्रयोदशी ॥८२॥
वारुणेन समायुक्ता वारुणीति च गीयते।

---

५ C has सुखदाय and B has सुन्दराय।

त्रिधा सा विहिता सद्भिर्महा चैव महामहा ॥८३॥
शनिवारस्य योगेन सा महावारुणी मता ।
महामहेति विख्याता शुभयोगस्य तत्र चेत् ॥८४॥
सहस्रैः शतसहस्रैर्कोटिभिश्च क्रमादिमाः ।
सूर्य्यग्रहफलं सर्वा दुर्लभा ददते सखि ॥
ततः शुक्ला तृतीया च ख्याता मन्वन्तरा शुभा ॥८५॥
एवं हि तीर्थानि मयोदितानि
मासेषु सर्वेषु विशिष्य सख्यौ ।
[1]आत्मोपयुक्तानि नृणां हि तीर्था-
न्युपाहरे तानि निबोधतञ्च ॥८६॥

इति बृहद्धर्मपुराणे व्यासजाबालिसम्वादे कालतीर्थकथनं चयो-
विंशतितमोऽध्यायः ॥

---

१ B has चयो ।

## चतुर्विंशतितमोऽध्यायः।

देव्युवाच।

स्वजन्मदिवसश्चैव पित्रोर्मरणवासरः।
दृश्यते च गुरुर्यत्र यदा तीर्थञ्च लभ्यते॥
गङ्गादेशे सर्वकालस्तीर्थमेवोच्यते परम्।
पुत्त्रादिसंस्कारदिनं कालतीर्थमुदाहृतम्॥ १-२॥
यदा च लभ्यते साधुरतिथिश्च तथैव सः।
पुराणपाठकालश्च पुराणारम्भकस्तथा॥
यदारम्भसमाप्तिश्च स कालस्तीर्थमुच्यते।
सत्कर्मवासना यत्र स कालस्तीर्थ उत्तमः॥ ३-४॥
स्वोपयुक्तानि तीर्थानि कालरूपाणि वै सखि।
अमावास्या सोमवारे आदित्याहे च सप्तमी॥
चतुर्थ्यङ्गारवारे च अष्टमी गुरुवासरे।
सूर्यग्रहसमा एते कालाः सद्भिः प्रपूजिताः॥ ५-६॥
अष्टमी मङ्गलाहे च तथैव च चतुर्दशी।
कालतीर्थे समुद्दिष्टे चन्द्रग्रहशतोपमे॥ ७॥
गुरुवारे यदा पुष्या केवला वाथ सम्भवेत्।
तत्र स्नानादि गङ्गायां त्रिकोटिकुलमुद्धरेत्॥ ८॥
दिनत्रये व्यतीपातो रवौ तत्संक्रमोऽपि च।
सत्कर्मणां समारम्भे दिवसाः साधवस्त्विमे॥ ९॥

मार्गशीर्षे शुक्लपक्षे द्वादश्यां हरिरीश्वरः ।
वरनामासुरवरमवधील्लोकतुष्टये ॥ १० ॥
वराहद्वादशी तेन वराहप्रीतिदा परा ।
बुधाष्टमी बुधे माघे बुधजन्मदिनं मतम् ॥ ११ ॥
भाद्रे चतुर्दशी शुक्ला तत्रानन्तः प्रपूज्यते ।
कार्त्तिके कृत्तिकायोगात् कार्त्तिकेयः प्रपूज्यते ॥ १२ ॥
इत्यादिनानातिथयः सद्व्रतानि[1] च यानि वै ।
तानि चोक्तानि तीर्थानि किमन्यत् कथयामि ते ॥ १३ ॥

इति बृहद्धर्मपुराणे कालतीर्थानि चतुर्विंशतितमोऽध्यायः ।

---

१ B सद्व तानि ।

# पञ्चविंशतितमोऽध्यायः ।

सख्यावूचतुः ।

मातर्दुर्गे महेशानि पुराणं यत् त्वयोदितम् ।
किं तद्वस्तु मतं किम्वा मूलं तस्य च मे वद ॥ १ ॥

देव्युवाच ।

अथेदं शृणुतं सख्यौ [पुरा ब्रह्मविनिर्मितम् ।
ह्रदा यद्रचितं यस्मात् भवतीभ्यां प्रकाशये ॥ २ ॥
भवत्यौ खलु शुश्रूषू भक्तिमत्यौ सदामती ।
शृणुतं शृणुतं सख्यौ गोपनीयं परं त्विदम्[१]] ॥ ३ ॥
पुरा ब्रह्मा सिसृक्षुर्वै सृष्टा नव प्रजापतीन् ।
अन्धकारमयं सर्वं बुबुधे परमाद्भुतम् ॥ ४ ॥
सह मूकैः स्वयं मूके चिन्तापन्ने प्रजापतौ ।
तपेति वर्णयुगल[२] माकाशादुदभून्महत् ॥ ५ ॥
स शब्दः सर्वतो व्याप्तो रवेः किरणवत् सखि ।
चक्रे ज्योतिर्मयं सर्वं ब्रह्मा निर्वृतिमाप च ।
मुखानि लेभे चत्वारि हठाद्दिचु दिदृक्षया ॥ ६ ॥
ततो ब्रह्मा ससर्जादौ वाच एव सुनिर्मलाः ।

---

१ B has पुराणानि प्रवक्तनम् for the portion bracketted.

२ B तपोभिर्नवयग्मेन ।

ससर्ज चतुरो वेदान् संहिता विविधा अपि ॥ ७ ॥
वाचः पवित्रं परमं वाचः स्वादु परं मतम्।
वाचोऽमृतं विषं वाचो वाचो माल्यं करा वचः[१] ॥ ८ ॥
वाचा पविचितं सर्वं पवित्रयति सर्वथा।
वाचो वेदाः संहिताश्च वाचो मन्त्राः सुपुष्कलाः ॥ ९ ॥
वाचः काव्यं पुराणानि वाचः सत्याः प्रतिष्ठिताः।
जयः पराजयश्चैव वाचोभिः प्रतिपद्यते[२] ॥१०॥
अतो वाचः ससर्जादौ ब्रह्मरूपा न संशयः।
अकारादिस्वरांश्चैव ककारादिहलांस्तथा ॥११॥
परस्परञ्च मिलितान् वर्णानेतान् समासृजत्।
ततो भाषाश्च ससृजे पञ्चाशत् षट् च संख्यया॥१२॥
तज्ज्ञानाय च बालानां तत्तद्व्याकरणानि च।
पदज्ञानं व्याकरणैरर्थज्ञानञ्च दर्शनैः ॥१३॥
धर्मज्ञानं पुराणाद्यैर्मन्त्रैर्मुक्तिरुदाहृता।
वागेव ब्रह्मरूपेव तां यो मिथ्यासु विक्षिपेत् ॥१४॥
मिथ्यावादी स विज्ञेयो नारकी परमो मतः।
वरं प्राणाः परित्याज्याश्छेदोऽपेच्यं शिरोऽपि वा ॥१५॥
न तथापि वचो ब्रह्म मिथ्यावाच्यं विधीयते।
न ह्यसत्यात्परोऽधर्म इति होवाच भूरियम् ॥१६॥

---

१ A श्रवावच. B शरावच।
२ B has an additional line after this :—
धैर्य्यं गाम्भीर्य्यं शौर्य्यादि वाग्भिरेव प्रपद्यते।

सत्यवाक्यं गुरोः सेवा द्वयमेतत् परं मतम् ।
एतद् यस्यास्ति किं तस्य तपोभिः परमैरपि ॥१७॥
सत्यवाक्यानि सर्वाणि पुराणानि द्विधानि च ।
उपपूर्वं महत्पूर्वं पुराणं द्विविधं मतम् ॥१८॥
अष्टादशैव सङ्ख्यातान्युभयानि सखिद्वय ।
सावधानेन चित्तेन शृणु तानि च वर्णये ॥१९॥
आदौ ब्रह्मपुराणञ्च पाद्मं ब्रह्माण्डमेव च ।
वैष्णवं ब्रह्मवैवर्त्तं महाभागवतं तथा ॥२०॥
भविष्यं गारुड़ं लैङ्गं शैवं वाराहमेव च ।
मार्कण्डेयं तथा स्कान्दं कौर्मं मात्स्यं पुराणकम् ॥२१॥
तथाग्नेयञ्च वायव्यं पुराणानि महाच्युत ।
तथाप्युपपुराणानि कथयामि मुदा शृणु ॥२२॥
आदावादिपुराणं स्यादादित्याख्यं द्वितीयकम् ।
ततो वृहन्नारदीयं नारदीयं ततः परम् ॥२३॥
नन्दिकेशपुराणञ्च वृहन्नन्दीश्वरं तथा ।
शाम्बं क्रियायोगसारं कालिकाह्वयमेव च ॥२४॥
ततो धर्मपुराणञ्च विष्णुधर्मोत्तरं तथा ।
शिवधर्मं विष्णुधर्मं वामनं वारुणं तथा ॥२५॥
नारसिंहं भार्गवञ्च वृहद्धर्मन्तथोत्तमम् ।
एतान्युपपुराणानि सख्यावष्टादशैव तु ॥२६॥
अन्याश्च संहिताः सर्वा मारीचकापिलादयः ।
सर्वच धर्मकथने तुल्यसामर्थ्यमुच्यते ॥२७॥

रामायणं महाकाव्यमादौ वाल्मीकिना कृतम्।
तन्मूलं सर्वकाव्यानामितिहासपुराणयोः[१] ॥२८॥
संहितानाञ्च सर्वासां मूलं रामायणं मतम्।
तदेवादर्शमाराध्य वेदव्यासो हरेः कला ॥२९॥
चक्रे महाभारताख्यमितिहासं पुरातनम्।
तदेवादर्शमाराध्य पुराणान्यथ संहिताः ॥३०॥
चकार भगवान् व्यासः स्वयमन्ये महर्षयः।
सर्वत्र कीर्त्तितो धर्मो ह्यधर्मस्य निवर्त्तितः ॥३१॥
शास्त्रेष्वेतेषु सततं यस्य बुद्धिः प्रवर्त्तते।
ते न मुह्यन्ति नियतं त एव बहुवित्तमाः ॥३२॥
रामायणं पुराणानि महाभारतमेव च।
मन्वादिधर्मशास्त्राणि धर्मार्थानि सदैव हि ॥३३॥
पठेत्समभ्यसेत्तानि पाठयेदाचरेदपि।
स एव सखि संसारादुत्तीर्ण इति मन्यते ॥३४॥
कार्य्याकार्यनिर्णयोऽच स्मृतिर्वै धर्मसंहिताः।
इतिहासादिवाक्यन्तु तन्निदर्शनसाधकम् ॥३५॥
पुरा प्रजापतिर्देवो वर्णभाषाः पृथग्विधाः।
सृष्ट्वा धर्मान् समस्तैव वर्णाश्रमविभागजान् ॥३६॥
चिन्तयामास लोकानामुपकर्तुं प्रजापतिः।
धर्मज्ञानञ्च लोकानां विना शास्त्रं कथं भवेत् ॥३७॥
इति संचिन्तयित्वा च ब्रह्मा चिन्तयतां वरः।

१ B omits verses 29 and 30.

चक्रे व्याकरणान्यादौ[1] पदज्ञानाय सर्वशः ॥३८॥
ततः ससर्ज छन्दांसि जगत्यनुष्टुवादयः।
ततः सरस्वती जाता शुक्लवर्णाक्षरात्मिका ॥३९॥
नानालङ्कारभूषाढ्या त्रिनेत्रा शशिमौलिनी।
चतुर्भुजा सुधाविद्या मुद्राक्षगुणधारिणी ॥४०॥
तां दृष्ट्वा चारुनयनां प्रजापतिरुवाच ह।
का त्वं समागता कस्मात् याचसे किं करोषि किं।
कस्ते पिता पतिः कस्ते तन्मे वद सुलोचने ॥४१॥

सरस्वत्युवाच।

आकाशप्रभवो ब्रह्मा वर्णब्रह्मेति यं विदुः।
ततोऽहं प्रभवा जाता नाम्ना चाहं सरस्वती ॥४२॥
त्वं मे भ्राता पुरोजातो यद्ब्रवीमि शृणुष्व तत्।
स्थानं मे कल्पय विधे पतिं कर्म च पुष्कलम्।
सत्कीर्त्तये तवाहं हि जाता निर्मलरूपिणी ॥४४॥

विधिरुवाच।

ममेष्टमिदमेवेह भद्रं जातं सुलोचने।
मुखानि मम चत्वारि प्रियस्थानं तवेरितम् ॥४५॥
तव प्रियो हि भगवान् हृदि मे वर्त्तते हरिः।
भव त्वं कविताशक्तिः कवीनां वदनेषु ह ॥४६॥
ते प्रकुर्वन्तु शास्त्राणि धर्मः सञ्चरतां ततः।
अधिष्ठात्री देवता च पतिर्नारायणस्तव।

---

१ B °दौँच।

शास्त्राणामपि सर्वेषां विश्वात्मा विश्वभावनः ॥४७॥

सरस्वत्युवाच ।

कथमेकास्म्यनेकेषां कवीनां कवितात्मिका ।
भवेयं नैव ते युक्तं यद्युक्तं तत्वदस्व मे ॥४८॥

विधिरुवाच ।

कृत्वा पर्यटनं देवि त्रिलोक्यां योग्यमुत्तमम् ।
पश्य यत्र शुभा शक्तिः कविता त्वं भविष्यसि ॥४९॥
श्रहञ्च वर्णनीयानां वर्णनीयमनुत्तमम् ।
विष्णोरादिचरित्रं हि सर्वधर्मनिदर्शनम् ।
भविष्यत् कल्पयिष्यामि यत् त्वं तत्र वदिष्यसि ॥५०॥
कवेस्तस्यैव कृपया कवयोऽन्येऽपि भाविनः ॥५१॥

देव्युवाच ।

इत्युक्ता सा वचो देवी ब्रह्मणो मुखवासिनी ।
चचार जगतीमध्येऽन्वेषयन्ती स्वमीप्सितम् ॥५२॥
सुरादीन् सुरलोकेषु नागादीन् विवरादिषु ।
सर्वं सत्ययुगं कालं यापयामास हे सखि ॥५३॥
ततस्त्रेतायुगस्यादौ पृथिव्यां भारते तदा ।
ददर्श मुनिमत्युग्रतपोज्ज्वलिततेजसम् ॥५४॥
तमसायां नाम नद्यां स्नात्वा सन्तर्प्य वै पितॄन्[१] ।
चरन्तं शिष्यसहितं वनशोभाकुतूहलात् ॥५५॥

---

१ B omits verses 55 and 56. C has देवताः for वै पितॄन्

स्वर्णप्रभजटाभारशिरसं ताम्ररोचिषम्।
कुशहस्तं स्मितास्याब्जं व्याघ्रचर्माम्बरं मुनिम्॥
उत्तुङ्गवक्षसं नाभिगाम्भीर्य्यशोभिमध्यकम्।
आजानुबाहुं मत्तगजखेलगतिं कविम्॥
आगच्छद्भिश्च गच्छद्भिर्मुनिभिः प्रणतं सदा।
वाल्मीकिं विमलस्वच्छस्नानं शोकादिवर्जितम्॥५६॥५७॥५८॥
विचरंस्तमसातीरे वने वञ्जुलपादपे।
वाल्मीकिस्तत्र ददृशे पक्षिणं व्याधमारितम्।
पक्षिणीं रुदतीं शब्दैः करुणैः सविलापनैः॥५९॥
तत् श्रुत्वा मुनिशार्दूलः शोकाविष्टो बभूव ह॥६०॥
शोकावेशो मुनेस्तस्य नोपयुक्तः कथञ्चन।
शोकादिर्यस्य वै स्नानं मत्तर्षेर्नावगाहते॥६१॥
अद्भुतस्तस्य वै शोक इति शिष्याश्च मेनिरे॥६२॥
आकाशप्रभवा देवी तं दृष्ट्वा शोकसंयुतम्।
न शेके शोकमोहादेरयोग्यं तपसां निधिम्॥६३॥
कविताशक्तिरूपा च विद्यारूपा सरस्वती।
तस्य शोकापनोदाय मत्तर्षेर्मुखमाययौ॥६४॥
यदैव सा वचोदेवी वाल्मीकेर्मुखमारुहत्।
तदैव स च वाल्मीकिर्व्याधं वक्ति दयान्वितः॥६५॥
मा निषाद प्रतिष्ठात्वमिदं पादं तदादिमम्।
द्वितीयपादं पश्चाच्च अगमः शाश्वतीः समाः॥६६॥
यत् क्रौञ्चमिथुनादेकमिति पादं तृतीयकम्।

चतुर्थं तन्मुखाज्जातमवधीः काममोहितः ॥६७॥
एवं पादाश्च चत्वारः श्लोक इत्येव कथ्यते ॥६८॥
यदा तु निर्म्मला देवी वाल्मीकेर्मुखमागता ।
जयध्वनिस्तदा भूयान् बभूव भुवनत्रये ॥६९॥
श्रुत्वा श्लोकमिमं विप्रा जगुः परमयत्नतः ।
पक्षिशोकं परित्यज्य श्लोकमेनं मुनिर्जगौ ॥७०॥
ततो ब्रह्मा समागत्य वाल्मीकिमिदमब्रवीत् ।
महर्षे ननु वाल्मीके भगवन् भवतो मुने ॥७१॥
अधितष्ठौ स्वयं देवी वाणी काव्यस्वरूपिणी ।
एतदर्थेऽवतारस्ते मया सम्पादितः पुरा ॥७२॥
यत् त्वं वेदार्थवक्ता स्याः काव्यरूपेण सर्व्वशः ।
अहं सृष्टिकरो ब्रह्मा तत्र लीलाकरो हरिः ॥७३॥
तद्वर्णनस्य कर्त्ता त्वं सृष्टिरत्नाकरो भव ।
लोकानां धर्म्मरूपेव विष्णोर्लीला मलापहा ।
त्वया सा वर्णिता लोके परो धर्म्मः स्थिरो भवेत् ॥७४॥
मा चिन्तां कुरु वाल्मीके श्लोकरूपा सरस्वती ।
त्वन्मुखे निर्म्मला जाता कविता ब्रह्मरूपिणी ॥७५॥
चतुर्व्वर्गफलप्राप्तिः काव्यादेवोपजायते ।
महतः पूर्व्वसंस्कारात् काव्यशक्तिर्नृणां भवेत् ।
सा चेन्नीचेऽपि कविता नावमान्या कदाचन ॥७६॥
अपुण्यो यदि वार्थः स्यात् काव्यबद्धो भवेद् यदि ।
तदापि पुण्यदः स स्यात् किं पुनः स्यात् सदर्थकः ॥७७॥

श्लोक एको भवेत् काव्यं महाकाव्यं तदुच्चयः ।
अत्र सर्गाश्च कर्त्तव्याः स्वल्पाः स्वल्पाः पृथक् पृथक् ॥७८॥
नारदस्योपदेशाद्धि यमर्थं ज्ञातवानसि ।
तं वर्णय महाभाग स च सर्व्वार्थसञ्चयः ॥७९॥
कृते त्वया महाकाव्ये भाव्यर्थे रामचेष्टिते ।
लोकेष्वनुचरिष्यन्ति कवयोऽन्ये मदुक्तयः ॥८०॥
त्वञ्च त्रिकालवृत्तिज्ञः सत्यवादी प्रतिष्ठितः ।
नाहं त्वत्तः पृथग्भूतः कविरन्यः प्रजापतिः ॥८१॥
कविर्ब्रह्मा कविर्विष्णुः कविरेव स्वयं शिवः ।
कविर्व्वै धर्म्मवक्ता च कविः सर्व्वरसैकवित् ॥८२॥
न कवेर्वर्णनं मिथ्या कविः सृष्टिकरः परः ।
सर्व्वोपर्य्येव पश्यन्ति कवयोऽन्ये न चैव हि ॥८३॥
कवीनां वशगा[१देवा इन्द्रोपेन्द्रयमादयः ।
कवीनां वशगा]मर्त्त्याः कवयो देवगोचराः ॥८४॥
त्वं तु रामचरित्राणि मुने भावीनि वर्णय ।
तत्तु रामायणं नाम महाकाव्यं भविष्यति ॥८५॥
वर्णयिष्यसि यद्यत् त्वं तत्तु विष्णुः करिष्यति ।
विष्णोः कीर्त्त्या भवत्काव्यं स्थास्यत्याचन्द्रतारकम् ॥८६॥
श्रीरामस्य परा मूर्त्तिः काव्यं रामायणं तव ।
शृणु तत्कवचं येन कर्त्ता रामायणं भवान् ॥८७॥

---

१ B omits the portion bracketted.

ॐ नमोऽष्टादशतत्त्वरूपाय रामायणाय महामन्त्रस्वरूपाय मा निषादेति मूलं शिरोऽवतु अनुक्रमणिकाबीजं मुखमवतु ऋष्य-शृङ्गोपाख्यानमृषिर्जिह्वामवतु जानकीलाभोऽनुष्टुप्छन्दोऽवतु गलं कैकय्याशा देवता हृदयमवतु सीतालक्ष्मणानुगमनश्रीरामहर्षाः प्रमाणं जठरमवतु भगवद्भक्तिः शक्तिरवतु मे मध्यं शक्तिमान् धर्म्मो मुनीनां पालनं ममोरू रक्षतु मारीचवधनं प्रतिपालन-मवतु पादौ सुग्रीवमैत्रमर्थोऽवतु करौ निर्णयो हनूमच्चेष्टावतु बाहू कर्त्ता सम्पातिपक्षोद्गमोऽवतु स्कन्धौ प्रयोजनं विभीषणराज्यं ग्रीवां ममावतु रावणवधः स्वरूपमवतु कर्णौ सीतोद्धारोलक्ष-णमवतु नासिके अवगम्य ममोपसरोऽवतु जीवात्मानं नयः काल-लक्ष्मणसम्वादोऽवतु नाभिं आचरणीयं श्रीरामादिधर्म्मं सर्व्वाङ्गं ममावतु इति रामायणकवचं रामायणवाचकाः पठेयुस्त्वं चेदं जप्वा रामायणं कुरु सप्तकाण्डं।

देव्युवाच।

एवमुक्त्वा मुनिं ब्रह्मा ययौ स्वर्लोकमुत्तमं।
वाल्मीकिः कविताशक्तिं प्राप्य [1]निर्वृतिमाप ह ॥८८॥

इति बृहद्धर्मपुराणे रामायणोत्पत्तिः पञ्चविंशतितमोऽध्यायः।

---

१ B omits ऋषिः।

# षड्विंशतितमोऽध्यायः ॥

देव्युवाच ।

रामायणं महाकाव्यं कृतं वाल्मीकिना स्वयम् ।
तत्र रामचरित्रस्य व्यपदेशेन सर्व्वशः ।
सर्व्वे धर्म्माः समुद्दिष्टा वर्णाश्रमविभागशः ॥१॥
स्त्रीधर्म्मा राजधर्म्माश्च ब्रह्मधर्म्माश्च पुष्कलाः ।
वैश्यधर्म्माः शूद्रधर्म्मा धर्म्माश्च गृहिणां तथा ॥२॥
नानादेवचरित्राणि शत्रुमित्रकथा अपि ।
इतिहासस्वरूपेण सर्व्वे धर्म्मा निरूपिताः ॥३॥
एतत् पाठ्यश्च बोध्यश्च स्मरणीयं शुभिच्छता ॥
यस्य गेहे समग्रं हि लिखितं वर्त्तते सखि ।
न तत्र विपदः क्वापि नाधर्म्मस्तत्र सञ्चरेत् ॥४॥५॥
यस्य नास्ति गृहे सख्यौ काव्यं रामायणं शुभम् ।
श्मशानभूमिस्तद्वाटी पितृदेवविवर्जिता ॥६॥
सर्गं सर्गार्द्धमेकं वा श्लोकं श्लोकार्द्धमेव वा ।
अहोरात्रान्तरे यस्तु न स्मरेत् स नराधमः ॥७॥
मानिषादेतिपद्यन्तु यो बालः पञ्चवर्षकः ।
अभ्यस्तं हृदये धत्ते स कविः स्यान्न संशयः ॥८॥
अनावृष्टिर्महापीड़ा ग्रहपीड़ाप्रपीड़िताः ।
आदिकाण्डं पठेयुर्ये ते मुच्यन्ते ततो भयात् ॥९॥

पुत्त्रजन्मविवाहादौ गुरुदर्शन एव च ।
पठेच्च शृणुयाच्चैव द्वितीयं काण्डमुत्तमम् ॥१०॥
वने राजकुले वह्निजलपीड़ायुतो नरः ।
पठेदारण्यकं काण्डं शृणुयाद्वा स मङ्गली ॥११॥
मित्त्रलाभे तथा नष्टद्रव्यस्य च गवेषणे ।
श्रुत्वा पठित्वा कैष्किन्ध्यं काण्डं तत्तत् फलं लभेत् ॥१२॥
श्राद्धेषु देवकार्य्येषु पठेत् सुन्दरकाण्डकम् ।
शत्रोर्जये समुत्साहे जनवादे विगर्हिते ।
लङ्काकाण्डं पठेत् किम्वा शृणुयात् स सुखी भवेत् ॥१३॥
यः पठेत् शृणुयाद्वापि काण्डमभ्युदयोत्तरम् ।
आनन्दकार्य्ये यात्रायां स जयी परतोऽत्र च ॥१४॥
मोक्षार्थी लभते मोक्षं भक्त्यर्थी भक्तिमेव च ।
ज्ञानार्थी लभते ज्ञानं ब्रह्मतत्त्वोपलम्भकम्[१] ॥१५॥
यः पठेत् शृणुयाद्वापि काव्यं सर्व्वमतः क्रमात् ।
फलं तस्य प्रवक्ष्यामि शृणुतं विजये जये ॥१६॥
स्त्रीराजपितृगोहन्ता ब्रह्महा हेमचोरकः ।

---

१ C has the folloing additional lines—

यः पठेत् शृणुयात् वापि काव्यं वाल्मीकिना कृतम् ।
आदिकाण्डं माघमासे द्वितीयं फाल्गुने तथा ॥
चैत्र आरण्यककाण्डं कैष्किन्ध्यं माधवे तथा ।
ज्यैष्ठे तु सुन्दरं काण्डं पौषे काण्डद्वयं शुचौ ॥
शुद्धकाले समारभ्य ब्रह्मचारी समाहितः ॥

सुरापो गुरुभार्य्यागो देवद्वेषकरस्तथा।
नानापापरतो वापि तत्क्षणादेव मुच्यते।
त्रैलोक्यपावनः सोऽपि देवानामपि दुर्लभः ॥१७॥१८॥
यत्र रामायणस्यास्य प्रस्तावः खलु सम्भवेत्।
तत्र सर्व्वेऽधितिष्ठन्ति तीर्थानि पितरः सुराः ॥१९॥
रामायणस्य प्रस्तावे योऽन्यं प्रस्तावमाचरेत्।
सर्व्वपापाश्रयः स स्यात् मत्याग्नी सर्व्वभुग्यथा ॥२०॥
रामायणस्य प्रस्तावे तत्क्षणादेव यस्य हि।
न नश्यन्ति शोकदुःखपरीतापाः स वञ्चितः ॥२१॥
आश्विने तु शारदीयमहापूजादिनेषु हि।
पठेद्यो रामचरितं चारु वाल्मीकिना कृतं ॥
तस्य देवी मुक्तिदात्री ब्रह्मविष्ण्वादिवन्दिता।
प्रसीदति न सन्देहः सर्व्वाभीष्टफलप्रदा ॥२२॥२३॥
श्रुत्वा पठित्वा काव्यन्तु वित्तिशाठ्यविवर्जितः।
दक्षिणां विपुलां दद्यात् आत्मदारसुतादिकाम् ॥२४॥
इति वां कथितं सख्यौ कियद्रामायणोचितम्।
रामायणगुणान्वक्तुं शक्तो नाहमशेषतः।
परमा दुर्लभा मुक्तिः शुश्रूषोर्यस्य किङ्करी ॥२५॥

इति श्रीबृहद्धर्मपुराणे रामायणोत्कीर्त्तनं षड्विंशतितमोऽध्यायः।

---

## अष्टाविंशतितमोऽध्यायः ॥

देव्युवाच ।

यदा रामायणं कृत्वा वाल्मीकिर्विरराम ह ।
तदा ब्रह्मा समागत्य वाल्मीकिमिदमब्रवीत् ॥१॥
महर्षे ननु वाल्मीके कृतं रामायणं त्वया ।
नैवावशिष्टं किञ्चास्ति कर्त्तव्यं तव वर्त्तते ।
अर्जिता परमा कीर्त्तिस्त्वया धर्मस्वरूपिणी ॥२॥
किन्तु त्वन्मुखपद्माब्जे देवी गगनसम्भवा ।
देवितुं वाञ्छते नित्यं तत् कुरुष्व सदातनम्[1] ॥३॥
देव्या व्यवसितं[2] बुद्ध्वा महाभारतनामकम् ।
सनातनं महापुण्यमितिहासं पुरातनम् ।
प्रकल्पितं मया सम्यक् तव श्लोकय तन्मुने[3] ॥४॥

वाल्मीकिरुवाच ।

प्रभो ब्रह्मन् त्वया सर्व्वं ज्ञायते तत्तथापि ते ।
निवेदयाम्यात्मवृत्तिं यद्युक्तं तद्वदस्व मे ॥५॥
कृतं रामायणं ब्रह्मन् व्यक्तं मोक्षस्य साधनम् ।
निःसन्देहो ह्यहं भूतः क्षोभमोहविवर्जितः ॥६॥
किमर्थमपरं ग्रन्थं करिष्यामि वृथोद्यमः[4] ।

---

१ B has सनातनम् ।
२ B has देव्याध्यवसितम् ।
३ B has श्लोकाय तन्मते ।
४ C has वृथोद्यमम् ।

सरस्वती चेत् सततं विहर्त्तुं देव वाञ्छते[१] ॥७॥
तदर्थं द्वापरे वेदव्याससनामा भविष्यति ।
सएव बहुचिचार्थं[२]महाभारतकृद्भवेत् ॥८॥
पुराणोपपुराणानि स एव विरचिष्यति ।
नाल्पेन व्यवसायेन नृणां धर्ममतिर्भवेत् ॥९॥
लोकानां धर्ममत्यर्थं कर्त्ता ग्रन्थान् बहून् स वै ।
विष्णोः कलाऽसौ भविता वेदभागान् करिष्यति ॥१०॥
अहं रामायणं कृत्वा कृतार्थोऽभवमीश्वर ।
व्यासायाहं वदिष्यामि काव्यबीजं सनातनम् ॥११॥
येनासौ बहुधा ग्रन्थान्[३] विधाय कुशलं भजेत् ॥१२॥

देव्युवाच ॥

इत्युक्तस्तेन वै ब्रह्मा हंसारूढश्चतुर्मुखः ।
एवमेवेति संमन्त्र्य ययौ लोकं निजं सखि ॥१३॥
ततः काले गते दीर्घे द्वापरादौ हरेः कला ।
वेदव्यासो बभूवाथ सत्यवत्यां पराशरात् ॥१४॥
चक्रे वेदतरोः शाखां दृष्ट्वा पुंसोऽल्पमेधसः ।
अथ ब्रह्मसभायां वै समायाता महर्षयः ॥१५॥
काश्यपः कपिलोऽत्रिश्च भार्गवश्च पराशरः ।

---

१ C देव वाञ्छतः । २ B and C बहुचिचार्थम् ।
३ B बहुधात्मानम् ।

23

व्यासश्च परमोदारः पुलस्त्यः पुलहः क्रतुः ॥१६॥
याज्ञवल्क्यश्च विष्णुश्च हारीतश्च बृहस्पतिः ।
विश्वामित्रो वामदेवः शङ्खश्च लिखितस्तथा ॥१७॥
जैगीषव्यो वशिष्ठश्च एकतश्च द्वितस्त्रितः[1] ।
वालिखिल्याश्च ऋषयो गोतमो गालवो भृगुः ॥१८॥
कात्यायनोऽङ्गिरा दक्षः प्रजानाथो मनुः स्वयम् ।
एते चान्ये च बहवो मुनयो मेरुपर्वते ॥१९॥
एतान् संपूज्य विधिवत् सुखासीनान् पितामहः ।
उवाच परमप्रीत्या चिरेणाधिगतं हृदा[2] ॥२०॥
पुरा रामायणं नाम भाव्यर्थं विहितं मया ।
तत्तु वाल्मीकिना काव्यं कृतं मदुपदेशतः[3] ॥२१॥
पञ्चविंशतिसाहस्री[4] संहिता सप्तकाण्डिका ।
सर्गैः प्रबन्धबहुला सरस्वत्या अनुग्रहात् ॥२२॥
सा नित्या पुण्यबहुला तदनन्तरमेव च ।
महाभारतनामान्यत् पुराणान्युभयानि च ॥२३॥
अष्टादश तथान्यानि विहितानि तथा पुरा ।
किन्तु न श्लोकबद्धानि[5] संक्षेपसंयुतानि च ॥२४॥

---

१ A द्वितस्त्रियः । २ B हृदि ।
३ C मद्युपदेशतः । ४ B चतुर्विंशतिसाहस्री ।
५ B omits verse 24. C has श्लोकबद्धा न ।

ऋषीणां खलु सर्वेषां मध्ये कोऽत्र समर्थकः ।
स करोतु पुराणानि महाभारतमेव च ॥२५॥
एतदर्थं पुरा प्रोक्तो वाल्मीकिर्मुनिसत्तमः ।
स तु रामायणं कृत्वा निरपेक्षोऽन्यतोऽभवत् ॥२६॥

देव्युवाच ।

इत्युक्तानां मुनीनाञ्च कोऽपि किञ्चिन्नचोचिवान् ।
प्रणम्य नारदस्तत्र ब्रह्माणमब्रवीदिदम् ॥२७॥

नारद उवाच ।

नारदोऽहं नमस्यामि शृणु यन्मे[1] निवेदनम् ।
पुरा तुभ्यं यदेवाह वाल्मीकिराद्यकाव्यकृत् ॥२८॥
तदर्थं द्वापरे वेदव्यासनामा भविष्यति ।
सएव बहुचित्रार्थमहाभारतकृद्भवेत् ॥२९॥
पुराणोपपुराणादि सएव विरचिष्यति ।
नाल्पेन व्यवसायेन नृणां धर्ममतिर्भवेत् ॥३०॥
लोकानां धर्ममत्यर्थं कर्त्ता ग्रन्थान् बहून् स वै ।
विष्णोः कलासौ भविता वेदभागान् करिष्यति ॥३१॥
अहं रामायणं कृत्वा कृतार्थोऽभवमीश्वर ।
व्यासायाहं वदिष्यामि काव्यबीजं सनातनम् ॥३२॥
येनासौ बहुधा ग्रन्थान् विधाय कुशलं भजेत् ॥३३॥
तस्मादसौ व्यासएव भवदाज्ञां करिष्यति ।
तद्यन्ये च समर्थाः स्युस्ते तदात्र वदन्तु च ॥३४॥

---

[1] B यत्तु ।

मुनय ऊचुः ।

सर्वे वयं समर्था स्म पुराणकरणे प्रभो ।

यो यत् पुराणकर्त्ता स्यात् तस्मै तत्तन्नियुज्यताम् ।

किमेक एव व्यासोऽयं भवदाज्ञावहो भवेत् ॥ ३५ ॥

देव्युवाच ।

श्रुत्वेदं वचनं ब्रह्मा मुनीनां भावितात्मनाम् ।

क्षणैव चिन्तयामास विरोधं तानुवाच ह ॥ ३६ ॥

ब्रह्मोवाच ।

शृणुध्वं मुनयः सर्वे यदहं प्रब्रवीमि वः ।

श्रुतं वाल्मीकिवचनं नारदात् स यदाह माम् ॥ ३७ ॥

समर्था अपि सर्वे वै पुराणकरणे द्विजाः ।

किन्तु गच्छत राजानं जनकं धर्मदर्शनम् ॥ ३८ ॥

स वो विवादभङ्गाय मध्यस्थः प्रवदिष्यति ।

इत्युक्तास्ते मुनिगणा ययुः सर्वार्थदर्शिनः ॥ ३९ ॥

वर्त्तते यत्र जनको राजा धर्मार्थदर्शिवान् ॥ ४० ॥

इति बृहद्धर्मपुराणे पूर्वखण्डे सप्तविंशतितमोऽध्यायः ॥

# अष्टविंशतितमोऽध्यायः ।

देव्युवाच ।

तान् दृष्ट्वा जनको राजा मुनीन् सर्वान् समागतान् ।
आसनात् सहसोत्थाय पूजयामास सादरम् ॥१॥

राजोवाच ।

किमर्थमागता यूयं सर्वे सूर्य्यसमप्रभाः ।
सर्वे सर्वार्थबोद्धारः सर्वे सर्वार्थदर्शिनः ॥२॥
सर्वे सर्वार्थकुशला यूयं गुरुतरा नृणाम् ।
वयं गृहस्था युष्माकं कृपां वाञ्छामहे सदा ॥३॥
सा कृपा चेत् सुफलिता सर्वार्थः सिध्यते तदा[१] ।
वैष्णवाः साधवः शान्ता लोकानुग्रहकातराः[२] ॥४॥
स्वयं कृतार्थाः सततं यूयं ये ते मयेप्सिताः ।
किमतोऽस्ति गृहस्थानां लाभोऽन्यः साधुसङ्गमात् ॥५॥

मुनय ऊचुः ।

सत्यं भवन्तं राजर्षिं द्रष्टुकामा वयं सदा ।
त्वन्तु धर्मतनुः साक्षादयं धर्माभिकाङ्क्षिणः ॥६॥
प्रेषिता ब्रह्मणा सर्वे भवत्सन्निधिमागताः ।

---

१ B सदा ।    २ B कारकाः ।

षट्त्रिंशतः पुराणानां भारतस्य च भूपतेः ॥७॥
भवत्समीपां कः कर्त्ता तन्निर्देशाय पृच्छताम् ।
अयं पराशरोऽस्माकं वक्ता यद्वक्ति तन्मतम् ॥८॥
वयं हि सर्वे श्रोतारो भवान्मध्यस्थिरूपकः ॥९॥

राजोवाच ।

शक्तिपुत्र महाभाग पराशर नमोऽस्तु ते ।
किमुक्तं ब्रह्मणा कौ वा विवादे संशयस्थितौ ॥१०॥

पराशर उवाच ।

राजन् ब्रह्मसमीपस्थान् मुनीनाह समागतान् ।
वाल्मीकिर्भगवान् काव्यं चक्रे रामायणं परम् ॥११॥
पुराणानां भारतस्य कः कर्त्ता भवतां भवेत् ।
तत्रादौ नारदो व्यासः कर्त्ता वै भारतादिनः ॥१२॥
वयं विवदमाना वै समर्थास्तत्र कर्मणि ॥१३॥

राजोवाच ।

ब्रह्मा च नारदश्चैव व्यासपक्षावुभौ मतौ ।
भवन्तोऽनुमताः केन पुराणादि करिष्यथ ॥१४॥
कर्त्ता देवः स्वयं ब्रह्मा सर्वशास्त्रस्य सर्वथा ।
तेनैवानुमतं व्यासं भवन्तो नानुमन्यते ॥१५॥
व्यासोऽपि च भवन्तश्च सर्वशास्त्रार्थदर्शिनः ।
माहात्म्यं भगवन्नाम्नां वदन्तु श्रूयते मया ॥१६॥

पराशर उवाच ।

किं वाच्यं भगवन्नाममाहात्म्यं मिथिलाधिप ।

यथाज्ञानं कियद्वच्मि तुभ्यं जिज्ञासवे सकृत् ॥१७॥
कृष्णेति मङ्गलं नाम यस्य वाचि प्रवर्त्तते।
भस्मीभवन्ति राजेन्द्र महापातककोटयः ॥१८॥

व्यास उवाच।

नाम्नोऽस्य यावती शक्तिः पापनिर्हरणे हरेः।
तावत् कर्तुं न शक्तः स्यात् पातकं पातकी जनः ॥१९॥
एवं श्रुत्वा महाराज उभयेषां सरस्वतीम्।
पराशरादिं व्यासञ्च प्रोवाच जनको नृपः ॥२०॥

राजोवाच।

कर्त्ता महाभारतस्य वेदव्यासो हि नापरः।
षट्त्रिंशतः पुराणानां व्यासश्चान्ये च ये द्विजाः ॥२१॥
किन्तु गच्छत वाल्मीकिं महर्षिं चिरजीविनम्।
स वो विधास्यते चेमं आदिकाव्यकृती कृती ॥२२॥
श्रुतं मया यदाकाशे गच्छतः शुकपक्षिणः।
शृणुध्वं तन्मुनिगणाः प्रोक्तं वाल्मीकिना पुरा ॥२३॥
तदर्थं द्वापरे वेदव्यासनामा भविष्यति।
[सएव बहुचित्रार्थमहाभारतकृद्भवेत् ॥२४॥
पुराणोपपुराणादि सएव विरचिष्यति[१]।]
नाल्पेन व्यवसायेन नृणां धर्ममतिर्भवेत् ॥२५॥
लोकानां धर्ममत्यर्थं कर्त्ता ग्रन्थान् बहून् स वै।

---

१ B omits these two lines.

विष्णोः कलासौ भगवान् वेदभागान् करिष्यति ॥२६॥
अहं रामायणं कृत्वा कृतार्थोऽभवमीश्वर ।
व्यासायाहं वदिष्यामि काव्यबीजं सनातनम् ॥२७॥
येनासौ बहुधा ग्रन्थान् विधाय कुशलं भजेत् ।
इदमेव ह्युपाख्यानं विधिं वाल्मीकिरब्रवीत् ॥२८॥
मा चिन्तय महाराज लोके व्यासो भविष्यति ।
इत्येतद्विश्रुतं विप्राः खगस्य मुखतो द्विजाः ॥२९॥
ततो गच्छत वै यूयं यत्र वल्मीकभूर्मुनिः ।
स्वद्वितीयः स्वयं ब्रह्मा काव्यसृष्टौ मुनीश्वरः ॥३०॥
अस्यैवानुग्रहात् यूयं कवयोऽपि भविष्यथ ।
आस्तेऽसौ तमसातीरे जपन् रामायणं परम् ॥३१॥

देव्युवाच ।

इत्युक्तास्ते मुनिगणाः जनकेन महात्मना ।
प्रययुः परमानन्दा यत्र चादिकविर्मुनिः ॥३२॥

इति बृहद्धर्मपुराणे पूर्वखण्डे अष्टविंशतितमोऽध्यायः ।

# ऊनत्रिंशत्तमोऽध्यायः ।

देव्युवाच ।

ते गत्वा तमसातीरं वाल्मीकिं तपसां निधिम् ।
ददृशुः शिष्यसहितं भूमिष्ठमिव भास्करम् ॥१॥
प्रणेमुः परया भक्त्या ब्रह्माणमिव देवताः ।
महर्षिरपि तान् दृष्ट्वा मुनीन् शक्तिसुतादिकान् ।
स्वागताद्यैः पूजयित्वा पप्रच्छ स्वासनस्थितान् ॥२॥

वाल्मीकिरुवाच ।

पराशरव्यासमुख्याः मुनयो यूयमागताः ।
किमर्थमिह संप्राप्ताः सर्वे सूर्य्यसमप्रभाः ॥३॥

मुनय ऊचुः ।

पुरा ब्रह्मा मुनीन् सर्वानस्मान् पप्रच्छ सत्तमः[१] ।
तत्राह नारदो व्यास एक एव महाकविः[२] ॥४॥
भारतञ्च पुराणानि करिष्यति महामतिः ।
तत्रास्माकं मतिर्जाता पुराणकरणे प्रभो ॥५॥
अस्मान् विवदमानान् वै बुद्ध्वा ब्रह्मा चतुर्मुखः ।

---

१ C has an additional line after this.
भारतञ्च पुराणानि के कर्त्तारो महत्तमाः ।

२ For व्यास एकएव, C reads वाक्यं व्यास एक ।

विवादभञ्जकं भूपं जनकं प्रजगाद नः ॥६॥
तेनादिष्टा वयं सर्वे [जनकस्य च सन्निधिम् ।
प्राप्ताः संपूजितास्तेन पृष्टा अपि मुनीश्वर ॥७॥
तत्रास्माकं पुण्यतमः शक्तिपुत्रः पराशरः ।
वक्ताभूच्च वयं सर्वे[१]] श्रोतारो जनको नृपः ॥८॥
प्रत्युवाच विवादस्य भङ्गाय नो नु शृण्वताम् ।
ब्रह्मणा सर्वशास्त्राणां मूलकर्त्रा महात्मना ॥९॥
नारदेनाप्यनुमतो व्यासो भारतकृद्भवेत् ।
अन्येषान्तु पुराणानां व्यासोऽन्ये च महर्षयः ॥१०॥
अत्र मे नास्ति माध्यस्थ्यं पूर्वं तेन[२] निरूपितम् ।
व्यासे पुराणकर्तृत्वं विवादोऽपि न वः क्वचित् ॥११॥
यूयं गच्छत वै यत्र वाल्मीकिस्तदनुग्रहात् ।
यः कविः स्यात् स एव स्यात् भारतादिकृती कृती ॥१२॥
स जानीते काव्यबीजं तस्मात् गच्छत तत्र वै ।
अतस्ते निकटं प्राप्ता वयं सर्वे महर्षयः ।
सर्वान् कविन्नः[३] कुरु वै प्रभो आदिकवे कवे ॥१३॥

वाल्मीकिरुवाच ।

एको नारायणो देवः सत्वरूपी[४] सनातनः ।
तस्यैव वशगाः सर्वे कर्म कुर्वन्ति कर्मिणः ॥१४॥

---

१ B omits the portion bracketted.

२ For पूर्वं तेन C has मयापूर्वम् ।

३ B वः ।    ४ B यत्नं रूपं ।

तस्मिन्नेव प्रलीयन्ते तस्मादेवोद्भवन्ति वै।
तस्यैव हि नियोगेन ब्रह्माद्या अथ वै वयम् ॥१५॥
सर्वं कुर्मः[१] क्रियाः सर्वा यथोद्देशं यथातथम्।
अहं रामायणं काव्यमकार्षं तन्नियोगतः ॥१६॥
मंद्द्वितीयः कविर्व्यासस्तेनैव हि विनिर्मितः।
महाभारतकर्त्तासौ विधिसृष्टः पुरातनः ॥१७॥
पुराणानामयं कर्त्ता द्विविधानां मुनीश्वराः।
भवन्तोऽपि करिष्यन्ति पुराणान्युत कानिचित् ॥१८॥
व्यासस्यैव प्रसादेन तानि नैवात्र संशयः।
व्यासायाहं वदिष्यामि काव्यबीजं सनातनम् ॥१९॥
तेनैव यूयं सर्वे वै भविष्यथ कृतार्थकाः।
आदौ महाभारताख्यं वेदव्यासः करिष्यति ॥२०॥
ततो विष्णुपुराणस्य कर्त्ता भावी पराशरः।
एवं महापुराणानि व्यासएव करिष्यति ॥२१॥
कर्त्ता चोपपुराणानां व्यासोऽप्यन्येऽपि केचन।
वेदव्यासः श्लोककर्त्ता सर्वेषामेव सर्वतः ॥२२॥
लेखकः कोऽपि वक्ता च कोऽपि ह्यर्थनिरूपकः।
श्लोककाः संहितानाञ्च परे मन्वादयो द्विजाः ॥२३॥
मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः।
यमापस्तम्बसम्बर्त्ताः कात्यायनबृहस्पती ॥२४॥
पराशरव्यासशङ्खलिखिता दक्षगौतमौ।

१ C has धर्मा।

शातातपो वशिष्ठश्च धर्मशास्त्रप्रयोजकाः ॥२५॥
एतेषां केऽपि वक्तारः केऽपि श्लोकार्थकारकाः ।
अन्येऽपि मुनयः सर्वे सन्तु शास्त्रकृतः स्वयम् ॥२६॥
सर्वे स्वस्वमतेनैव ग्रन्थान् कुर्वन्तु पावनान् ।
सर्वे यूयं निवर्त्तध्वं यात स्वस्वालयान् द्विजाः ॥२७॥
काव्यवीजं वदिष्यामि व्यासायाहं महात्मने ।
व्यासस्यानुग्रहाद्यूयं कवयोऽपि भविष्यथ ॥२८॥

देव्युवाच ।

इत्युक्तास्ते मुनिगणाः सानन्दा एव हे सखि ।
प्रणम्यादिकविं श्रीलं वाल्मीकिं ते गतास्ततः ॥२९॥
वाल्मीकस्याश्रमे व्यासो विरराम सखीदय ।
वाल्मीकिः काव्यवीजानि व्यासायोवाच सादरम् ॥३०॥

इति बृहद्धर्मपुराणे पूर्वखण्डे ऊनत्रिंशत्तमोऽध्यायः ।

———

# त्रिंशत्तमोऽध्यायः ।

वाल्मीकिरुवाच ।

वेदव्यास किमादौ त्वं श्रोतुमिच्छसि सम्प्रति ।
तदहं भारतादीनां वीजं ते प्रवदामि वै ॥१॥

व्यास उवाच ।

कीदृशं भारतं नाम किं फलं तस्य तद्वद ।
केन वाहं करिष्यामि केन शक्तिर्भवेन्मम ॥२॥

वाल्मीकिरुवाच ।

वेदः परिणतो भूत्वा महाभारततां गतः ।
विष्णोर्मुखात् समुद्भूता ब्राह्मणा ये तपस्विनः ॥३॥
बाहुतः क्षत्रिया जाताः पृथिवीजनपालकाः ।
ऊरुतो जज्ञिरे वैश्याः शूद्राः पादभवा मुने ॥४॥
वर्णा अमी वै चत्वारस्तेषां कर्माण्यकल्पयत् ।
यजनं याजनं चैवाध्ययनाध्यापने तथा ॥५॥
दानं प्रतिग्रहश्चैव षट्कर्मा ब्राह्मणः स्मृतः ।
विप्रपूजा प्रजारक्षा दानं युद्धं करग्रहः ॥६॥
क्षत्रियः पञ्चकर्मा स्याद्वैश्यकर्म च कथ्यते ।
ब्राह्मणक्षत्रयोः सेवा धनसङ्ग्रह एव च ॥७॥
वाणिज्यञ्च तथा दानं चतुष्कर्मा वणिग्जनः ।
ब्रह्मक्षत्रविशां सेवा शूद्रस्य कृषिकर्म च ॥८॥

एतानि किल कर्म्माणि वर्णानां कथितानि ते ।
तत्र त्रयाणां वर्णानां वेदे योग्यत्वमिष्यते ॥९॥
स्त्रीशूद्रद्विजबन्धूनां [त्रयी न श्रुतिगोचरा ।
स्त्रीशूद्रद्विजबन्धूनां[१]] वेदार्थज्ञानहेतवे ॥१०॥
भारतं कृतवान् पूर्व्वं देवो नारायणः स्वयम् ।
रामायणं तस्य बीजं परात्परतरं मतम् ॥११॥
आदौ रामायणं देवो ब्रह्मणे दत्तवान् पुरा ।
दत्तञ्च ब्रह्मणा मह्यं श्लोकबद्धं मया कृतम् ॥१२॥
विस्तारितञ्च रुचिरं वेदार्थसारसम्मतम् ।
पुनश्च भारतं कर्त्तुं ब्रह्मणा देशितोऽप्यहम् ॥१३॥
नैव स्वीकृतवान् पूर्व्वं भारतं कर्त्तुमेव च ।
भारतस्य विधानाय त्वं नारायणनिर्मितः ॥१४॥
रामायणाच्च विस्तीर्णं त्वं महाभारतं कुरु[२] ।
रामायणपरीपाट्या त्वं महाभारतं कुरु ॥१५॥
रामायणस्य काव्यस्य भारतस्य च वै मुने ।
विशेषात् शृणु मद्वाक्यान्नारायणनिरूपितम् ॥१६॥
एक एव स्वयं देवः परमात्मा विभुः प्रभुः ।
कालाकाशस्वरूपोऽसौ सुखदुःखविवर्जितः ॥१७॥
सोऽयं मानुषतां गत्वा स्वेच्छया कमलापतिः ।
चिक्रीड जगतीमध्ये रक्षोवधच्छलेन वै ॥१८॥

---

१ C omits the portion bracketed.
२ B omits this line ।

धर्मांश्च दर्शयामास वर्णाश्रमविभागशः।
अहं तद्वर्णयिष्यामि काव्यं रामायणाक्वयम् ॥१९॥
परमात्मस्वरूपस्य सीतानाथस्य चेष्टितम्।
वर्णितं चैकरूपस्य तच्छरीरविशेषवत् ॥२०॥
सएव देवो भगवान् कृष्णः कमललोचनः।
जीवद्वितीयश्चिक्रीड़ भूभारक्षयहेतवे ॥२१॥
जीवात्मपरमात्मानौ नरनारायणावुभौ।
अर्जुनश्च तथा कृष्णस्तावेव स्वेच्छया स्थितौ ॥२२॥
पञ्चानां पाण्डुपुत्राणां तृतीयो योऽर्जुनो नरः।
कृष्णश्च देवकीपुत्रो वासुदेवोऽखिलार्त्तिहा ॥२३॥
नारायणो वासुदेवो नरश्चैवार्जुनाक्वयः।
नरनारायणमयं तन्महाभारतं विदुः ॥२४॥
एकं नारायणमयं कृतं रामायणं मया।
रामायणे भारते च विशेषोऽयमुदाहृतः ॥२५॥
गोपनीयो ह्ययं पन्था न वाच्यं यस्य कस्यचित् ॥२६॥
ईदृशं भारतं प्रोक्तं नरनारायणात्मकम्।
भारतं परमं पुण्यं भारतं देव[1]सम्मितम्।
भारतं भवने यस्य तस्य हस्तगतो जयः ॥२७॥
भारतस्य समुद्रस्य मेरोर्नारायणस्य च।
अप्रमेयाणि चत्वारि पुण्यतोयगुहागुणाः ॥२८॥
भारतस्यान्तरीक्षस्य कालस्य च हरेरपि।

---

१ C. वेद।

अप्रमेयाणि चत्वारि भावः सीमा गतिः क्रिया ॥२९॥
भारतस्य च गङ्गायाः शिवस्य च हरेरपि ।
अप्रमेयाणि चत्वारि नामपुण्यार्थशक्तयः ॥३०॥
भारतं श्रूयते स्वर्गे भारतं श्रूयते क्षितौ ।
भारतं श्रूयते चैव पाताले परमादरैः ॥३१॥
भारते विविधा अर्था भारते विविधा कथा ।
भारते षड्दर्शनानि भारते धर्मसञ्चयाः ॥३२॥
न भारतमनाश्रित्य कथा काचित् प्रवर्त्तते ।
आहारमनपाश्रित्य शरीरस्येव धारणम् ॥३३॥
यद्रात्रौ कुरुते पापं ब्राह्मणस्त्विन्द्रियैश्चरन् ।
महाभारतमाख्याय पूर्वां सन्ध्यां विमुञ्चति ॥३४॥
यदह्ना कुरुते पापं ब्राह्मणस्त्विन्द्रियैश्चरन् ।
महाभारतमाख्याय सन्ध्यां मुञ्चति पश्चिमाम् ॥३५॥
पूजयेद्भारतं गेहे स्थापयेत् भारतं गेहे ।
दद्याच्च भारतं सद्भ्यः शृणुयाच्च पठेदपि ॥३६॥
स एव परमश्रीमान् सार्थकं तस्य जन्म च ।
वृषोत्सर्गशतस्यैव गयाश्राद्धशतं तथा ॥३७॥
राजसूयाश्वमेधौ च यज्ञौ विपुलदक्षिणौ ।
सदक्षिणौ भारतस्य श्रवणं पाठ एव च ।
तुल्यान्येतानि कर्माणि मिथः प्रतिनिधीन्यपि ॥३८॥
दक्षिणा भारतस्यापि आत्मा सर्वस्वमेव च ।
सर्वस्वं भारते दद्यात् सर्वस्वं पितृमातृषु ॥३९॥

सर्व्वस्वं गुरवे दद्यात् सर्व्वस्वं याचके क्रमात् ।
इत्येवं ते फलं प्रोक्तं भारतस्य समासतः ॥४०॥
कवचं कथ्यते विप्र भारतस्य शृणुष्व तत् ।
ॐ नमो भगवते तुभ्यं वासुदेवाय धीमहि ।
नराय परमेशाय जीवाय परमात्मने ॥४१॥
आदिपर्व्व पातु मूलवीजं पातु द्वितीयकम् ।
ऋषिर्नारायणः पातु शक्तीरामायणं तथा ॥४२॥
विराटपर्व्व छन्दश्च देवतार्य्यास्तवोऽवतु ।
प्रमाणं भगवद्गीता शक्तिमान् पातु भीष्मकः ॥४३॥
प्रतिपाद्यं द्रोणपर्व्व कार्ण[1]पर्व्वार्थकोऽवतु ।
निर्णयः शल्यपर्व्व स्यात् कर्त्ता पातु गदादिकम् ॥४४॥
प्रयोजनं शान्तिपर्व्व स्वरूपमाश्वमेधिकम् ।
लक्षणञ्चावगम्यञ्च लयश्चान्यान्यवन्तु माम् ॥४५॥
अव्यादाचरणीयञ्च सर्वा[2]श्चर्य्यमथोत्तरम् ।
एतद्वै कवचं धृत्वा कुरु भारतमुत्तमम् ॥४६॥
भारते फलसिद्धिस्य कवचादप्यतो भवेत् ।
पठ रामायणं व्यास काव्यवीजं सनातनम् ॥४७॥
पुराणानाञ्च सर्व्वेषां क्रम एवंविधो मतः ।
अष्टादश पुराणानि तत्त्वान्यष्टादशैव तु ॥४८॥
एवञ्चोपपुराणानि तत्त्वान्यष्टादशैव तु ।
महापुराणेषु मुने श्रीभागवतमन्ततः ॥४९॥

---

१ A and B द्रोण० । २ D पर्व्वा० ।

बृहद्धर्मपुराणञ्च पुराणेष्वितरेषु च ।
मुने आचरणीयं स्यात् मूलादीनीतराणि च ॥५०॥
कुरु सर्व्वपुराणानि महाभारतमेव च ।
तेषु तेषु पुराणेषु महाभारत एव च ।
यत्र रामचरित्रं स्यात् तदहं तत्र शक्तिमान् ॥५१॥
ब्रह्मणो वचनं व्यास प्रतिपाल्यं करोमि वै ।
अन्येषान्तु मुनीनां वै ग्रन्थेषु संग्रही कृती ॥५२॥

देव्युवाच ।

इत्याकर्ण्य तदा व्यासः प्रोक्तं वाल्मीकिनाद्भुतम् ।
गुरुणा चादिकविना वेदव्यासो ननाम तम् ॥५३॥

व्यास उवाच ।

महर्षेऽहं कृतार्थोऽस्मि कविरस्मि [महामतिः[१] ।
रामायणं पाठितं मे प्रसन्नोऽस्मि] कृतस्त्वया ॥५४॥
करिष्यामि पुराणानि महाभारतमेव च ।
धर्म्मानहं वदिष्यामि त्वत्प्रसादान्महामुने ॥५५॥

देव्युवाच ।

यदा रामायणं व्यासः पठित्वा सुव्यवस्थितः ।
तदैव भारतादीनां मूर्त्तीः सम्यग्ददर्श ह ॥५६॥
षट्त्रिंशतः पुराणानां भारतस्य च हे सखि ।
संहितानाञ्च सर्वासां मूर्त्तीः संददृशे मुनिः ॥५७॥

---

१ B omits the portion bracketted.

मूर्त्तिमन्ति पुराणानि भारतादीनि सर्वशः।
प्रणम्य तौ मुनिश्रेष्ठौ तत्रैवान्तर्हितानि वै ॥५८॥
मुनिभिः सहितो व्यासो ययौ वदरिकाश्रमम्।
इत्येतद्वां समाख्यातं सख्यौ यत् पृष्टमेव हि।
आगच्छत गृहं यामो यत्र देवो महेश्वरः ॥५९॥

व्यास उवाच।

जाबाले गिरिजा सती सखियुगं सानन्दफुल्लाननम्
स्वाख्यानश्रवणोल्लसत्तरमनःप्रव्यक्तरोमोद्गमम्।
गङ्गाया निकटस्थलादिविवरं कैलासमप्रापयत्
स्वार्द्धं स्वेन मुने विलोकितमिदं साक्षात्परं किं वदे ॥६०॥

इति श्रीबृहद्धर्मपुराणे व्यासजाबालिसम्वादे जयाविजयासम्वादः पूर्वखण्डे त्रिंशत्तमोऽध्यायः।

पूर्व्वखण्डः समाप्तः।

---

# मध्यखण्डः।

## एकत्रिंशत्तमोऽध्यायः।

जावालिरुवाच।

रुद्राणीसखिसम्वादस्त्वया प्रोक्तो विशेषतः।
तत्र गङ्गा पुण्यतमा प्रोक्ता सर्वसुरोत्तमा ॥१॥
का गङ्गा किंप्रभावा च सम्भवोऽस्याः कुतोऽथ वा।
कथं हिमगिरेः कन्या जलरूपा कथं पुनः।
कथं पृथ्वीमागता वा तत्सर्व्वं वद मे गुरो ॥२॥

व्यास उवाच।

तत्राप्युदाहराम्येनमितिहासं पुरातनम्।
शुकजैमिनिसम्वादं जावाले तं निबोध मे ॥३॥
पुरा शुको नाम मुनिर्जैमिनिं शिष्यमात्मनः।
अध्याप्य सर्वशास्त्राणि गङ्गां गन्तुं समादिशत् ॥४॥
तदा पप्रच्छ स गुरुं प्रश्नमेतं तु जैमिनिः।
तदा शुकस्तं शिष्यं स्वं समुवाच कृपान्वितः ॥५॥

शुक उवाच।

पुरा जगदिदं त्वासीन्नष्टस्थावरजङ्गमम्।
चन्द्रसूर्य्यादिरहितं शून्यरूपं तमोमयम्।

प्रकृतिः पुरुषश्चोभौ [[1]न तृतीयं तदा स्थितम् ॥६॥
विसृज्यां पुरुषः प्राप यदा कैवल्यसंस्थितः ॥
तदैव प्रकृतेर्योगात् एकं ब्रह्म त्रिधा बभौ ॥७॥]
सत्त्वं रजस्तमइति गुणाः प्रकृतिसम्भवाः ।
तैर्गुणैः पुरुषा जाता नामान्येषाञ्च मे शृणु ॥८॥
आद्यस्तु सात्त्विको नाम द्वितीयो राजसः स्मृतः ।
तृतीयस्तामस इति ब्रह्माणोऽमी त्रयः स्मृताः ॥९॥
पुरुषं प्रकृतिर्वीक्ष्य त्रिधाभूतं गुणैस्त्रिभिः ।
चिन्तयामास कस्त्वेषु मां संग्रहीष्यति ॥१०॥
इति संचिन्त्य प्रकृतिस्त्रयाणामुपकारिणी ।
ब्रह्मैकमद्वितीयञ्च बभूव परमाख्यकम् ॥११॥
पुंसां सृष्टिविमूढानामभिज्ञा प्रकृतिः स्वयम् ।
अपएव ससर्ज्जादौ रसन्तासु न्ययोजयत् ॥१२॥
आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः ॥१३॥
नारायण इति ख्यातिं प्राप्तां प्रकृतिरुत्तमा ।
शरीरं ग्राहयामास पुरुषांस्त्रीन् स्वयं कृताम् ॥१४॥
ते जलेषु भ्रमन्तो वै स्थानमप्राप्य चिन्तिताः ।
शुश्रुवुश्च नभोवाणीं सर्वे तपतपेति च ॥१५॥
श्रुत्वा तपतपेत्येवं स्तब्धीभूते च वारिणि ।
आत्मस्वात्मानमावेश्य तपस्विनः स्वकं बलात् ॥१६॥

---

१ B omits the portion bracketted.

तान् तथा तपसाविष्टान् वीक्ष्य सा प्रकृतिः परा।
परीक्षितुं मतिं चक्रे उपायेन तपस्यतः ॥१७॥
शवीभूता जले तत्र भासमाना ततस्ततः।
अनुत्ताना छिन्नभिन्ना सर्वाङ्गविगलत्कचा॥
क्रमिभिस्त्वाकुलाङ्गा च गलन्मांसवसाविला।
वीभत्सन्तीव वारीणि सात्त्विकस्यान्तिकं ययौ ॥१८॥१९॥
सात्त्विकस्तां विलोक्यैव विमुखः समभूत्ततः।
पूर्वा दिक् साभवत्तेन ततोऽपि विमुखोऽभवत् ॥२०॥
तत्रापि सा ययौ तेन उत्तरा दिक् ततो ऽभवत्[१]।
तत्रापि सा ययौ सोऽपि ततोऽपि विमुखोऽभवत् ॥२१॥
पश्चिमा दिगभूत्तेन तत्रापि सा गताभवत्।
ततोऽपि विमुखः सोऽभूत् दक्षिणा दिगभूत्ततः ॥२२॥
एवं चतुर्मुखो भूत्वा निर्वृतिं नाधिगम्य च।
पलायितुं मतिश्चक्रे सा च तं तत्यजे द्विज।
तां दृष्ट्वा यदसौ वृद्धस्तेन ब्रह्मा बभूव सः ॥२३॥
तस्मै सात्त्विकभावस्य राजसं ह्यभिभावकम्।
दत्त्वा कृत्वा रक्तवर्णं सर्ज्जकं संविधाय च।
निःससार ततः स्थानात् ययौ राजसिको यथा ॥२४॥
तां स राजसिको दृष्ट्वा [[२]व्याप्तवान् सर्वतो दिशः।
सहस्रशीर्षः पुरुषः सहस्राक्षः सहस्रपात्।

१ B omits this line.
२ C omits the portion bracketted.

सुष्वाप स जले देवो मुद्रयित्वा तु चक्षुषी ॥२५॥२६॥
सा देवी तां तथा दृष्ट्वा तं तत्याज तदैव हि ।
तस्मै राजसभावस्य सात्विकं ह्यभिभावकम् ॥
दत्वा कृत्वा शुक्लवर्णं पालकं संविधाय च ।
निःससार ततः] स्थानात् ययौ तामसिको यथा ॥२७॥
तामसस्य समीपं सा जगाम शवरूपिणी ।
न च कर्तुं समर्थाभूत्तत्समाधिनिवारणम् ॥२८॥
ततो वायुं ससर्ज्जादौ जैमिने गन्धवाहिनम् ॥२९॥
वायुस्तु तस्या वपुषः परमाणून् सुपूतिकान् ।
पुंसो घ्राणेन्द्रियेणैव योजयामास तत्क्षणात् ॥३०॥
तेन दुष्टेन गन्धेन पुमान् भग्नसमाधिकः ।
ददर्श जानुसंस्पृष्टं शवं विकृतविग्रहम् ॥३१॥
तदैवोत्थाय सलिले तां धृत्वा पाणिना द्विज ।
तद्वक्षसि समास्थाय मनो दध्रे समाधये ॥३२॥
तदा सा बुबुधे देवी तं शिवाख्यं शिवाश्रयम् ।
तं समाशिश्रिये शक्तिः पुरुषं प्रकृतिः परा ॥३३॥
शिवस्तु तां समारुह्य चिन्तयामास चेतसा ।
चिन्तयित्वा मुहूर्त्तेन ज्ञात्वा तां मूलरूपिणीम् ॥
अङ्गुष्ठमात्रः समभूल्लिङ्गरूपी महेश्वरः ॥३४॥
तं लिङ्गरूपिणं दृष्ट्वा देवी सा शवरूपिणी ।
शवरूपं परित्यज्य योनिरूपा बभूव ह ॥३५॥
त्रिकोणमण्डलाकारे लिङ्गमारोप्य स्वात्मनि ।

माहेश्वरप्रजासृष्टौ ममज्ज सलिले द्विज ॥३६॥
प्रकृतेः पुरुषस्यापि यावल्लिङ्गमिदं जले।
तावन्माहेश्वरी सृष्टिर्वियोगे प्रलयो भवेत् ॥३७॥
योनिः साक्षात् भगवती लिङ्गं साक्षान्महेश्वरः।
तयोस्तु पूजनेन स्यात् सर्वदैवतपूजनम् ॥३८॥
एतयोः पूजनाभावे सृष्टिलोपो न चान्यथा।
अपूजयित्वा यो भुङ्क्ते स सर्व्वेष्टपराङ्मुखः ॥३९॥
तत्र लिङ्गे जले मग्ने प्रकृतिः शवरूपताम्।
त्यक्त्वा चक्रे शिवं स्थूलं स्वार्थाय त्रिगुणात्मकम् ॥४०॥
गुणेनैकेन सृष्टिः स्यात् गुणेनैकेन पालनम्।
त्रिभिर्गुणैर्विना न स्यात् संहारः किल जैमिने ॥४१॥
अतः शिवस्तु त्रिगुणः सर्व्वेषामुपकारकः।
शुक्लवर्णो रराजासौ त्रिनेत्रो नीललोहितः ॥४२॥
अथैव प्रकृतिं देवीमदृष्ट्वा पूर्वसम्भवौ।
निरालम्बौ बभ्रमतुर्व्याकुलौ च बभूवतु।
तयोर्व्याकुलतां दृष्ट्वा प्रकृतिर्दर्शनं ददौ ॥४३॥
निराकाराश्च तां दृष्ट्वा दृष्ट्वा ज्योतिःस्वरूपिणीम्।
ब्रह्मविष्णू तुष्टुवतुः स्तुतिभिः परमादरात् ॥४४॥

ब्रह्मविष्णू ऊचतुः।

त्वं मूलप्रकृतिर्देवी निर्विकारा सनातनी।
महदाद्या विकारास्ते षोड़श प्रकृतेर्हि ये ॥४५॥
वयन्तु पुरुषा नाम सततं त्वदशाः स्थिताः।

शिवं किमेकं मद्बीजे त्यजस्यावां कथं पुनः ॥४६॥

शुक उवाच ।

इत्युक्ता सा च प्रकृतिर्निराकारा ब्रवीति तान् ।
शिवञ्च सन्निधीकृत्य ब्रह्मविष्णुमहेश्वरान् ॥४७॥

प्रकृतिरुवाच ।

सत्वं रजस्तमइति गुणा मे जगदीश्वराः ।
तेन त्रयो हि पुरुषाः कृता यूयं पृथक्कृताः ॥४८॥
कथं त्यक्ता मया यूयं नैवं वै मन्यथ क्वचित् ।
यथा त्रयो वै पुरुषाः यूयं तद्वदहं पुनः ।
भविष्यामि पञ्चभेदा प्रकृतिस्त्रिगुणात्मिका ॥४९॥
ब्रह्मा चतुर्मुखस्त्वासौ करोतु सृष्टिमुत्तमाम् ।
पालनञ्च करोत्वेष विष्णुः परमपुरुषः ॥५०॥
सत्वमूर्त्तिरयं देवो मध्यमो वो महोत्तमः ।
नारायणाख्यो भगवान् वासुदेवः सनातनः ॥५१॥
शिवोऽयमन्ते प्रलयं करिष्यति गुणत्रयी ॥
ब्रह्मा सृजतु भूतानि स्थावराणि चराणि च ।
करोतु मानसीं सृष्टिं प्रजावृद्धिर्नचेद् भवेत् ॥५२॥
तदा हि जङ्गमा सृष्टिर्द्विधा सम्पादयिष्यते ।
स्त्री पुमानिति भेदेन विस्तीर्णा स्यात् प्रजा तदा ॥५३॥
स्त्रीरूपाहं भविष्यामि पुंरूपस्तु महेश्वरः ।
लिङ्गाङ्का च भागाङ्का च तस्मान्माहेश्वरी प्रजा ॥५४॥
एवं दृष्टं जले लिङ्गं भगवद्भिः प्रवर्त्तते ।

भगवत्त्वं प्रजात्वक्षो प्रजाभिः पूजयिष्यते ॥५५॥
युष्मानपि च लप्स्यामि स्त्रियो भूत्वाथ पञ्च वै।
गङ्गा दुर्गा च सावित्री लक्ष्मीश्चैव सरस्वती ॥५६॥
एताः प्रकृतयः पञ्च भविष्यामि सुरोत्तमाः।
नानारूपा भविष्यामो वयञ्च ब्रह्मसृष्टिषु ॥
सत्वादि गुणकार्य्ये च यूयं भवत सादराः ॥५७॥

शुक उवाच।

इत्युक्त्वा प्रकृति र्देवी निराकारा निरञ्जना।
निववर्त्त पुमांसोऽपि कार्य्यकाले व्यवस्थिताः ॥५८॥

इति श्रीबृहद्धर्मपुराणे शुकजैमिनिसम्वादे मध्यखण्डे एकत्रिंशत्तमोऽध्यायः।

---

# द्वाविंशत्तमोऽध्यायः ।



शुक उवाच ।

अथ पूर्णः पुमान् विष्णुः सत्वमाश्रित्य भूतवान् ।
अशयिष्ट जले तस्य नाभेः पद्ममभून्महत् ॥१॥
स्रष्टुं समुद्यतो ब्रह्मा बहुधा सलिले भ्रमन् ।
तदेव पद्मं सुमहत् स्थूलं प्राप द्विजोत्तम ॥२॥
तस्मिन्नेव महापद्मे स्रष्टुं समुपचक्रमे ।
कालमादौ ससर्जैव दण्डक्षणलवादिकम् ॥३॥
अतो यज्ञे महातत्त्वं ततोऽहं समजायत ।
तन्मात्राणि ततः पञ्च तेभ्यो भूतानि पञ्च वै ॥४॥
पृथिवीजलतेजांसि वाय्वाकाशौ तथैव च ।
सृष्ट्वा मात्राणि तेष्वेव साश्रयाण्यभवन् क्रमात् ॥५॥
क्षितौ गन्धो रसो वार्षु रूपं तेजसि चाश्रितम् ।
वायौस्पर्शस्तथा शब्द आकाशे द्विजसत्तम ॥६॥
चक्रे देहं पञ्चभूतैस्तन्मात्रैरिन्द्रियाण्यपि ।
अधिष्ठाताभवत्तत्र विष्णुर्जीवः स्वयं पुमान् ॥७॥
प्रकृत्या वीक्षितो देव एवं सर्व्वत्र कल्पना ।
अहं ममेति नामत्वान्नानारूपञ्च प्राप्तवान् ॥८॥
प्रकृतिस्त्रिविधा प्रोक्ता विद्याविद्या द्वयं तथा ।
विद्या तु पञ्चधा भूता गङ्गाद्याः कथिता पुरा ॥९॥
अविद्याद्वयमुक्तं यन्माया च परमा तथा ।

माया ह्यावरिका शक्तिः परमाजीवयोर्मता ॥१०॥
जीवो नारायणो विष्णुः पुरुषः परमेश्वितः।
यया वृतो न परमां द्रष्टुं प्राप्नोति बुद्धिमान्॥
यदि तस्याः प्रसादेन तपस्यादिभवेन वै।
तां पश्यति तदा तत्त्वं प्राप्य निर्वृतिमिच्छति ॥११॥१२॥
ततो ब्रह्मा ससर्जैव मानसांस्तनयान्दश।
वशिष्ठमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ॥१३॥
भृगुं दक्षं नारदञ्च कर्द्दमं दशमं तथा।
एते सृष्टाः स्वपितरं प्राहुर्ब्रह्मन् कथं वयम् ॥१४॥
सृष्टास्तानाह वै ब्रह्मा प्रजाः सृजत पुत्रकाः।
प्रतिसर्गे ह्यकुशलाः सृष्ट्यर्थं तपसि स्थिताः ॥१५॥
ब्रह्मा वपुर्द्विधा चक्रे प्रजावृद्ध्यै द्विजोत्तम।
वामार्द्धं शतरूपाख्या स्त्रीजाता चारुरूपिणी ॥१६॥
दक्षिणार्द्धं पुमान् भूतो नाम्ना स्वायम्भुवो मनुः।
कन्दर्पञ्च हृदः स्थानाज्जनयामास सृष्टये ॥१७॥
तदा मैथुनधर्म्मेण प्रजा समभवद् बहुः।
भार्य्यायां शतरूपायां मनुः स्वायम्भुवो यदा।
पञ्चापत्यान्यजनयत् तिस्रः कन्याः सुतद्वयम् ॥१८॥
आकूतिन्देवहूतिञ्च प्रसूतिमिति कन्यकाः।
प्रियव्रतोत्तानपादौ पुत्रौ च द्विजसत्तम ॥१९॥
तदा प्रजानां स्थित्यर्थं विष्णुः शूकररूपधृक्।
उद्दधार धरां धीर प्रजाधारणकारिणीम् ॥२०॥

आकूतिं रुचये प्रादात् कर्द्दमाय तु मध्यमाम् ।
ददौ प्रसूतिं दक्षाय यैरेव वर्द्धिताः प्रजाः ॥२१॥
कर्द्दमो जनयामास देवहूत्यां सुतान् बहून् ।
अरुन्धतीप्रभृतयो वशिष्ठादिस्त्रियः शुभाः ॥२२॥
रुचे यज्ञस्तथाकूत्यां दक्षस्यापि प्रजाः शृणु ।
कन्याः संजनयामास दक्षो नाना प्रसूतितः ॥२३॥
कन्यामेकामग्नयेऽदात् स्वाहानाम्नीं द्विजोत्तम ।
सतीनाम्नीं महेशाय कश्यपाय त्रयोदश ॥२४॥
अदितिर्द्दितिर्दनुः काष्ठा अरिष्टा सुरसा तिमिः ।
मुनिः क्रोधवशा ताम्रा विनता कद्रुरेव च ॥
त्रयोदशी भानुमती शृण्वपत्यानि जैमिने ॥२५॥
अदित्यां समभूत्सूर्य्यः सूर्य्यपुत्रो मनुः परः ।
सूर्य्यवंशो महानेष पुण्यकीर्त्तिरनामयः ॥२६॥
दितेश्च जाता वै दैत्या दनोर्द्दानवसम्भवः ।
काष्ठायाः पशवोऽश्वाद्या अरिष्टायास्तु भूरुहाः ॥२७॥
सुरसायान्तु मारीचोऽजनत् पञ्चनखान् पशून् ।
तिमेः कुम्भीरमत्स्याद्या मुनेर्गोमहिषादयः ॥२८॥
अत्रिपत्न्यां तु कार्द्दम्यां पुत्रत्रयमजीजनत् ।
दत्तं दुर्वाससं चन्द्रं ब्रह्मविष्णुशिवात्मकान् ॥२९॥
चन्द्रपुत्रो बुधो जातो बुधस्य च पुरूरवाः ।
एवं हि चन्द्रवंशोऽयं पुण्यकीर्त्तिरनामयः ॥३०॥
एषा तु मानवी सृष्टिः सर्वशो हि चतुर्विधा ।

ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चेति पृथक् पृथक् ॥२१॥
सुरासुरनराः पक्षिपशुद्रुमलतादयः।
एवं चतुर्व्विधा सर्वा प्रजा वर्णचतुष्टयी ॥२२॥
ततः सन्ध्या समभवत् कन्या वै ब्रह्मणः शुभा।
तस्यां ब्रह्मा मनश्चक्रे मनोभवविधर्षितः ॥२३॥
ब्रह्मा शरीरं तत्याज नीहारः समभूच्च तत्।
ताञ्च सन्ध्यां त्रिधा चक्रे प्रातः सायञ्च मध्यमाम् ॥२४॥
ततो ब्रह्मा पुनर्देही क्रोधञ्चक्रे महत्तरम्।
ततो जातो महारुद्रः कामनाशाय धूर्जटिः ॥२५॥
तं ददर्श तदा ब्रह्मा जटिलं नीललोहितम्।
त्रिनेत्रं पञ्चवदनमेकवक्त्रं द्विवक्त्रकम् ॥२६॥
त्रिवक्त्रञ्च चतुर्वक्त्रं भीमं कोटिरविप्रभम्।
निःश्वसन्तं मुहुर्घूर्णन्नयनं नीललोहितम् ॥२७॥
मारय भ्रामय क्रोधात् द्रावयोच्चाटयेति च।
मुहुर्मुहुर्वदन्तञ्च धावन्तं दन्तदन्तुरम् ॥२८॥
तं दृष्ट्वा भीषणवरं ग्रसन्तमिव सर्व्वतः।
विभेदैकादशविधं रुद्रा एकादशाभवन् ॥२९॥
ते तथैवोग्ररूपा वै अभूवन् सृष्टिलोपकाः।
ब्रह्मा दक्षं समाहूय जगाद भयविह्वलः ॥४०॥
वत्स दक्ष महाभाग भ्रातरोऽमी तवोत्तमाः।
वशे स्थापय चैतांस्त्वं मा मां ग्रसत्वयं गणः ॥४१॥
श्रुत्वैवं ब्रह्मवचनं दक्षः पितृहिते रतः।

स्वेन योगवलेनैव तान् वशेऽस्थापयत् स्वकान् ।
सर्पानिव विषात्युग्रान् महामन्त्रवलेन वै ॥४२॥
जनयित्वा विधौ रुद्रांस्तत्याज क्रोधमात्मनः ।
क्रोधस्तु स्वाश्रयद्रोही तं श्रेयोर्थी परित्यजेत् ॥४३॥
यत्र रुद्रभयाद् ब्रह्मा शरीरे विकृतिं गतः ।
यक्षरक्षोगणांश्चैव ततो जाताः सहस्रशः ॥४४॥
एवं यथोपयोगेन गन्धर्व्वाद्याश्च जज्ञिरे ।
एवं ससर्ज वै ब्रह्मा सृष्टिकर्त्ता सनातनः ।
विष्णुः पालयते सर्व्वमवतीर्य्य निजेच्छया ॥४५॥

इति श्रीबृहद्धर्मपुराणे मध्यखण्डे द्वात्रिंशत्तमोऽध्यायः ।

---

# त्रयस्त्रिंशत्तमोऽध्यायः ।

शुक उवाच ।

अंशस्तृतीयः प्रकृतेर्विद्या सा पञ्चधा मता ।
अर्द्धं दाक्षायणी देवी सावित्री पादमेव च ॥१॥
पादमन्यत् द्विधाभूतं लक्ष्मीरथ सरस्वती ।
तत्र दाक्षायणी देवी सती पितृमखे द्विज ॥
श्रुत्वा शिवस्य निन्दां वै तनुं तत्याज सुन्दरी ।
त्यक्त्वा तनुं द्विधाभूता हिमालयमगाद्द्विज[1] ॥२॥३॥

जैमिनिरुवाच ।

कथं दाक्षायणी देवी तनुं तत्याज तादृशीम् ।
कथम्वा निन्दयामास शिवं देवं महेश्वरम् ॥४॥
द्विधा भूत्वा कथं देवी हिमालयमगाद्गुरो ।
तद्वदस्वानुपूर्व्व्येण शिष्यस्तेऽहं प्रियो यदि ॥५॥

शुक उवाच ।

पुरा प्रजापतिर्दक्षः शेषकन्यां सतीं शुभाम् ।
अनन्यकान्तिसौन्दर्य्यगुणाढ्यां सत्यरूपिणीम् ॥६॥
तां दृष्ट्वा पतिमर्हार्हां कस्मै देयेति चिन्तयन् ।
स्वयम्वरा भवत्त्वेषा दृष्ट्वा योग्यं पतिं सती ॥७॥
इति निश्चित्य मनसा समाहूयाखिलानपि ।

---

१ C त्यक्त्वा देहं द्विधा भूत्वा गङ्गोमा च नगात्मजे ।

चक्रे रूपमयीं गोष्ठीं विना देवं त्रिलोचनम् ॥८॥
शिवमेव पतिं प्राप्तुं सती यत्नवती सदा ।
आराधयामास सदा तन्न जानन्ति केचन ॥९॥
अथ प्रजापतिर्दक्षः काले प्राप्ते सुलक्षणे ।
सभां प्रवेशयामास सतीं परमसुन्दरीम् ॥१०॥
ज्वलत्कनकगौराङ्गीं मोहयन्तीं जगत्त्रयम् ।
वासः परिदधानाञ्च चन्द्रकोटिशुचिच्छवि ॥११॥
सुगन्धिकुसुमाबद्धकेशपाशां कृशोदरीम् ।
सिन्दूरतिलकं भाले वहन्तीं चारुलोचनाम् ॥१२॥
रूपरत्नाकरे रूपलक्ष्मीमिव समुत्थिताम् ।
माल्यहस्तां रत्नपीठवरोपरिलसत्तराम् ।
तां दृष्ट्वा मुमुहुः सर्व्वे वाक्यागोचररूपिणीम् ॥१३॥
दक्ष उवाच ॥
वत्से सति त्रिनयने योग्यं दृष्ट्वा पतिं वृणु ।
मुनयो देवदैत्याद्याः सर्व्वे ह्यत्र समागताः ॥१४॥
त्वं यथा चारुसर्व्वाङ्गी तथा सर्व्वाङ्गसुन्दरम् ।
दृष्ट्वा नेत्रैस्त्रिभिः पुत्त्रि पतिं वृणुष्वनया स्रजा ॥१५॥
इत्युक्ता सा तदा पित्रा दृष्ट्वा समितिमुत्तमाम् ।
महेश्वरं न दृष्ट्वैव शिवशून्याममन्यत ॥१६॥
मनसा चिन्तयामास पिता मम शिवं द्विषन् ।
शिवशून्यां सभाञ्चक्रे को मे शिवमृते पतिः ॥१७॥
प्रभो देव महेशान बुद्धिरूप सनातन ।

नागतोऽसीह यस्मात् त्वं तन्मन्ये मामुपेक्षसे ॥१८॥
किन्तु त्वां देवदेवेशं भगवन्तं विना परम् ।
नैवाहं वरयिष्यामि पतिं त्रिजगतां पतिम् ॥१९॥
कोऽपि त्वां द्विषतु क्रूरः कोऽपि निन्दयतु ध्रुवम् ।
मामेव हन्तु वा कोऽपि भवानेव पतिर्मम ॥२०॥
तव निन्दाकथा चैषां नास्तु मत्कर्णगोचरः ।
यदा ते निन्दनवचो मत्कर्णगोचरो भवेत् ॥२१॥
तदा देहं परित्यज्य लप्स्यामि त्वां भवान्तरे ।
इति निश्चित्य मनसा देवी दाक्षायणी द्विज ॥२२॥
भूमौ मालां निचिक्षेप नमः शिवाय वादिनी ।
देवदेव महेशान भक्तिलभ्य सनातन ॥२३॥
अनेन भूमौ विन्यस्तमाल्येन मे पतिर्भव ।
एवमुक्तवती देवी शिवं भूमेः समुत्थितम् ॥२४॥
कण्ठालम्बिततन्माल्यं ददर्श दक्षकन्यका ।
शिवं शशिसमूहाभं वृषारूढं महेश्वरम् ॥२५॥
स्वदत्तमालासंशोभिगलं सा प्रणनाम तम् ।
आत्मानं दर्शयित्वा स शिवो दाक्षायणीन्तदा ॥२६॥
अगोचरस्तदान्येषां तत्रैवान्तरधीयत ।
शिवाय दत्तमालां तां दृष्ट्वा दक्षादयो जनाः ॥२७॥
हाहाकारं तदा चक्रुः सतीं प्रति शिवं गताम् ।
कृतवत्यसि किं मूर्खे शिवं पतिमुपागता ॥२८॥
इन्द्रो वह्निः पितृपतिर्नैर्ऋतो वरुणो मरुत् ।

कुवेर ईश इत्येषां त्यक्त्वा चान्यतमं पतिम् ॥२९॥
प्रेतभूमीरजोभस्मगुण्ठितोरःस्थलं पतिम् ।
आलिङ्गितुं मतिः किन्ते जाता पुत्त्रि ममात्मजे ॥३०॥
धिगस्तु तं विधातारं येन रूपवती कृता ।
चारुपुष्पकृता माला श्मशानेऽधिगता यथा ॥३१॥
ब्रह्मसृष्टाविमे सर्व्वे रूपवन्तः समाहृताः ।
सर्व्वं मे विफलं जातं भस्मार्थमुद्यमो यथा ॥३२॥
नस्यास्त्वं मे यदि सुता तदैव शुभदं भवेत् ।
त्वं मे जाता कुलं दुष्टं कृतं कस्मात् कृतागसः ॥३३॥
नात्मानमपि जानीषे न शिवं न च मामपि ।
शिवोपमाः कृताः सर्व्वे कृतवत्या पतिं शिवम् ॥३४॥
किं न दृष्टा मम गृहे रुद्रा एकादशैव हि ।
तथाभूतं परं रुद्रं त्वं वै कृतवती पतिम् ॥३५॥
मन्ये तेनैव दुष्टेन कुमन्त्रज्ञानशालिना ।
रक्षो वशीकृता पुत्त्री ममेयं नात्र संशयः ॥३६॥

शुक उवाच ।

एवं श्रुत्वा दक्षवाक्यं शिवनिन्दाकरं परम् ॥३७॥
दधीचिर्मुनिशार्दूलः सभायां दक्षमब्रवीत् ।

दधीचिरुवाच ।

किं निन्दसि महेशानं शिवं राजीवलोचनम् ॥३८॥
ब्रह्मविष्णुमहेशानात्मक एष सनातनः ।
आत्मना यादृशं भाग्यं न तत् पश्यसि मन्यते ॥३९॥

कन्या ते प्रकृतिः साक्षात् शिवः साक्षात् पुमान् परः ॥४०॥
कथं मतिरियं जाता शिवं निन्दयितुं प्रभो।
कः शिवः का सतीत्येवमज्ञात्वा दुरदृष्टतः ॥४१॥

दक्ष उवाच।

जाने शिवं श्मशानस्थं हरं प्रेतगणाधिपम्।
भिक्षुकं वायुवसनं सदा विक्षेपवादिनम् ॥४२॥
गुणहीनं रूपहीनं धनहीनं[1] सुविश्रुतम्।
कथं मम सुतायाः स योग्यः पाणिग्रहे भवेत् ॥४३॥
ब्रह्मा सृजति भूतानि विष्णुः पालयते प्रजाः।
उभावैश्वर्य्यवन्तौ तौ तस्यैश्वर्य्यं कुतो गतम् ॥४४॥
तस्मादैश्वर्य्ययुक्ता वै ब्रह्मविष्णुशिवाख्यकाः।
तेऽन्ये रुद्रोऽप्ययं भिन्नो भिक्षुकत्वादिधर्म्मवान् ॥४५॥

दधीचिरुवाच।

यस्त्वया कथ्यते भिक्षुः श्मशानप्रिय एव च।
दृष्टवानसि कुत्रापि शिवो ह्यनुमितोऽपि वा ॥४६॥
पारम्पर्य्येण लोकेषु श्रुतिमात्रं त्वया मतम्।
येन सर्व्वेश्वरं देवं भवानपि च निन्दति ॥४७॥
लोकेषु त्रिविधा लोका उत्तमाधममध्यमाः।
यथा स्वयं तथा देवान् जानते सर्व्व एव हि ॥४८॥
देवा लोके[2] निजं भावं गर्हितं गर्हिते जने[3]।

---

१ C has बुद्धिहीनम्। २ B and D देवलोके। ३ A B and D सहिते जने।

विख्यापयन्ति[1] न त्वेवं प्रदर्शयन्ति[2] मन्यताम् ॥४९॥
अतः शिवं महेशानं नैव निन्दितुमर्हसि।
तव कन्या गुणैराढ्या पतिमेतं यदावृणोत्।
अत एव हि मन्तव्यः शिवः सर्व्वेश्वरो हरः॥५०॥

दक्ष उवाच।

तादृशं देवदेवेशं शिवं देवं सतीपतिम्।
द्रक्ष्यामि वाथ जानीयां तदा मे प्रत्ययो भवेत्।
गुणमात्रोत्कीर्त्तनात्तु गुणो दोषो न बुध्यते॥५१॥

दधीचिरुवाच।

यादृशस्तादृशः सोऽस्तु तस्मै चाहूय स्वां सुताम्।
संपूज्य च सतीं देहि सत्यैवानुमताय च॥५२॥

दक्ष उवाच।

अमुना तु सती नष्टा न जातेयं मदौरसात्।
इत्युक्ता प्राविशद्गेहं गताः सर्व्वे स्वमालयं॥५३॥
सती तु शिवलाभेन हर्षिता व्यचरत् सदा।
अन्यत्र मान-सम्मान-तुल्य-भावा द्विजोत्तम॥५४॥

इति श्रीबृहद्धर्म्मपुराणे मध्यखण्डे दक्षदधीचिसम्वादे सतीस्वयम्बरो नाम त्रयस्त्रिंशत्तमोऽध्यायः।

---

१ A and D नि०। २ B प्रदर्शयितुमन्यथा D न प्रदर्शन्ति मन्यताम्।

## चतुस्त्रिंशत्तमोऽध्यायः ।

शुक उवाच ।

कदाचित् स महेशानः सतीं द्रष्टुं समागतः ।
दक्षालयं भिक्षुरूपं धृत्वा सर्व्वस्वरूपवान् ॥ १ ॥
स्कन्धे कन्थां वहन् जीर्णां वायुना धूलिवर्षिणीम् ।
सधूलि-तण्डुल-ध्वस्त-मृद्भाण्डञ्च करे दधत् ॥ २ ॥
दण्डमेकं तथा जीर्णं स्वयं जीर्णकलेवरः ।
वलीपलितसर्व्वाङ्गः कम्पमानशिरास्तथा ॥ ३ ॥
एवम्भूतो महादेवो भ्रमंस्तत्र द्विजोत्तम ।
सतीं ददर्श सहितां सखिभिः सप्तभिः शुभाम् ॥ ४ ॥
तासां स निकटीभूय वृद्धो वक्तुमुपाक्रमत् ॥ ५ ॥

वृद्ध उवाच ।

केयं रुचिरसर्व्वाङ्गी ज्वलत्कनकदेवता ।
पुरदेवीव दक्षस्य भ्रमतीव यदृच्छया ॥ ६ ॥

स्त्रिय ऊचुः ॥

इयं दक्षसुता वृद्ध किमस्या ननु पृच्छसि ।
अस्याः पिता महाबुद्धिः सभाञ्चक्रे स्वयम्वरे ॥ ७ ॥

तत्राहूतांश्च देवान् वै त्यक्त्वा शम्भुं समावृणोत्।
अयोग्यं पतिमापन्ना पित्रा न प्रीयतेऽपि च ॥ ८॥
तथापीयं सदा हर्षान्नैव दुःखं कदाचन।
चिन्तयन्ती कृतार्थेव भ्रमन्ती हर्षचिन्तया ॥९॥
अस्मिन्नर्थे ह्यमुष्यास्तु पित्राद्या दुःखिनः सदा।
न लेषा शिवपत्नी वै भूता नैच्छत् पतिं क्वचित् ॥१०॥

वृद्ध उवाच।

अहो इयं श्रुता शम्भुं पतिं प्राप्ता परोच्चतः।
एतादृशीं स्त्रियं प्राप्य नैतां स्मरत्यसौ कथम् ॥११॥
कथम्वा देववर्गेषु सत्सु शम्भुमुपाश्रिता[1]।
अहमेतां शिवो भूत्वा गच्छामि यदि मन्यथ ॥१२॥
क्व स शम्भुः श्मशानस्थः क्वेयं राजसुता शुभा।
अनया तस्य सम्बन्धो लच्चः कस्य भविष्यति ॥१३॥
लब्धैव किल कन्येयं दक्षेण रुचिरानना।
अहमेनां ग्रहीष्यामि शिवस्यार्थः स्त्रिया च कः ॥१४॥

स्त्रिय ऊचुः।

अहो मूर्खोऽसि वृद्धोऽसि किमवाच्यं ब्रवीषि भो।
या देवानेव तत्याज सा किं त्वामधियास्यति ॥१५॥
भिक्षुकस्त्वं महाजीर्णः क्षीण-सर्व्वेन्द्रियोऽपि च।
मुमूर्षोरिव ते वाक्यं गच्छ दूरं जिजीविषुः ॥१६॥
सखी रत्नमुखी नाम जगादैवं शुचिस्मिता।

---

१ B उपागता।

तां निवार्य्यापरा प्राह सखीं तां नीलकुन्तला ॥१७॥

नीलकुन्तलोवाच।

सखि रत्नमुखि प्राप्तो नायं वृद्धवरो मतः।
अयमेव शिवः साक्षात् मूर्खाणां बुद्धिमोहकः ॥१८॥
सखि पश्य सतीमेतां पश्यन्तीं भिक्षुकाननम्।
देव-दुर्लक्ष-चारित्र्यां[1] पण्डितस्तत्र मुह्यति ॥१९॥

रत्नमुख्युवाच ॥

सती यथा तथा लक्ष्म न भिन्ना युवयोर्मतिः।
एतमेव युवां जातं को वा विधिनिषेधकः ॥२०॥

नीलकुन्तलोवाच।

अहं जानामि विश्वेशं शिवमेतं सनातनम्।
अपण्डितासि मूर्खासि दक्षोऽपि मूर्खसत्तमः ॥२१॥
शिवनिन्दाफलं चापि लप्स्यतेऽसौ किलाचिरात्।
असौ सती दक्षकन्या आढ्या सर्व्वगुणैरपि ॥२२॥
किमसन्तं पतिं मूर्खे करिष्यत्युत मन्यसे।
इन्द्रादयो लोकपाला यस्य पादानुवर्त्तिनः ॥२३॥
स एवास्याः पतिर्ज्ञेयोऽलक्ष्यलिङ्गो महेश्वरः।
ममैवं मतिरुत्पन्ना मन्यतां कोऽपि किञ्चन ॥२४॥

रत्नमुख्युवाच।

वृषबुद्धे महामूर्खे वद मा नीलकुन्तले।

---

१ C and D देवादुर्लक्ष्यचारित्राः।

वृषत्वं याहि येनायं वृषारूढ़ो व्रजेत् पथि ॥२५॥

नीलकुन्तलोवाच ॥

एवमस्तु परं भाग्यं शिववाहनतामगाम् ।
शिवं शिवाञ्च सततं वहाम्येव यथेच्छया ॥२६॥
इत्युक्ता सा वृषो भूता तां समारुरुहे शिवः ।
आकाशे च जयध्वानः पुष्पवृष्ट्या सहाभवत् ॥२७॥
वृषारूढ़े भिक्षुके तु दक्षस्य नगरे तदा ।
सतीपतिः समायातः इति कोलाहलोऽभवत् ॥२८॥
शिवस्यान्तर्द्धे सर्व्वे जगुश्चापि परस्परम् ।
कुत्र शम्भुः कुत्र शम्भुर्वृषारूढ़ इहागतः ॥२९॥
प्रत्यूचुरपरे शम्भुः श्रूयतेऽमुकवेश्मनि ।
एवं लोकवरात्मासौ विक्रीड़ति महेश्वरः ॥३०॥
केनापि दृश्यते नैतद्दधीचेर्वचनं यथा ।
नन्दी नाम तत्र कश्चित् तार्किकः परितो भ्रमन् ॥३१॥
अन्वेषयन् पुराद्वाह्ये निर्जने ददृशे हरम् ।
श्रान्तं शयानं क्षुधितं जीर्णं परमदुर्व्वलम् ॥३२॥
वृषस्य निकटे शुक्लं चरन्तं वलिनाम्बरम् ।
तं तथाभूतमालक्ष्य नन्दी बुद्धिमताम्बरः ।
प्रणनाम महेशाय तस्मै जीर्णाय रूपिणे ॥३३॥

वृद्ध उवाच ॥

कथं महेशाय इति मां नमस्यसि सादरः ।
अहं पुनरिहायातो लोकोपद्रवशङ्कितः ॥३४॥

नन्द्युवाच ॥

ज्ञातोऽपि मे[1] शिवः साक्षादाच्छन्नो वृद्धरूपधृक्।
वृद्धरूपेण चागत्य विडम्बयसि किं जनान् ॥२५॥
अहं नन्दी नाम नाम्ना दक्षस्यानुचरः सदा।
शिष्यो दधीचेर्विप्रर्षेस्त्वत्प्रभावविदः सतः ॥२६॥

वृद्ध उवाच।

अहं केन प्रमाणेन शिवो ज्ञातस्त्वया वरः।
कीदृक् ते मतिरुत्पन्ना मामन्वेष्टुं महामते ॥२७॥

नन्द्युवाच[2]।

[त्वं वृद्धिरूपी भगवान् शिवो दाक्षायणीपतिः।
अहं त्वद्भक्तया मत्या ज्ञातवांस्त्वां महेश्वरम् ॥२८॥

शुक उवाच।

इत्युक्तस्तेन वै शम्भुस्त्यक्त्वा वृद्धादिवेशताम्।
वृषारूढो महेशोऽभूत् शशि-कोटि-शुचि-प्रभः ॥] २९॥

नन्द्युवाच।

नमामि ते महेश ते शतेन्दुकोटिरोचिषे।
त्रिलोचनाय भास्वते गुणत्रयस्य धारिणे ॥४०॥
सतीधराय योगिनां वराय योगधारिणे।
धराधरैकशायिने शुभाशुभोपशायिने[3] ॥४१॥

---

१ D च। २ B omits the portion bracketted.
३ D ० शान्तये।

विधिर्हरिः शिवो भवान् गुणैः प्रधानसम्भवैः ।
स्वसम्भवा[१] वशीकृताः प्रधानतोऽवधानतः ॥४२॥
त्वया पुनर्वशीकृतं प्रधानमेव सर्व्वथा ।
यतः प्रधानरूपिणी सती भवन्तमीहते ॥४३॥
पुरे शरीरनामके पुमान् जड़ः स्वभावतः ।
स्थितः प्रधानसंज्ञके प्रधान-कर्तृताकृतिः ॥४४॥
करोम्यहं दधाम्यहं ममेति विभ्रमाकुलः ।
समामनोति यः पुमान् स वैभवान्न मन्यते[२] ॥४५॥
स वै पुमान् पुरस्थितो हरिर्हि निर्गुणो गुणम् ।
प्रधानसम्भवं तथा लघुप्रकाशरूपकम् ॥४६॥
दधत्तु सत्त्वनामकं सुखादिभोगसंहितम् ।
भवांस्तु शेषकारकः स्वयन्तु[३] शेषरूपकः ॥४७॥
शिवो हरः सनातनो महेश्वरः पुरातनः ।
वृषेश-पृष्ठ-शोभनो नमामि ते पदाम्बुजम् ॥४८॥
भवत्समीपवासितां श्रयामि चेति वाञ्छया ।
समागतोऽहमत्र ते सतीपते प्रसीद मे ॥४९॥

शिव उवाच ।

अहं त्वया मतो यदि प्रसादतो ममैव तत् ।
ददामि ते वरं यथा मतिस्तथास्तु नन्दिनः ॥५०॥

---

१ C स्वयम्भुवा । २ C यः पुनः स वैभवान्न मन्यते ।
३ B स्वयम्भु० ।

प्रजामि दक्षकन्यकां प्रणेतुकाम इच्छया।
वृतस्तयास्मि तां विना क्वचित् क्षणन्नभाववान् ॥५१॥
एवं नन्दी शिव-परिचयात् प्राप्त-तादृक्-प्रसादो
नित्याभ्यास-स्थिति-मति-परस्तस्य शम्भोर्बभूव।
धृत्वा चासौ द्विज-तनु-कृतं[1] नन्दिना सार्द्धमेव
प्रायाद्यस्मिन् सखि-गण-युता श्रीमती दक्षकन्या ॥५२॥

इति श्रीवृहद्धर्म्मपुराणे मध्यखण्डे भिक्षुकागमनं नाम चतुस्त्रिंशोऽध्यायः॥

---

१ D ०कृतिं।

# पञ्चत्रिंशत्तमोऽध्यायः ।

शुक उवाच ।

अथ दक्षपुरोद्याने तपस्वि-निलये शुभे ।
विप्ररूपेण भूतेश आजगाम सतीच्छया ॥ १ ॥
सखीभिः सप्तभिः सार्द्धं सती तत्र शुचिस्मिता ॥
विचरन्ती महेशेन ददृशे विप्ररूपिणा ॥ २ ॥
पुष्पाधारकरश्रीमन्नन्दियुक्तेन जैमिने ।
ऊर्द्धपुण्ड्रं मृत्तिलकं[1] दधानेन द्विवाससा ॥ ३ ॥
धासोदण्डयज्ञसूत्रैः श्वेतैर्व्विलसता सता ।
वेदांश्च पठता प्रोच्चैर्गायता नाम वैष्णवम् ॥ ४ ॥
एवम्भूतं द्विजन्तञ्च दृष्ट्वा दाक्षायणी तदा ।
प्रणनाम मुदा भक्त्या मुनीनां पश्यतामपि ॥ ५ ॥
विप्रश्च शिवरूपोऽसौ प्रणतां तां सतीं तदा ।
पाणिभ्यां भूमेरुत्थाप्य क्रोड़े कृत्वा खमुद्ययौ ॥ ६ ॥
ततो महानभूत्पूर्य्यां हाहाकारो द्विजोत्तम ।
सर्व्वे पश्यत चाकाशे शिवो याति सतीं हरन् ॥ ७ ॥
सर्व्वेऽपश्यंस्तथाकाशे सतीयुक्तं महेश्वरम् ।
वामेन बाहुनाक्रान्तं वामोरौ दक्षकन्यकाम् ॥ ८ ॥

---

१ D सुतिलकम् ।

कोटि-चन्द्र-समाभासं शिवं हैमच्छविं सतीम्।
सर्व्वमाकाशमावृत्य सतीशम्भू सुरोचिषौ ॥९॥
सर्व्वे वै ददृशुर्लोकाः प्राप्तवन्तोऽपि विस्मयम्।
दक्षस्तु ददृशे तौ च कोटि-सूर्य्य-सम-प्रभौ ॥१०॥
अनन्त-रूप-घटितौ विलसन्तौ द्विजोत्तम।
सर्व्वा एव स्त्रियो दक्षः सतीरूपा व्यलोकयत् ॥११॥
पुरुषानपि सर्व्वान् वै शिवरूपान् व्यलोकयत्।
यावत् खे मर्त्त्य-लोकानां चक्षुर्विषयतां स्थितौ ॥१२॥
एवं वृत्ते मुहूर्त्ते तु तौ चैवान्तर्हितौ[1] शिवौ।
दिव्यज्ञानञ्च दक्षस्य लुप्तमास्त[2] द्विजोत्तम ॥१३॥
दक्षस्तु दिव्यज्ञानं हि मूर्च्छामिव व्यतीत्य सः।
उवाच किं सती याता शिवं प्राणसमा सुता ॥१४॥
परावर्त्तय मे पुत्रीं शिवाभासात् सतीं किल।
हे वत्से सति हा पुत्रि क्व यातासि विहाय माम् ॥१५॥
अयोग्यं पतिमाप्तासि क्कतेन स्वेन कर्म्मणा।

शुक उवाच।

एवं विलपमानं तं दक्षनामप्रजापतिम्।
दधीचिः स्वयमागत्य तमुवाच प्रजापतिम् ॥१६॥

दधीचिरुवाच ॥

किं रोदिषि प्रजानाथ पण्डितो मूर्खतां गतः।

---

१ D तत्रैवा०। २ D सुप्तमास्त।

दृष्ट्वापि ते मतिर्नैव जाता किमिदमद्भुतम् ॥१७॥
आकाशे धरणौ तोये वृक्षादौ पशुपक्षिणः ।
सर्व्वस्त्रीलिङ्गपुंलिङ्गं नैच: शिवसतीमयम् ॥१८॥
शिवनिन्दाफलं यावन्न प्राप्स्यसि प्रजापते ।
तावन्न ज्ञास्यसि प्राय: सतीमपि शिवं तथा ॥१९॥
वञ्चितोऽसि विधात्रा त्वं यद्ब्रह्म परमं लसत् ।
उपेक्षसे समीपस्थं रङ्को रत्नमिवागतम् ॥२०॥
ममैव वच आकर्ण्य श्रेय:प्रेप्सुः प्रजापते ।
प्रकृतिं पुरुषं चापि हृदि ध्याय सतीशिवौ ॥२१॥

दक्ष उवाच ।

सत्यं वदसि मे कन्यां सतीं प्रकृतिरूपिणीम् ।
शिवं पुराणपुरुषं विष्णुं प्रभुमनामयम् ॥२२॥
त्वाञ्च सत्यकथं जाने तथापि परमार्थतः ।
महेशान्नापरो देव इति मे न मतिर्भवेत् ॥२३॥
ऋषय: सत्यवचस इति ज्ञानान्महेश्वरम् ।
शिवमेव ह्यसूयामि तस्य मूलं निबोध मे ॥२४॥
ब्रह्मण: क्रोधसम्भूता रुद्रा एकादशैव तु ।
ब्रह्म-सृष्टि-विलोपाय संसृजुस्ते प्रजास्तथा ॥२५॥
तथा दृष्ट्वा विधीरुद्रांस्तथाभूतान् समन्ततः ।
आज्ञया शमयामास माञ्चापि जगदे वचः ॥२६॥
दक्ष रुद्रानिमान् पुत्र वशे रक्ष ममाज्ञया ।
यथामी लोपकर्म्माणः प्रश्रयं यान्ति नैव हि ।

इत्येवं ब्रह्मवचनाद्रुद्रा एते वशे मम ॥२७॥
वर्त्तन्ते ब्रह्मणा सृष्टा एकादश महत्तराः ।
यस्यैते भीमकर्म्माणो रुद्रा अंशावतारकाः ॥२८॥
ममाज्ञामनुवर्त्तन्ते तस्मै देया कथं सुता ।
सत्पात्रे हि कृतं दानं[1] कुलकीर्त्तिकरं भवेत् ॥२९॥
अतः सत्कुलभूताय दद्यात् दुहितरं कृती ।
अहं सत्या अभिप्रायं मत्वा सत्याः स्वयम्बरे ॥३०॥
शिवं नाहूतवान्रुद्रं रुद्राणामीश्वरं मुने ।
शृणु मे या मतिर्जाता स्वाभिप्रायं निवेदये ॥३१॥
यावदेते महारुद्राः प्रभो मम वशे स्थिताः ।
न मामतिक्रमिष्यन्ति तावद्द्वेषः शिवे मम ॥३२॥
यदा तु मामतिक्रम्य तस्मिन्देवे महेश्वरे ।
मिलितास्ते भविष्यन्ति तदा पूजा शिवे मम ॥३३॥

शुक उवाच ।

एवमुक्त्वा दधीचिञ्च प्रणम्य स प्रजापतिः ।
प्रायात् गृहं मुनिश्चापि तथेत्युक्त्वा निजाश्रमम् ।३४॥

इति श्रीबृहद्धर्म्मपुराणे मध्यखण्डे रुद्रद्वेषनिवेदनं पञ्चत्रिंशत्तमोऽध्यायः ।

---

१ B विहितदानम् ।

## षट्त्रिंशत्तमोऽध्यायः ।

शुक उवाच ॥

अथ सङ्गम्य देवर्षिर्दक्षं दक्षालयेऽब्रवीत् ।
चरन्ति किल लोकेषु उपकाराय साधवः ॥१॥

नारद उवाच ॥

अहो प्रजापते दक्ष त्वया शम्भुस्तु निन्द्यते ।
महेशस्तत्फलं दातुं चिकीर्षति तथा शृणु ॥२॥
शिवो भूतगणैः सार्द्धमागत्य त्वत्पुरान्तरम् ।
अस्थिभस्मादिनिक्षेपं कर्त्ता दुर्द्धर्षणः परः ॥३॥
इत्युक्त्वा स मुनिवरो ययौ विप्र विहायसा ।
दक्षोऽपि चिन्तयामास कर्त्तव्यं मन्त्रिभिः सह ॥४॥
प्रेत-भूमि-प्रियः शम्भुरागमिष्यति मे पुरम् ।
अहं पुण्य-क्रियारम्भं करिष्यामि सुरैः सह ॥५॥
इदं मम पुरं पुण्यं पुण्य-कर्म्म-विशेषितम् ।
नैवागमिष्यति तदा एष एवास्तु निर्णयः ॥६॥
इति निश्चित्य मनसा जैमिने स प्रजापतिः ।
यज्ञमारब्धवान् कर्त्तुं शिवद्वेषे मतिं दधत् ॥७॥
दक्षस्त्वाहूतवान् सर्व्वान् देवान् राक्षसकिन्नरान् ।
सिद्धान् यक्षांश्च गन्धर्व्वानप्सरःपितृचारणान् ॥८॥

मुनीन् बहुविधान् दैत्यान् नरानुरगसञ्चयान्।
सर्व्वानाहृतवान्दक्षो विना दाक्षायणीशिवौ ॥९॥
मया शिवस्तु नाहूतः सती नापि शिवप्रिया।
एवं ये नागमिष्यन्ति ते स्युर्भाग-बहिष्कृताः ॥१०॥
एवन्दक्षवचः श्रुत्वा भीता एव सुरादयः।
शिवशून्याञ्च समितिमागताः सर्व्व एव हि ॥११॥
यस्य विप्र महायज्ञे वासोऽन्नादेस्तु पर्व्वताः।
पयोघृतादिवस्तूनां नद्यो दीर्घाः प्रकल्पिताः ॥१२॥
अथात्र लिङ्ग कैलासे सती श्रुत्वा पितुर्म्मखम्।
गन्तुमिच्छुर्महादेवं पतिं विनयसंयुता ॥१३॥

सत्युवाच।

देवदेव महेशान लोकनाथ महामते।
प्रसीद शरणापन्न वाञ्छितार्थप्रपूरक ॥१४॥
त्वं सृष्टिकारको ब्रह्मा त्वं विष्णुः पालने रतः।
त्वं वै त्रिगुणमव्यक्तो व्यक्तं धरसि तामसः ॥१५॥
हरः संहर मे विश्वं सर्व्वं स्थावरजङ्गमम्।
ब्रह्माविष्णू परित्यज्य प्रकृतिस्त्वयि निश्चला ॥१६॥
त्वामाश्रयितुकामा सा परं यत्नं दधाति वै।
अतो मां देवदेवेश प्रसीद वरदेश्वर ॥१७॥

शिव उवाच॥

किमर्थं स्तौषि मां देवि तद्वदस्वाभिवाञ्छितम्।
किन्ते प्रियं करिष्यामि निग्रहानुग्रहावपि ॥१८॥

सत्युवाच ॥

भगवन् देवदेवेश त्रिलोचन महेश्वर ।
दक्षस्ते श्वशुरो यज्ञं करोति बहुसह्ययम् ॥१९॥
तत्रावाञ्च गमिष्यावो यदि देवानुमन्यसे ।
आवयोस्तत्र सम्मानं करिष्यति प्रजापतिः ॥२०॥

शिव उवाच ॥

मैवं सति प्रिये चिन्तां मनसापि समाचर ।
अनाहूतस्य गमनं मरणञ्च समं द्वयम् ॥२१॥
दक्षो विद्याकुलधनैर्गर्व्वितो मम हेलनम् ।
करोति पश्चिमा दिक् सा रविवारस्य मे सदा ॥२२॥
[श्वशुरस्य मम श्रीमान् ममापमानहेतवे ।
यज्ञमारब्धवान्देवि कथन्तद्गन्तुमिच्छसि ॥२३॥
जामाता श्वशुरस्थानेऽपेक्षते परमादरम् ।
विष्णुं जामातरं मत्वा श्वशुरोऽपि समाचरेत् ॥२४॥][1]
अनाहूतस्य दुर्वाक्यमसह्यकरणन्तथा ।
अदानमप्यवात्सल्यं जामातरि न चाचरेत् ॥२५॥
यद्यन्यथा चरेदेतत् श्वशुरो दुहितुः पतौ ।
तदा तस्य धर्महानिः क्रियाहानिश्च लक्ष्यते ॥२६॥
यस्मै प्रदीयते कन्या जामाता यदि तं प्रति ।
असदाचरणं भाति मृतः स्यात् श्वशुरस्तदा ॥२७॥

---

1 B omits the portion bracketted.

जामाता श्वशुरस्यापि प्रियं कुर्य्यात् सदैव हि।
अमानितो न गच्छेच्च जामाता श्वशुरालयम् ॥२८॥
रूपवृद्धिः प्रजावृद्धिः श्वशुरप्रीतितो भवेत्।
श्वशुरो दुहितुः पत्युर्गुरून् भ्रातॄंस्तथापरान्[1] ॥२९॥
सम्मान्यांस्त्वार्च्चयेच्छक्त्या ह्यन्यथा धर्म्मलोपकम्।
कन्यां सम्मानयेद्विद्वान् जामातृ-प्रिय-काम्यया ॥३०॥
कन्यापमानात् जामातुरपमानं विधीयते।
श्वशुरस्य तु पुत्राद्या देववद्भगिनीपतिम्।
चिन्तयेत् पूजयेच्चैव वयसेज्येष्ठो भवेद् यदि ॥३१॥
एवं शास्त्रमनादृत्य दक्षो मे श्वशुरः प्रिये।
जामातरं मां नाहूय सत्कर्म्माचरते[2] कथम् ॥३२॥
स्वेच्छयापि न मह्यं त्वां दत्तवान् स प्रजापतिः।
त्वयाहं स्वेच्छया लब्धो न ममाज्ञामतिक्रम।
भार्य्या पतिमतिक्रान्ता न क्वचित् सुखमाप्नुते ॥३३॥

सत्युवाच।

यदुक्तं तद्धि वै सत्यं प्रभो नैवात्र संशयः।
सुता कथञ्चरेद्धैर्य्यं श्रुत्वा पितृ-महोत्सवम् ॥३४॥
असंमान्याः समाहूता लप्स्यन्ते यत्र पूजनम्।
सम्मान्यस्तत्समाकर्ण्य कथं धैर्य्यं समाचरेत् ॥३५॥
अहं पुत्री पितुर्वाथ्यां किमाह्वानमपेक्षते।

---

१ B भ्रातॄंस्तथा। २ D सत्कर्म्म चरते।

अपेक्षते पिता मेऽपि ममागमनमीप्सितम् ॥ ३६ ॥
तस्मादहं गमिष्यामि कुरुष्वानुमतिं प्रभो ।
भविता मम सम्मानात्तव सम्मानमुत्तमम्[१] ॥ ३७ ॥
पिता मे यदि मूर्खोऽयं त्वाञ्च जानाति वै शिवम् ।
तत्राभिमानं कृत्वा किं निजभागमुपेक्षसे ॥ ३८ ॥
मूर्खाय तस्मै दक्षाय ज्ञानञ्च दातुमर्हसि ।
तस्मात्ते गमनं युक्तं महेश्वर ममापि च ॥ ३९ ॥

शिव उवाच ।

यत् त्वं वदसि तत्सर्व्वं पुरा मयावधारितम् ।
न तत्र गमनं युक्तं तवापि च ममापि च ॥ ४० ॥
स तु मां तु ह्यनादृत्य यज्ञमारब्धवान् सुरैः ।
लप्स्यते तत्फलं सर्व्वैर्मूर्खत्वञ्चापि हास्यति ॥ ४१ ॥
त्वन्तु गत्वा क्षतिं स्वीयां करिष्यसि विलक्ष्यते ।
त्वां दृष्ट्वैव स ते[२] तातो मम निन्दां करिष्यति ॥ ४२ ॥
तच्छ्रोष्यसि स्वकर्णाभ्यां दुःसहं ते भविष्यति ।
अतस्ते तत्र नो युक्तं गमनं दक्षपुत्त्रिके ।
सर्व्वार्थ ज्ञान-कुशला न मद्वाक्यमुपेक्षताम् ॥ ४३ ॥

सत्युवाच ।

यदुक्तं भवता देव तत्र नौ नोचितो गमः ।
आवाभ्यामन्दतस्तत्तु युक्तिं तत्र निबोध मे ॥ ४४ ॥

---

१ C omits this line. २ D सदा ।

यज्ञ-दान-तपो-होमास्त्वत्परा स्त्रिदशेश्वर।
त्वं वै देवाधिपो ह्यत्र सर्व्वयज्ञेश्वरोपि च ॥४५॥
आदृत्य वाप्यनादृत्य त्वामसौ कुरुते मखम्।
त्वमेव पूजितस्तत्र मया सह महेश्वर ॥४६॥
यथाहं तत्सुता देव त्वामनाहूतमप्यगाम्।
तथा तत्कृतयज्ञोसौ त्वामेव ह्युपपद्यते ॥४७॥
अतः परोक्ष-लभ्येऽर्थे गत्वा लभ्यत्वमाचर[१]।
किमाह्वानमनाह्वानं विशेषयसि ते उभे ॥४८॥
विशेषतस्त्वन्तु योगी [समः पूजापमानयोः।
किमाह्वानमनाह्वानं विशेषयसि ते उभे ॥४९॥
शिव उवाच ॥
आह्वानञ्चाप्यनाह्वानं न च योगी][२] विशेषयेत्।
किन्त्वत्र गमनेनैव प्रयोजनमिहास्ति वा ॥५०॥
न योगोपि विना कर्म न च कर्म विनोचितम्।
मान्यस्य पूजा ह्युचिता पूज्यो नापूजकं व्रजेत्।
अपूजकस्य पूजापि नैव पूजेति गण्यते ॥५१॥
यत्तु पूज्यमनादृत्य पूजामारभते जनः।
न सा पूजा हि फलदा विपत्कारणमेव सा ॥५२॥
प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः।
तस्मात्तत्र न ते युक्तं ममापि गमनं सति ॥५३॥

---

१ C omits this line. २ B omits the portion brocketted.

तत्र त्वयि गतायान्तु मन्निन्दां साधु दुःसहाम्।
श्रुत्वैव त्यक्ष्यसि प्राणान्वचोपि ममखः सखि ॥५४॥
अहन्तु गत्वा स्वां निन्दां श्रुत्वा लङ्घ्यामि दुर्मुखम्।
त्वं वै पितृवधात् प्रीता मयि नैव भविष्यसि ॥५५॥
अप्रीतिर्मरणञ्चोभे समे ते आवयोस्तदा।
भविष्यत इति ज्ञात्वा स्वयमेवोचितं कुरु ॥५६॥

सत्युवाच ॥

यदुक्तं भवता तत्र गत्वाहन्ते विगर्हणाम्।
श्रोष्यामि निजकर्णाभ्यां कथन्तन्मे भविष्यति ॥५७॥
पुरा स्वयम्बरस्थाने तुभ्यं सम्प्रार्थितं मया।
न क्के भवतु ते निन्दा मत्कर्णविषयः क्वचित् ॥५८॥
यदा मे कर्णविषयस्तव निन्दा भविष्यति।
तदा प्राणान् परित्यज्य प्राप्स्यामि त्वां भवान्तरे ॥५९॥
मयैतत्प्रार्थितं नाथ तत्र चावहितं तथा।
अधुना त्वं कथं तत्र नावधानं करिष्यसि।
तस्मात्त्वयैव त्यक्ताहं मरिष्यामि न चान्यथा ॥६०॥

शिव उवाच ॥

भवत्या वाञ्छितं यत्तु वाधियं तत्स्वयम्बरे।
मम निन्दाश्रुतौ देवि तच्च सम्पादितं मया ॥६१॥
अधुना तु त्वमेवेह मन्निन्दा-श्रुतिमेष्यथाः[१]।
यतो मन्निन्दक-गृहं गन्तुमिच्छसि लक्ष्यसे ॥६२॥

---

१. C मेष्यत।

तस्माद्वारिता देवि यथेच्छं कुरु सर्व्वथा।
अपकर्म्म स्वयं कुर्व्वन् परं दूषयते कुधीः ॥६३॥

ऋषिरुवाच ॥

इत्युक्ता सा तदा देवी सती दाक्षायणी द्विज।
स्तब्धाक्षा मौनमास्थाय सासूया शिवमैक्षत ॥६४॥
वीक्ष्यमाणा शिवेनैषा स्तब्धाक्षी चारु-रूपिणी।
भयानकैस्त्रिभिर्नेत्रैः शिवमेव व्यमोहयत् ॥६५॥
तां ददर्श महादेवः क्रोध-दीप्त-विलोचनां।
अग्नि-राशि-चयोद्गारि-तृतीय-नयनामपि ॥६६॥
अट्टहास-समुद्गारि-तदूर्द्ध-दन्त-पङ्क्तिकाम्।
मधुर-स्मित-भूषाढ्य-रक्ताधर-रदावलीम् ॥६७॥
खेदाक्त-निखिल-स्वाङ्गां कामालस-समस्ततनुम्।
एवं शिवेक्ष्यमाणा सा त्यक्ता हैमीं रुचिं सती ॥६८॥
बभूव तत्क्षणादेव ध्वान्ताञ्जन-चय-प्रभा।
लोमाञ्चित-समस्ताङ्गी पीनोन्नत-पयोधरा ॥६९॥
तीव्र-यौवन-मादेनागणयन्ती महेश्वरम्।
मुक्त-केशा विवस्त्रा च वीर-बाहु-चतुष्टयी ॥७०॥
देहभारेण तं शैलं कम्पयन्तीव सर्व्वतः।
एवं भूत्वा सती देवी श्यामा कमल-लोचना ॥७१॥
उत्तस्थौ सहसा चारु-विलसत्पाद-पङ्कजा।
तां तादृशाकृतिं वीक्ष्य शिवो धैर्य्यमपोह्य च।
पलायने मतिं चक्रे धावमानो विमुग्धवत् ॥७२॥

तं धावमानं गिरीशं दृष्ट्वा दाक्षायणी सती।
माभैर्म्माभैरिति गिरा मा पलायेत्युवाच सा।
तथाप्येनं पलायन्तं ह्यनिवृत्तं विलोक्य च ॥७३॥
दशमूर्त्तिर्ब्बभौ देवी दशदिक्षु शिवेच्छिता।
भयद्रुतो दिशं यां यां शिवः पश्यति जैमिने।
तस्यां तस्यां दक्षकन्यां सतीं पश्यति भीतितः[१]।
अप्राप्य शम्भुस्तु दिशं विभयां स पलायितुम् ॥७४॥
तत्रैवोवास नेत्राणि मुद्रयित्वा त्रिलोचनः।
पुनः सम्मील्य नेत्राणि ददर्श गिरिशः स्वयम् ॥७५॥
श्यामां ललित-सर्व्वाङ्गीं स्मित-शोभि-मुखाम्बुजाम्।
दक्षिणाभिमुखीं दिव्यां मुक्तकेशीं शुभस्तनीम् ॥७६॥
तां दृष्ट्वा रुचिरापाङ्गीं श्यामवर्णां हसन्मुखीम्।
सभीत इव तस्याग्रे कम्पमान-स्तदब्रवीत् ॥७७॥

शिव उवाच ॥

त्वं कासि चारुनयना श्यामवर्णा-त्वसत्तनुः।
सती दाक्षायणी वा मे क्व गता सहचारिणी ॥७८॥

सत्युवाच ॥

अहं दक्षसुता देवी कथमेवंमतिर्भवान्[२]।
वर्ण-मात्र-परावृत्तां किं मां लक्षयसेऽन्यथा ॥७९॥

---

१ C भीषितः। २ C कथमेव पतिर्भवान्।

शिव उवाच।

कथं त्वं श्याम-वर्णाभूः कथमाभूर्भय-प्रदा।
इमा वा तव देव्यः कास्तस्तासां कतमा वद ॥८०॥

सत्युवाच॥

अहन्तु प्रकृतिः सूक्ष्मा प्रसूत्यां दक्षतोऽभवम्।
लसत्कनक-गौराङ्गी लिप्सुस्त्वां पुरुषोत्तमम् ॥८१॥
यदा यूयं त्रयो जाता ब्रह्म-विष्णु-शिवा इति।
तदाहं शवरूपेण युष्माकं निकटं गता ॥८२॥
तत्र मां विकृताकारां पूर्व्वाभ्यां समुपेक्षिताम्।
गृहीतवान् भवानेव तेनाहं वशगा तव ॥८३॥
त्वं मे प्राणाः सुहृद्भर्त्ता पुरुषः प्रकृतिप्रियः।
त्वामेव लिप्सुर्दक्षस्य क्षेत्रे धृतवती वपुः ॥८४॥
तव निन्दाश्रुतौ काले वाधिर्य्यं यन्मयेप्सितम्।
तव त्यागलक्षणं तत् मया पूर्व्वं निरूपितम् ॥८५॥
यदि श्रोष्यामि ते निन्दां तदा त्यक्ष्याम्यहं तनुम्।
कथ्यते भवताप्येवं मन्निन्दा श्रोष्यते त्वया ॥८६॥
यत्र त्वया न गन्तव्यं तज्जाताहं न ते प्रिया।
अतएवं मया त्याज्यं देहश्चोभयथा शिव ॥८७॥
दक्षजेन शरीरेण नाहं ते निकटोचिता।
इति कृत्वा कियच्छेदं शरीरं विहितं मया ॥८८॥
इमास्तु देव्यो नव वै अहमेव विभूतितः।
तवानिष्टौ यज्ञदक्षौ नाशये यदि मन्यसे।

दक्ष-यज्ञ-विनाशाय सामर्थ्यं ते प्रदर्शितम् ॥८९॥

शिव उवाच ।

त्वं यदि प्रकृतिः सूक्ष्मा [भवश्चेत् पुरुषः परः ।
कथं मे वशगा भूता स्वतन्त्रा शक्तिरूपिणी ॥९०॥

सत्युवाच ॥

शृणु देव महादेव गुह्याद्गुह्यतरं परम् ।
आदिसृष्टेरुपाख्यानं ब्रह्मविष्ण्वाद्यगोचरम् ॥९१॥
या मूलप्रकृतिः सूक्ष्मा[1]] परमा निरुपाधिका ।
ब्रह्माण्ड-कोटि-कोटीनां मूलं मूलान्तवर्जिता ॥९२॥
सत्त्वंरजस्तम इति गुणास्तस्याः पृथक् पृथक् ।
अथ जातासि सूक्ष्मायाः स्वयम्भूता सनातनी ॥९३॥
सिसृक्षायाश्च जातायां त्रयस्ते प्रकृतेर्गुणाः ।
एकीभूता पुमान् जातश्चेतना-रहितः क्षणात् ॥९४॥
तं दृष्ट्वा पुरुषं जातं गुणत्रयमयं शिव ।
सिसृक्षां तत्र पुरुषो समक्रामयदिच्छया ॥९५॥
संक्रान्तायां सिसृक्षायां पुरुषे तत्र तादृशे ।
शक्तिमान् पुरुषो भूतस्त्रिविधश्च गुणैस्त्रिभिः ॥९६॥
ब्रह्मा विष्णुः शिवश्चापि रजःसत्त्वतमोमयाः ।
त्रीनेतान् पुरुषान् जातान् ददर्श परमा यदा ।
परमोपाधयो भूतास्तदा ते पुरुषास्त्रयः ॥९७॥
तथापि सृष्टिर्न भवेदिति ज्ञात्वा महेश्वरी ।

१ D omits the portion bracketted.

पुरुषांश्च द्विधा चक्रे जीवञ्च परमन्तथा ॥९८॥
जीवस्तु परमोपाधिं पुरुषं तं समैक्षितम्।
सदा पश्यन् याति तत्त्वं नैव सृष्टिस्तदाभवत् ॥९९॥
तदा सा मूलप्रकृतिरात्मानमकरोत् त्रिधा[1]।
माया विद्या च शक्ती द्वे परमा च[2] सनातनी ॥१००॥
मायाभूद्दशगा[3] पुंसः परमस्य यथावृतम्।
परमं नेक्षते जीवः पुरुषं पुरुषो यतः ॥१०१॥
महामाया मोहमयी सृष्टिरिष्टा[4] प्रवर्त्तते ॥१०२॥
ततस्त्रयाणां पुंसां च परमोपाधिशालिनां।
गुणेभ्य उपकाराय विद्याभूत् प्रकृतिर्हि सा ॥१०३॥
विद्यारूपा च प्रकृतिराकाशे तु निराकृतिः।
पुरुषान् भ्रमतः प्राह सृजावसंहरेति च ॥१०४॥
तदर्थं तपतपेत्युक्त्वा तत्रैवान्तरधीयत।
ते श्रुत्वा वचनं तस्या ब्रह्मा सत्त्वगुणाश्रयः ॥१०५॥
अप एव ससर्जादौ तत्र ते पुरुषोत्तमम्[5]।
तान् दृष्ट्वा तपसाविष्टान् देवी प्रकृतिरुत्तमा ॥१०६॥
को मां ग्रहीष्यतीत्येवं बभ्राम शवरूपिणी।
तत्रादिर्नाम ते ब्रह्मा मां दृष्ट्वा भयमाश्रितः ॥१०७॥
चतुर्दिक्षु चतुर्वक्त्रो बभूव तदनन्तरम्।
मध्यमोऽभूज्जले मग्नो मुद्रिताक्षो विचेतनः ॥१०८॥

१ B तथा। २ D सा। ३ B मायातद्दशगा। ४ B ०रेषा।
५ D तपउत्तमं।

ततः परं शिवं याता स तां जगाद सादरः।
स त्वं साहं त्वदग्रगा न त्यक्ता तादृशी यतः॥१०९॥
तत्राहं सृष्टिकर्त्तारं चक्रे ब्रह्माणमीश्वरम्।
विष्णुञ्च पालकं चक्रे शयानो यो जलेऽभवत्।
संहारकारकं त्वाञ्च शिवनामानमचरम्॥११०॥
विष्णुस्तु मध्यमो देवः सत्त्वरूपी विभुः प्रभुः।
मयेचितः सत्त्ववृत्त्या सर्व्वश्रेष्ठत्वमाप्तवान्॥१११॥
प्रेरकः सर्व्वभूतानामन्तर्यामी च कल्पितः॥११२॥
स चक्रे सात्त्विकीं सृष्टिं ब्रह्माण्डन्तु जलान्तरे।
ततश्चक्रे द्विधा ह्यण्डं भूरादि ह्यतलादि च॥११३॥
जलपूर्णार्द्धभागन्तदधोर्द्धं[1] ददृशे तमः।
तस्य नाभेरभूत् पद्मं तत्र ब्रह्मा ससर्ज च॥११४॥
जलादुत्थाप्य पुरुषं कलाषोड़शसंयुतम्।
सर्व्वावयवसम्पूर्णं स्रष्टुं समुपचक्रमे॥११५॥
इयञ्च राजसी सृष्टिः सृष्टा वै ब्रह्मणा तु या।
संक्षिप्ता सात्त्विकी सृष्टिर्व्विस्तृता राजसी मता॥११६॥
संहारकारिणी सृष्टिस्तामसी परिकीर्त्तिता।
सात्त्विकी सृष्टिकर्त्ता वै विष्णुरेव सनातनः॥११७॥
राजसी तामसी सृष्ट्योर्ब्रह्मैको राजसः पुमान्।
शेषे संहारकर्त्यर्थं शिवस्त्वं त्रिगुणात्मकः॥११८॥

---

१ C ब्रह्माण्डं मध्यमे तमः। A तदध्यशेतमसत्तमः, D °गन्तु दध्यर्द्धं ददृशे तमः।

सत्वं रजस्तम इति गुणाः सर्व्वे परस्परम् ।
सान्निध्यं कुर्व्वते तस्मात् नैकत्रैकस्य केवलः ॥ १ १ ९ ॥
प्राधान्येनैव सत्वादेः सात्विकत्वादिरुच्यते ।
अहं त्रिभिर्गुणैर्हीना विभामि सगुणेन वै ॥ १ २ ० ॥
तेन त्रिगुणकाम्यायै त्वामेव शिवमाश्रिता ।
ब्रह्मविष्णू चाश्रिताहं अंशेन अच ताडृशी ॥ १ २ १ ॥
त्वान्तु मुख्यतयाश्रित्य विहरामि विशेषतः ।
ब्रह्मसृष्टा वयं सर्व्वे सृष्टा इवानुमोदिताः ॥ १ २ २ ॥
अतोऽहं दक्षभार्य्यायां जाता नाम शरीरिणी ।
एवं लक्ष्मी-सरस्वत्यौ सावित्री च पुरो ययोः ॥ १ २ ३ ॥
प्रीतये वै अहं जाता तदर्थे दक्षकन्यका ।
मत्तोऽपि ह्यधिका सूक्ष्मा या मूलप्रकृतिर्हि सा ॥ १ २ ४ ॥
अथैता दश वै देव्यो मूर्त्तयो मम पश्य ताः ।
महाविद्या इमाः प्रोक्ता नामान्यासान्तु वर्णये ॥ १ २ ५ ॥
काली तारा महाविद्या षोड़शी भुवनेश्वरी ।
भैरवी छिन्नमस्ता च सुन्दरी वगलामुखी ।
धूमावती च मातङ्गी महाविद्या दशैव ताः ॥ १ २ ६ ॥

शिव उवाच ॥

प्रोक्तास्त्वया महाविद्याः कस्याः किं नाम कथ्यताम् ।
आसामुपासनाकारं कथय त्वं महेश्वरि[1] ॥ १ २ ७ ॥

---

१ A D ममेश्वरि ।

सत्युवाच ॥

एषा ते पुरतो या तु सा तु काली दिगम्बरी ।
यान्तरीक्षे श्यामवर्णा सा तारा कालरूपिणी ॥१२८॥
दक्षिणे च्छिन्नमस्तेयं वामे ते भुवनेश्वरी ।
वगलामुखी च पश्चात्ते वह्नौ धूमावती तव ॥१२९॥
सुन्दरी ते च नैरृत्यां वायौ मातङ्गनामिका ।
षोड़शी च तथैशान्यां अहं ते भैरवी तनौ ॥१३०॥
एताभिः खलु विद्याभिस्तव द्वेषकरं पशुम् ।
सयज्ञं पितरं दक्षं नाशयामि वदस्व चेत्[1] ॥१३१॥
एताः सर्व्वा महाविद्याः भजतां मोक्षदाः पराः ।
मारणोच्चाटन-क्षोभ-मोहन-द्रावणानि च ॥१३२॥
जृम्भन-स्तम्भ-संहारान् वाञ्छितार्थान् प्रकुर्व्वते ।
एतत्ते कथितं तत्त्वं यत्पृष्टाहं त्वया शिव ॥१३३॥
व्यामोहं मा कुरु स मे मनो धत्स्व महेश्वर ।
गोपनीयम्परश्चैतत् न प्रकाश्यं कदाचन ॥१३४॥
दिव्यज्ञानेन भगवन् पश्य मां जगदम्बिकाम् ।
ममाराधनशास्त्राणि करिष्यसि तथा स्वयम् ॥१३५॥
काली-तारादि-रूपाया मम मन्त्रान् महाफलान् ।
सर्वांश्च कपचान्येवं त्वं वदिष्यसि सर्व्वथा ॥१३६॥
अहं वै सर्व्वदेवानां रहस्या परमामला ।
मम वै मन्त्रतन्त्राणि सुरहस्यानि सर्व्वथा ॥१३७॥

---

१ D तत् ।

तेषां वक्ता च कर्त्ता च भवानेव भविष्यति।
आगमस्य भवान् कर्त्ता वेदकर्त्ता हरिः स्वयम् ॥१३८॥
आदावागमकर्तृत्वे भवान् वै विनियोजितः।
पश्चाद्वै वेदकर्तृत्वे हरिः सम्यङ्नियोजितः ॥१३९॥
आगमस्यैव वेदस्य द्वौ बाहू मम पुष्कलौ।
ताभ्यामेव धृतं सर्व्वं त्रैलोक्यं भूर्भुवादिकम् ॥१४०॥
यस्त्वागमञ्च वेदञ्च विलङ्घयति धूर्जटे।
सोऽधः पतति हस्ताभ्यां गलितो मे चिरं चिरम् ॥१४१॥
यस्त्वागमम्वा वेदम्वा विलङ्घ्यान्यतमं भजेत्।
तस्याहं विकलाङ्गाभ्यां[1] समुद्धर्तुमशक्तिका ॥१४२॥
द्वावेव शिवपन्थानौ दुरूहौ दुर्घटावपि।
दुर्ज्ञेयौ च सुदुष्पारौ भेदयेन्न कदाचन ॥१४३॥
सर्व्वेषामेव देवानां मन्त्रतन्त्रादिकृद्भवान्।
तन्त्रमन्त्रास्तु मे गोप्या वैष्णवाचारशालिभिः ॥१४४॥
तस्मान्मद्दीचकाः शम्भो भवेयुः शाक्तवैष्णवाः।
शक्तौ विष्णौ यस्य भक्तिः स शाक्तः स्यान्न चापरः ॥१४५॥
विष्णुभक्तिमनाश्रित्य कथं शाक्तीं विधिं चरेत्।
वैष्णवानान्तु मन्त्राणामहं दैवतमेव हि ॥१४६॥
तस्मान्ममोपासकः स्याद्विष्णुदीक्षाविधौ गुरुः।
शक्तेरदीक्षितो यस्तु शक्तिदीक्षां प्रवर्त्तयेत्।
तावुभौ याति तौ स्यातां कूपेन्धाविव दुर्मती ॥१४७॥

---

[1] A विकलाङ्गा स्या०।

एतद्वचो मे परमं ध्यायन् शम्भो त्रिलोचन।
अहं यामि दक्षयज्ञं पिता मे स प्रजापतिः॥१४८॥

शुक उवाच॥

इत्युक्त्वा सा महाकाली तारा गगनवासिनी।
एकरूपा बभूवैव देव-देवी त्रिलोचना॥१४९॥

शिव उवाच॥

त्वं देवी प्रकृतिः सूक्ष्मा पुंसामर्थे शरीरिणी।
मत्पत्नीत्वमनुप्राप्ता क्व त्वं क्वाहं पुमान् जड़ः॥१५०॥
त्वं यद्गमिष्यसि शिवे दक्षस्य निलयं स्वयं।
का मे शक्तिस्तन्निषेधे निषेधशेषरूपिणी[1]॥१५१॥
यन्मया कथितं तुभ्यं प्रभुत्वाभिमतेन वै।
तत् क्षन्तव्यं महेशानि यथारुचि तथा कुरु॥१५२॥

शुक उवाच॥

श्रुत्वैवं दक्षकन्या शिववचनमथो मुक्तकेशी सुवेशी
काली कालाम्बुदाभा गगनपथगतिर्व्याक्षदण्डैश्चतुर्भिः।
धावन्ती वेगयुक्ता पवनविचलितव्याघ्रचर्म्मोरुभागा
पीनोत्तुङ्गस्तनाढ्या भयदतरमुखी दीप्त-नेत्र-त्रयाभृत्॥१५३॥

इति श्रीबृहद्धर्मपुराणे मध्यखण्डे षट्त्रिंशोऽध्यायः।

---

१ A ०णी D ०णि।

## सप्तत्रिंशोऽध्यायः ।

शुक उवाच ॥

ततः सती समागत्य दक्षस्य निलयं पितुः ।
सती समागतेत्येवं वाचालमकरोत्समम् ॥ १ ॥
सर्व्वे सर्व्वाणि सन्त्यज्य कर्म्माण्याबालवृद्धकाः ।
सतीं द्रष्टुं समायाताः श्यामीभूतलसत्तनुम् ।
विवेशान्तःपुरं देवी यत्र माता प्रसूरिति ॥ २ ॥
प्रसूर्विलोक्य तां पुत्रीं क्रोड़े कृत्वा चिरागताम् ।
रुरोद वत्से वत्सेति सिञ्चन्ती नेत्रजैर्जलैः ॥ ३ ॥
वत्से प्राप्तासि देवेशं शिवं स्वामिनमुत्तमम् ।
अशोच्यासि गतास्यस्मान् शोच्यान् कृत्वा शुचिस्मिते ॥ ४ ॥
चिरेणाधिगतः शोको दूरीभूतोऽद्य सर्व्वथा ।
पिता तव सुदुर्बुद्धिः शिवद्वेषकरः सदा ॥ ५ ॥
अनाहूय शिवं त्वाञ्च करोति यज्ञमुत्तमम् ।
अद्य स्वप्ने मया दृष्टं तत्समाकर्णतां सुते ॥ ६ ॥
प्रजापतिः स्कन्धहीनो मूत्रकुण्डतटे स्थितः ।
राक्षस्यो विकृताकाराः खादितुं तं समुद्यताः ॥ ७ ॥
नृत्यन्ति च हसन्त्यन्याः पिबन्त्यन्याश्च शोणितम् ।
कृत्वा दक्षशिरश्चान्याः कन्दुकं विहरन्ति च ॥ ८ ॥
भूताः प्रेताः पिशाचाश्च कुश्माण्डकटपूतनाः ।

दक्षं प्रदक्षिणीकृत्य नृत्यन्ति च हसन्ति च ॥९॥
दृष्टैवन्तु वयं सर्व्वे दक्षस्य नगरस्थिताः।
व्याकुला रोदमानाश्च निर्वृतिं न लभामहे ॥१०॥
तदनन्तरमेवाथ दृष्टा काचिन्महेश्वरी।
महामेघप्रभा श्यामा यौवनाभरणोज्ज्वला ॥११॥
सूर्य्यकोटिच्छविर्देवी साट्टहासा दिगम्बरी।
त्रिनेत्रा चारुविलसद्दोश्चतुष्का महारवा ॥१२॥
तामागतां समालोक्य सर्व्वे ते राक्षसादयः।
दूरं विदुद्रुवुर्भीतास्तार्क्ष्यत्रस्ता इवाहयः ॥१३॥
तत् दृष्टा मत्पुरस्थायी रुद्र एकादशो ययौ।
पप्रच्छ कासि कस्यासि[1] किमर्थमिह चागता ॥१४॥
तं रुद्रं सा जगादेवं सती दाक्षायणी ह्यहम्।
पित्रा बद्धं महायज्ञं राक्षसाद्याः प्रभञ्जते ॥१५॥
पिता मे छिन्नमस्तोऽभूदप्येवमिति दर्शनात्।
व्यग्रा वयं समागत्य सर्व्वारिष्टानि मत्पितुः ॥१६॥
त्वन्तु कः परमो ह्युग्रः सदने भीमरूपवान्।
ततस्तामाह रुद्रोऽसौ रुद्रोऽहं दक्षकन्यके ॥१७॥
अन्यैश्च दशभिः सार्द्धं वसामि दक्षपत्तने।
त्वं पुनर्दक्षकन्या चेद्दक्षं जीवय जीवय ॥१८॥
इत्युक्ता तेन सा देवी तेन रुद्रेण तत्क्षणात्।
पतिं शिवं समानाय्य दक्षञ्च समजीवयत् ॥१९॥

---

१ D कन्यासि।

दक्षस्यच्छागमुखं लब्ध्वा शिवं तुष्टाव हर्षितः ।
दूरीभूता कुबुद्धिश्च साक्षात् शिवसतीपदे ॥२०॥
तदा सर्वे समायाता देवाः सेन्द्रा विधिस्तथा ।
विष्णुश्च परमोदारः क्रतुसम्पूरणं दधुः ॥२१॥
एवं स्वप्ने मया दृष्टं गतरात्रौ सुते सति ।
सैव त्वं श्यामवर्णाद्य समायातासि मेऽन्तिकम् ॥२२॥
भवितव्यं मया दृष्टं दक्षस्य शिवनिन्दिनः ।
शिवनिन्दाफलं प्राप्य दक्षो वां ज्ञास्यति ध्रुवम् ॥२३॥
वत्से जीव चिरं नाहं त्यक्तव्या च त्वया क्वचित् ।
त्वं यस्य स ह्यशोच्यः स्यात् त्वं यस्य स हि सार्थकः ॥२४॥

सत्युवाच ॥

मातरेवं यथोक्तन्ते मामनुज्ञातुमर्हसि ।
पितरं द्रष्टुमिच्छामि यज्ञशालागतं[1] प्रसूः ॥२५॥
इत्युक्त्वा मातरं नत्वा प्राप्य सम्मानमुत्तमम् ।
आगत्य ददृशे दक्षं भगीभिः सह चारुभिः ॥२६॥
स्वाहा वषट् च वौषट् च मन्त्रानुच्चरतां गणैः ।
अर्ध्वर्य्यूद्गातृहोत्राद्यैर्युक्तो यज्ञस्थले स्थितम् ।
शिवद्वेषोद्भवं हर्षं ख्यापयन्तं पुनः पुनः ॥२७॥
अथ दक्षो ददर्शैनां कालीं कमललोचनाम् ।
भगीगणस्य मध्यस्थां ताराणां रोहिणीमिव ॥२८॥

---

१ D यज्ञशालां गतं ।

दक्ष उवाच ॥

का त्वं कस्य सुता काली लक्ष्यसे त्वं सतीव मे ।
किंवा शिवात्समायाता सुता मम सतीत्यसि ॥१९॥

सत्युवाच ॥

किं पितः स्वां सुतां प्रेष्ठां मां न लक्षयसे सतीम् ।
प्रजापतिस्त्वं दक्षोऽसि पितरं त्वां नतास्म्यहम् ॥२०॥

दक्ष उवाच ॥

हा सुते प्राणप्रतिमे सति वत्से सुलोचने ।
श्यामीभूतासि भूतानामधिपं पतिमीहिता ॥२१॥
जानाम्यहं तस्य रुद्रं त्वं यस्य तु समीपगा ।
[१][लसत्कनकगौराङ्गी श्यामरूपमुपाश्रिता ॥२२॥
एवं तस्य चरित्रं वै रुद्रस्य दुष्टशीलिनः ।
तद्दोषादेव हे वत्से नाहूता त्वञ्च मत्सुता ॥२३॥
इतः परं न गन्तव्यं त्वया तत्र शिवान्तिके ।
कन्या हि स्वामिना भग्ना पितुर्गेहे समर्हति ॥२४॥
तस्मात्त्वमत्र मे तिष्ठ पुनर्मा याहि तं शिवम्] ।
लसत्कनकगौराङ्गी येन श्यामा कृता सती ॥२५॥

शुक उवाच ॥

इत्येवं सा समाकर्ण्य पितुर्वाक्यं सती सती ।
रुषा प्रस्फुरितापाङ्गी सती पितरमब्रवीत् ॥२६॥

---

१ D omits the portion braketted.

सत्युवाच।

वाचं नियच्छ हे दक्ष यदि कल्याणमिच्छसि।
शिवनिन्दाकरीं जिह्वां छिन्धि धर्म्माभिलिप्सया॥३७॥
शिव आत्मा च भूतानां प्रभुरव्ययमावयोः।
निन्दा च घातनं तस्य नात्मघातित्वमाप्नुहि॥३८॥
सभा तव महामूर्खा दण्डार्हा शिवनिन्दिनी।
शिवनिन्दाफलं सम्यक् प्राप्स्यत्येव न संशयः॥३९॥

दक्ष उवाच॥

बालिके स्वल्पमतिके निजबुद्ध्या समर्जितम्।
तमेव हि पतिं नीत्वा स्वयोग्यं सुखमाप्नुहि॥४०॥
अस्माकमिह तस्यैतां कथं कीर्त्तिं तनोषि वा।
वयं तं खलु जानीमो यथा स पूज्यतायुतः॥४१॥
अहं प्रजापतिर्दक्षो देवदेवेषु गोचरः।
किं ममाग्रे तत्प्रशंसां करोषि मम दुःसहाम्॥
स तुभ्यं रोचते साधुर्नान्येभ्य इति मन्यताम्॥४२॥

सत्युवाच॥

वाचं नियच्छ हे दक्ष पुनस्त्वां प्रब्रवीम्यहम्।
नियन्ता चेन्न विद्येत न कश्चिद्धर्ममाचरेत्॥४३॥
त्यज पापमतिं दक्ष शृणु मद्वचनं हितम्।
प्रणमस्व महारुद्रं देवं दाक्षायणीपतिम्॥४४॥
सुताया अपि मे वाक्यं गृहाणाज्ञभुवस्तव।
कनिष्ठस्य च सद्वाक्यं गृह्णन्ति खलु साधवः॥

स एव खलु साधुः स्यात् सदसज्ज्ञानवान् हि यः ॥ ४५॥
त्वं तु पापमतिर्दक्षः साधुत्वरहितः परः ।
यावज्जन्म शिवद्वेषं कृत्वा फलमवाप्स्यसि ॥
मा यापय वृथा कालं निन्दयित्वा महेश्वरम् ॥ ४६॥
सर्वैः स वन्दितः शम्भुः [भवता निन्द्यते कथम्[१] ।
सर्वैः सम्पूजितः शम्भुः] त्वया कस्मान्न पूज्यते ॥ ४७॥

दक्ष उवाच ॥

अहो सभ्या अमुष्याः किं प्रलापः श्रूयते न वा ।
प्रजापतिं मां पितरं पुत्री यद्वदतीदृशं ॥ ४८॥
एनां वाक्यैः शान्तयत स्थलात् दूरयतापि वा ।
इमां शिवां शिवगतां शिववक्ये सुदुःसहाम् ॥ ४९॥
रे दुश्चरित्रे शिवगे चक्षुषोर्मे वह्निभव ।
यदा शिवं पतिं प्राप्ता तदैव त्वं मृता मम ॥ ५०॥
पुनः पुनः स्मारयसि रुद्रं नाम निजं पतिम् ।
तुषानल इवान्तःस्थो वह्निर्मे येन वर्द्धते ॥ ५१॥
एवञ्च नैव जानीषे कुलजे मम कन्यके ।
रुद्राय दत्तां त्वां दृष्ट्वा कथं जीवेत्प्रजापतिः ॥ ५२॥
सन्ति मे बहवो रुद्राः शूलहस्ताः कपर्द्दिनः ।
एकादशस्थानगता नाहं वेद्मि महेश्वरम् ॥ ५३॥
एकादशानां रुद्राणामृते ह्यन्यतमं सुते ।
कं शिवाख्यं महारुद्रं पतिं प्राप्तासि दुर्म्मते ॥ ५४॥

---

१ B omits the portion braketted.

सत्युवाच ॥

धर्म्म एव पिता माता गुरुर्बन्धुः पितामहः।
पत्नी भ्राता सुतः सर्व्वं धर्म एव न चान्यथा ॥५५॥
त्वञ्चाधर्ममतिः कस्मात् पिता भवितुमिच्छसि।
अहं धर्ममतिर्भूत्वा तत्सुता स्यां कथं वद ॥५६॥
या ते भवति पुत्री त्वं तां रचाद्याहमन्यथा।
अहन्तु शिवमेवाप्ता भगवन्तं त्रिलोचनम् ॥५७॥
स मे भर्त्ता महादेवः शान्तो बन्धुः कृपाकरः।
अद्वेषी सर्वभूतात्मा कूटस्थो जगदीश्वरः ॥५८॥
त्वन्तु मूर्खतया तं वै सदा द्वेषयसे किल।
शिवेति द्व्यचरं नाम यस्यामङ्गलनाशकम् ॥५९॥
केवलस्मरणेनैव पापराशीन्निवारयेत्।
यस्य वै नाम्न एतादृक् त्रैलोक्ये ह्युपकारिता ॥
किं तस्य साचाद्भजतामुपकारित्वमुच्यते ॥६०॥
शिवभक्तिसुखं तुभ्यं विधात्रा नैव दीयते।
वञ्चितोऽसि विधात्रा त्वं किं करिष्यसि चावशः ॥६१॥
शिवद्वेषफलं साचात् किं त्वदा नानुभूयते।
शिवशून्यः शिवद्वेषी निष्कल्याणः समार्थकाः ॥६२॥
तस्मात् सर्वप्रयत्नेन भज रुद्रं महेश्वरम्।
अधुनाप्युपकाराय वदाम्येतत् प्रजापते ॥
शिवं स्तवय हे दच नान्यथा मद्वचः कुरु ॥६३॥

दक्ष उवाच।

मुखे मे स्तवशब्दोऽयमन्यथैव शिवार्थतः।
पुनः पुनः कथं ब्रूषे सर्वा भिन्नरुचिर्जनः॥६४॥
त्वञ्च मे चक्षुषोर्बाह्या भव शीघ्रं दुरात्मिके।
त्वद्दर्शनान्मनोदुःखं दावाग्निरिव वर्द्धते॥६५॥

सत्युवाच।

रे मूर्ख अधमाचार शिवशून्य यथोचितम्।
फलं प्राप्नुहि यच्चोक्तं स्तवशब्दोऽन्यथा मुखे।
तदप्यस्तु मुखं तेऽस्तु यथावस्तमुखं तथा॥६६॥
शब्दस्य छागवत्तेऽस्तु यथान्यच्छिवनिन्दनम्।
तन्मुखादपि शृण्वन्ति न केऽपि क्वचिदप्युत॥६७॥
अहञ्च ते दृशोर्बाह्या भविष्यामि न केवलम्।
त्वज्जातदेहबाह्यापि भविष्याम्यचिरादिह॥६८॥

शुक उवाच।

इत्येवमुक्तस्तु तदा प्रजापति-
श्छागाननश्छागरवश्च जैमिने।
सर्वे च देवा मुनयस्तपोधनाः
प्राप्ताः परं विस्मयमेव सर्वतः॥६९॥
तदा चकम्पे समितिः सवासवा
यदा चचालेव सती ततः स्थलात्।
काली चलन्ती किल कम्पयन्ती
धरां ससप्तामिव दुर्निवारिता॥७०॥

दुष्प्रेक्षणीया भ्रुकुटीमुखोल्बना
संस्तम्भयन्ती च वचोऽखिलानां।
न केऽपि शक्ता वचनस्य वक्तुं
निवारणायेति गलद्धियो जनाः ॥७१॥
हाहेति चाव्यक्तरवास्तु सर्वतः
सतीमदृष्ट्वा चरतां बभूवुः।
दक्षः समुत्थाय सतीति वक्तुं
छागध्वनिं तत्र दधच्चचार ॥७२॥
सर्वे धरण्यां गगने दिशासु
विदिक्षु लोकाः परितो विचेरुः।
सतीसतीत्येव वचः समाकुलाः
क्वास्ते सती का च सतीति वादिनः ॥७३॥
सती तु गत्वा नगराजसन्निधौ
महावने क्वापि सुदुर्गमे मुने।
त्यक्त्वा वपुर्दक्षभवं शिवप्रिया
द्विधा भवन्ती प्रययौ हिमालयम् ॥७४॥
दक्षालये तु प्रगते मुहूर्त्ते
सुस्था बभूवुर्निखिला जनौघाः।
दक्षं लसच्छागमुखं श्रयित्वा
भूयोऽभवन् यज्ञविधौ प्रवृत्ताः ॥७५॥
कर्तुं प्रवृत्ता अपि ते तदा मखं
न चालभन्तैव सुखं तदानीम्।

प्रजापतिर्वै स्वयमेव यत्र
च्छागाननश्च्छागरवं प्रकुर्वन्॥७६॥
केचिद्धसन्तोऽनुतपन्त एके
केचिद्रुदन्तोऽनुपठन्त एके।
केचिज्जगुः किं किल कन्यकैषा
दक्षस्य पुत्र्यद्भुतशक्तिरेका॥७७॥
केचिज्जगुः शम्भुगुणापलाप-
फलं प्रकाशं समगादिहैव।
केचिज्जगुः क्काय ययौ सती वा
केचिज्जगुः शम्भुमगात् सती सा॥७८॥
अन्तःपुरस्था च तदा प्रसूतिः
सतीप्रसूर्ज्ञानवती विमोहा।
सती तु मूलप्रकृतिः पराख्या
पुत्रीति मिथ्यामतिरेवमेव॥७९॥

इति श्रीबृहद्धर्मपुराणे मध्यखण्डे सतीदेहोत्सर्गो नाम सप्तत्रिंशोऽध्यायः।

# अथाष्टत्रिंशत्तमोऽध्यायः ।

शुक उवाच ॥

ब्रह्मणा प्रेषितो देवो नारदो मुनिपुङ्गवः ।
सतीदेहपरित्यागं शम्भुमागत्य चाब्रवीत् ॥ १ ॥
देवदेव महादेव त्रिलोचन नमोऽस्तु ते ।
दक्षयज्ञगता देवी सती देहं जहौ प्रभो ॥ २ ॥
दक्षो निनिन्द बहुधा तत्समाकर्ण्य सा सती ।
दक्षं शप्त्वा रुषाविष्टा जहौ देहं मनोहरा ॥ ३ ॥
दक्षश्छागमुखो भूत्वा छागशब्देन वै रुदन् ।
सती सतीति व्याक्षिप्य पुनर्यज्ञे मनो दधौ ॥ ४ ॥
एवं श्रुत्वा महादेवो नारदस्य मुखाद्वचः ।
रुदित्वा बहुधा शोकान्नारदं समभाषत ॥ ५ ॥

शिव उवाच ॥

वत्स नारद कार्य्यं मे वद यत्तत्र युज्यते ।
तत्याजैव सती देहं माञ्च व्याकुलचेतसं ॥ ६ ॥

नारद उवाच ॥

सतीं प्राप्स्यसि मा चिन्तां कुरु देव महेश्वर ।
सती तवैव सततं त्वञ्च सत्याः सदा प्रियः ॥ ७ ॥
व्रज प्रजापतेर्वाटीं यत्र देहं सती जहौ ।

जानीहि चरितं तस्य दक्षस्य च प्रजापतेः ॥ ८ ॥
किं विधत्ते किमाचष्टे किंवा छागाननस्मरेत्।
सत्यास्य मरणं सत्यं किंवा छलकृतं तथा।
भवता तदपि ज्ञेयं तत्र गत्वा न संशयः ॥ ९ ॥
भूत्वा छागाननो दक्षो यदि त्वां निन्दयेत् पुनः।
तदा यज्ञञ्च दक्षञ्च नाशयिष्यसि सर्व्वथा ॥१०॥
ये तस्य भवने सन्ति रुद्रा एकादशैव हि।
तेषामन्यतमो भूत्वा गच्छ तत्र महेश्वर ॥११॥

शिव उवाच ॥

एवमेवं प्रजाम्येव दक्षस्य निलयं त्वरा।
त्वञ्च. गच्छ यथा वाञ्छा[1] ब्रह्मपुत्त्र मुनीश्वर ॥१२॥

शुक उवाच ॥

एवं निश्चित्य मनसा देवदेवो महेश्वरः।
बभूव भीषणाकारो महारुद्रो महातनुः ॥१३॥
व्रजन् पदे पदे रुद्रो मूर्त्तिवैलक्षणं चरन्[2]।
ताम्रवर्णजटाजूटो धूर्जटिः सम्बभूव ह ॥१४॥
दीर्घे ललाटफलके भस्मलेपो व्यराजत[3]।
तुषाराभ्यन्तर इव चन्द्रखण्डविभूषणम् ॥१५॥
मुहुर्मुहुः श्वसन् घोरं हसन्नट्टाट्टमेव च।
मुण्डमालाविभूषाङ्गो नागयज्ञोपवीतवान् ॥१६॥
कालदण्डं दधत् स्कन्धे धृत्वा वामेन पाणिना।

---

१ B यथावाञ्छो। २ B चरेत्। ३ C व्यरोचत।

कपालं दक्षिणे हस्ते भिक्षापात्रं दधत्तथा ॥१७॥
गजाजिनं परिदधन्नागबद्धं स्वबद्रसं।
दीर्घजानुर्दीर्घजङ्घो महागुल्फो महापदः ॥१८॥
जगाम दक्षनिलयं कम्पयन्निव मेदिनीम्।
तं दृष्ट्वा दारुणाकारं भीताः सर्व्वे विदुद्रुवुः ॥१९॥
दक्षशालावहिः स्थित्वा ररावोच्चैस्तरां[1] मुने।
अहो दक्ष अहो दक्ष भिक्षां मे देहि भिक्षवे ॥२०॥
शब्दमेतं महाघोरं ते कुम्बाभ्यन्तरस्थिताः[2]।
श्रुत्वा हृदयदौर्बल्यं प्रापुः कर्म्मसु शैथिलाः ॥२१॥
दक्षस्त्वागरवं क्कत्वा सङ्केतेनाववोधयन्।
प्रेषयामास वै कञ्चिद्देवं भिक्षुबुभुत्सया ॥२२॥
दक्षेण प्रेषितो देवः कुम्बाया वहिरागतः।
ददर्श भीषणाकारं पप्रच्छ भयदर्पवान् ॥२३॥
कस्त्वं किं याचसे भिक्षो दर्पिष्ठो दृश्यते भवान्।
नैतादृशं भिक्षुरूपं भिक्षुका विनयान्विताः ॥२४॥

रुद्र उवाच ॥

अहन्तु खलु भिक्षार्थी रुद्राख्यो नात्र संशयः।
स्वभावेनैव भीमोऽहं सतीं याचे समागताम् ॥२५॥
त्वं दातुं शंक्यसे मह्यं सतीं चारुसुलोचनाम्।
न चेत् को दास्यते मह्यं सतीं तद्वद भो त्वरा ॥२६॥

---

१ C रुरोदोच्चैस्तरां। D उवाचोच्चैस्तरां, B ह्युवाच।
२ B भेदम्भाभ्यन्तरस्थिता।

व्याघूर्णनयनेनैव मुक्तः स तं तदाब्रवीत् ।
दक्षोऽस्ति यज्ञशालायां तं गत्वा भिक्ष्यतां सती ॥२७॥
इत्युक्त्वा तं महारुद्रं स्थापयित्वा गतस्तु सः ।
यज्ञशालां महारुद्रः प्रविवेशाकुतोभयः ॥२८॥
तं दृष्ट्वा तु महारुद्रं दक्षः क्रुद्धः स्फुरन्मुखः ।
अयं रुद्रः सतीचोरः इति व्याक्षिप्तवान् बहु ।
वार्य्यतां वार्य्यतामेष रुद्रो दाक्षायणीपतिः ।
मलीमसीकृतं येन कुलं मे विमलं पुरा ॥२९॥

रुद्र उवाच ॥

किं रे वदसि छागास्य च्छागशब्दास्फुटं वचः ।
सती मे दीयतां मह्यं श्यामा परमसुन्दरी ॥३०॥
न चेत् सह त्वां यज्ञेन नाशयामि प्रपश्यताम् ।
इत्युक्त्वा घूर्णयामास त्रीणि नेत्राणि चैकदा ॥३१॥
तं दृष्ट्वा दुद्रुवुः सर्व्वे देवर्षिनरकिन्नराः ।
शम्भुश्च तान् समाक्रम्य हस्ताभ्यामवलीलया ।
तस्थौ पश्यन् दृशा दक्षं सर्व्वेषां केशकर्षणः ॥३२॥
रुद्रहस्तगतैः केशैस्ते देवर्षिनरादयः ।
स्थिता दक्षस्तु तान्रुद्रानाह्वयामास शब्दयन् ॥३३॥
दक्षच्छागरवाह्वानात् त्वरावन्तोऽकुतोभयाः ।
रुद्रा एकादशैवेत्य ददृशूरुद्रमीश्वरम् ॥३४॥
तेषामेव ह्यन्यतमं दृष्ट्वा स्मेराननाम्बुजम् ।
सह दक्षादिभिश्चापि कुर्व्वन्तं कलहं परम् ॥३५॥

अभिन्नमतयो भूताः सङ्ख्ययैकादशापि च।
यदा ते मिलिताः सर्व्वे रुद्रा एकादशैव तु।
तदा प्रजापतिं प्रोचे महारुद्रः शिवाख्यकः ॥ ३६ ॥

महारुद्र उवाच ॥

किं विवक्षसि मे दक्ष सतीं दास्यसि वा न वा।
मृत्युं वा जीवनं वापि वाञ्छसे तद्वदस्व मे ॥ ३७ ॥
एवं श्रुत्वा तदा दक्षो मानुषीं गिरमास्थवान्।
उवाच रुषितो वाचं महारुद्रं महेश्वरम् ॥ ३८ ॥

दक्ष उवाच ॥

सती मम सुता पूर्व्वं तुभ्यं दत्तैव मे न वै।
अधुना ते कथं दास्ये रुद्रनाम्ने शिवाधम[१] ॥ ३९ ॥
अधुनेह समागम्य मृतामेव जहौ तनुम्।
तामन्वेषय कुत्रापि प्रेता प्रेतस्थलप्रिय ॥ ४० ॥
नैतत्स्थानं प्रेतभूमिर्नाहं प्रेताधिपोऽपि च।
अनाहूतो भवान् कस्मान्मरणायेह चागतः ॥
इतो निःसर मे यज्ञे न वृथा विघ्नमाचर ॥ ४१ ॥

शुक उवाच ॥

एवं प्रोक्तः स दक्षेण देवो रुद्रः सनातनः।
वीरभद्र इति ख्यातिं ययौ रुद्रेषु तेषु वै ॥ ४२ ॥

---

१ C has an additional verse after 39.
स्वेच्छया त्वां सती प्राप्ता तदैव सा मृता मम।
अधुनेह समागम्य मृतामेव जहौ तनुम् ॥

एकादशैव ते रुद्राः निःश्वसन्तो मुहुर्मुहुः ।
बहूनुत्पादयामासुर्व्वीरान् रुद्रसमान् मुने ॥ ४ ३ ॥
तांस्तु वीरान् समुत्पन्नान् किं करोमीति वादिनः ।
छिन्धि भिन्धीति चाज्ञप्तास्तथा चक्रुः सुदुर्म्मदाः ॥ ४ ४ ॥
यज्ञकुण्डं तदा चक्रे मूत्रपूर्णं ततः चणात् ।
केशेनाकृष्य दचस्य पीड़यामास चित्रधा ॥ ४ ५ ॥
देवाः सर्व्वे विभिन्नाङ्गाः प्राणमात्रावशेषिताः ।
प्राणापचयभीतास्त्र महामर्द्दं व्यलोकयन् ॥ ४ ६ ॥
केचित् चताक्ता घोरान् वै शब्दं शुश्रुवुरुत्थितान् ।
केचिच्च ददृशुश्चापि महाघोरं विमर्द्दनम् ॥ ४ ७ ॥
ब्राह्मणास्तु समाक्रान्ता म्लानवक्त्राः कृतागसः ।
वयं विप्रा वयं विप्रा इति त्यक्ताः पलायिताः ॥ ४ ८ ॥
वीरभद्रः स्वयं देवो महारुद्रः प्रतापवान् ।
चकर्त्त दचमूर्द्धानं गिरेः शृङ्गमिवौजसा ॥ ४ ९ ॥
पूषा [च[1] भग्नदन्तो]ऽभूत् भग्नाचस्तु भगोऽभवत् ।
अन्तःपुरं समाक्रम्य स्त्रियो व्यापादिता अपि ॥ ५ ० ॥
एवं दचमहायज्ञं विनाश्य विरराम सः ।
प्रसूत्या वीचितः शम्भुः शान्तप्रायोऽभवत् कियत् ॥ ५ १ ॥
शान्तुन्मुखं तं दृष्ट्वा तु प्रसूतिर्दचवल्लभा ।
दिव्यज्ञानात् शिवं[2] ज्ञात्वा स्तोतुं समुपचक्रमे ॥ ५ २ ॥

---

१ P, here reads. सभग्नदन्तो । २ C परं ।

प्रसूतिरुवाच ॥

नमामहे तवपदपङ्कजद्वयं
यदद्वयं भयहर[1]मिष्टसाधकम्।
स्मरन्ति वै सुरनरकिन्नरादयः
समोभवान्निखिलजनेविशेषकृत् ॥५२॥
शिवो हरः स्मरहर ईश उत्तमो
महेश्वरो भवभयकृद्भवोऽरिहा।
त्रिलोचनः [2]शशिरविवह्निलोचनो
महामना मनसि विराज मादृशाम् ॥५४॥
शतेन्दवो रविकुलकोटिरेव ते
प्रभाकरप्रभमिति नावगम्यते।
यदीदृशाः प्रविलसदण्डकोटयो
भवत्तनोः कणविवरेषु लक्षिताः ॥५५॥
[3]मतिर्भवानपि यजमान एवच
त्वमुत्तमो मख उपकल्पितो ह्ययम्।
त्वमिज्यसे क्रतुषु समेषु सेवकैः
पशोरिदं गणयति किं वचोऽसमम् ॥५६॥
तव प्रिया प्रकृतिविशेषरूपिणी
समागता मयि जनुषेऽजनुः सती।
अनुग्रहस्तदपर एव लक्षितो
न निग्रहोप्ययमधुना त्वया कृतः ॥५७॥

---

१ B omits यदद्वयं and reads ०भवहर०। २ B रविशशि—
३ D आयुर्भवानपि।

यदीश्वरेक्षणकण एव वाञ्छ्यते
महाफलः सकृदपि विश्वभावन ।
इदं हि ते खलु परिपूर्णवीक्षणं
विनिग्रहात्मकमिति गण्यते मया ॥५८॥
प्रजापतिस्त्वयमतिकुत्सितं वचः
सदाजनुः समवददेव यन्मतम् ।
अनुग्रहात् स च भवता विमर्द्दन-
च्छलाग्निना कनकमिवाभिशोधितम् ॥५९॥
प्रजापतेर्जनुरिह देव सार्थकं
कृतं त्वया न च कुरु वै वृथा क्वचित् ।
मतिं शुभां प्रभजतु ते पदाम्बुजं
सुभक्तितः प्रणमतु लभ्यते सकृत् ॥६०॥
इदम्वपुस्तव विलसत्तरं परं
शशिप्रभं कमलतरं प्रशोभ्यतु ।
अदर्शयः कथमिति गर्हितार्थकं
गुणागुणाः प्रभुतरमेव यान्ति वै ॥६१॥
शुक उवाच ॥
प्रस्तुत्या विहितैतेन स्तवेन भगवान् हरः ।
चारुरूपः प्रसन्नात्मा बभूव वृषवाहनः ॥६२॥
तदा ब्रह्मा समागत्य हंसारूढश्चतुर्मुखः ।
विष्णुश्च गरुड़ारूढ़ो जगदाते वृषध्वजम् ॥६३॥
कृतापराधं देवेश दक्षमेतं व्यमर्द्दयः ।

क्षतं तत्तु समीचीनं शान्तिमेवाधुना चर ॥६४॥
देवान् प्रकृतसर्व्वाङ्गान् कुरु दक्षञ्च जीवय।
स्थिता ते शाश्वती कीर्त्तिर्द्दक्षयज्ञविनाशनात्।
दक्षयज्ञहरायेति स्तोष्यन्ति त्वां सुरादयः ॥६५॥

रुद्र उवाच।

एवमेवास्तु देवाश्च प्रकृताः सन्तु सर्व्वशः।
नैवं कदाचित्[1]कुर्व्वन्तु ममापमानसङ्गमम् ॥६६॥
दक्षाय च शिरो देहि छिन्नमन्यत्पशोरिह।
मन्निन्दाकलुषख्यातिं धृत्वा निष्कलुषो भवेत् ॥६७॥

शुक उवाच।

एवं रुद्रवचः श्रुत्वा ब्रह्मविष्ण्वादयो[2]ऽपि च।
नन्दी स्वयं मुने तत्र छागस्यान्यस्य कस्यचित् ॥
मूर्द्धानं योजयामास तदा दक्षोऽपि जीवितः ॥६८॥
ददर्श पुरुषांस्त्रीन् वै ब्रह्मविष्णुमहेश्वरान्।
अद्भुतां परमां शोभां दृष्ट्वा दक्षोऽपि विस्मितः ॥६९॥
सम्मार्जितेन चित्तेन दर्पणेनेव चारुणा।
ददर्श स महेशानं महात्मानं[3] परात्परम् ॥७०॥
परमानन्दसम्पूर्णं पारावारमिवापरम्।
कोटिचन्द्रप्रतीकाशं त्रिलोचनविराजितम् ॥७१॥
त्रिशूलडमरुधरं स्वर्णाभरणभूषितम्।

---

१ C D कदापि। २ A ब्रह्मविष्ण्वाद्यया। ३ B देवदेवं।

अणिमादिसिद्धिभिश्च मूर्त्ताभिः समुपासितम् ।
विराजमानं मध्यस्थं ब्रह्मविष्ण्वोर्महारुचोः ॥७२॥
एवं दृष्ट्वा महादेवं देवदेवं महेश्वरम् ।
स्तोतुं समुपचक्राम वक्तुं नैव तदाशकत् ॥७३॥
तत् दृष्ट्वा भगवान् ब्रह्मा विष्णुश्चापि सनातनः ।
ऊचतुः परमोदारौ महात्मानं प्रजापतिम् ॥७४॥

ब्रह्मविष्णू ऊचतुः ।

प्रजापते महाभाग भगवांस्त्वं बभूविथ ।
अयं साक्षान्महादेवस्तव दृक्पथमागतः ॥७५॥
यत्पूर्व्वमपराधो वै स क्षान्तोऽनेन सर्व्वथा ।
स्तुहि प्रणम देवेशं भक्त्या परमया मुदा ॥७६॥
आशु तुष्यत्यसौ देवः स्वभावात् शिवनामकः ।
न ह्यस्यास्ते हृदा किञ्चित् वैषम्यं त्वत्कृते पुनः ।
दण्ड्यन्तु दण्डयत्येष नापराधमपेक्षते ॥७७॥

शुक उवाच ।

इत्युक्तः स तदा दक्षः प्रणनाम च ताम्मुदा ।
स्तोतुं समुपचक्राम महात्मानं महेश्वरम् ॥७८॥

इति श्रीबृहद्धर्म्मपुराणे मध्यखण्डे दक्षयज्ञध्वंसो नामाष्ट-त्रिंशोऽध्यायः ।

---

# अथ ऊनचत्वारिंशोऽध्यायः ।

दक्ष उवाच ।

नमस्ते देवदेवेश सुरासुरनमस्कृत ।
विश्वभावन विश्वेश तुभ्यं भगवते नमः ॥१॥
त्वामादिमादिकर्त्तारं विश्वाद्यं विश्वरक्षकम् ।
पशवः किं नु जानन्ति दक्षाख्योऽहं पशुः परः ॥२॥
किं मे दैवं परं जातं [जन्म वै व्यर्थमाहितम् ।
भगवन्तं महादेवं][१] भवन्तं वै त्वजानतः ॥३॥
त्वमात्मा सर्व्वभूतानां त्वं गतिः परमा ततः ।
त्वं भवो भगवानादिस्त्वमनन्तो भवापहः ॥४॥
त्वं शिवाख्यो महाभागः परमेशः पुरातनः ।
हरः सनातनो देवः परमात्मा परेश्चितः ॥५॥
क्षमाशीलस्त्वाशुतोषः सन्तोषश्च प्रतोषकः ।
करुणासागरः शान्तः कमनीयः प्रजापतिः ॥६॥
विश्वेश्वरो विश्वबन्धुः पूर्णानन्दो विखण्डधीः ।
केवलानुभवानन्दस्वरूपः परमेश्वरः ॥७॥
विरूपो विश्वरूपश्च कालः कालीपतिः पतिः ।
सतीनाथः सतीबन्धुः सबन्धुर्बन्धुरूपवान् ॥८॥
भगवान् भगहा नन्दी महानन्दो महामनाः[२] ।

---

१ B omits the portion bracketted.

२ B महामुनिः ।

विश्वोद्भवः प्रसन्नात्मा कामरूपः प्रतापवान् ॥९॥
कालानलः कालकर्त्ता कालरूपी कलानिधिः ।
कामिनीनायकः कामी कौतुकी कामलालसः ॥१०॥
कामः कालाग्निरुद्रात्मा कौषेयाम्बरभूषणः ।
कपर्द्दी कूटकङ्कालः कूटस्थः केवलात्मकः ॥११॥
कोङ्कारः कोङ्करीकारः कोङ्कवेङ्कटवासकः ।
क्रीड़ात्रयपरिश्रान्तः क्रीड़ाकारी कलिः कलः ॥१२॥
कायी केयी केयकेयी केकयी शोकयध्वनः ।
कालीपरः कपाली च करपालीविभूषणः ॥१३॥
कपालभूषणो भव्यो योगविद्योगरूपवान् ।
यज्ञरूपो यज्ञकर्त्ता यजनीयो यमः स्वयम् ॥१४॥
यङ्कारशोषको याता यम्भनो यम्भयम्भकः ।
योनिदेवो योनिमाली यशस्वी यत्नवान् परः ॥१५॥
यक्षनाथो यक्षराजो यक्षराजेश्वरो यमी ।
पुण्यः पवित्ररूपी च परमानन्दविग्रहः ॥१६॥
पूर्णः पूरयिता पाता पुण्यश्रवणकीर्त्तनः ।
पद्मगन्धः पद्महस्तः पद्ममुद्रापदाम्बुजः ॥१७॥
पटुः पटीयान् पवनः पण्डितः परमार्थवान् ।
गोपनीयो गोपनाथो गोपालो गगनस्थितः ॥१८॥
गुरुर्गगनवासी च गौराङ्गो गौरमस्तकः ।
गोलोकवासी गतिमान् गेयो गानरतो गदी ॥१९॥
गणाध्यक्षो गयारिश्च पिता माता पितामहः ।

सद्बुद्धिदाता सद्बुद्धिः सात्त्विकः[1] सत्त्वरूपवान् ॥२०॥
साक्षी व्यक्षो दक्षसारो दिव्यभावी दिविस्थितः ।
प्रेतभूमीप्रियो भूतिप्रतिभूषित एव यः ॥२१॥
त्वं प्रेतस्त्वं जीवरूपो निन्द्यस्त्वं पूजितो भवान् ।
यदुक्तं भवते पूर्व्वं निन्दावाक्येन भूतिद ॥२२॥
तैश्च त्वं प्रतिपाद्योऽसि निन्द्यरूपः स्वरूपवान् ।
वेदागम्यो वेदकर्त्ता वेदवेद्यो विदाम्बरः ॥२३॥
दक्षस्त्वं कश्यपस्त्वञ्च चन्द्रः सूर्य्यो भवानपि ।
त्वं विष्णुस्त्वञ्च वै ब्रह्मा राजसस्तामसो भवान् ॥२४॥
सुमतिः कुमतिस्त्वञ्च शास्त्रकर्त्ता प्रकर्षणः ।
जृम्भणो मोहनस्त्वं वै द्रावणः क्षोभणो भवान् ॥२५॥
एकादशात्मा रुद्रस्त्वं जगद्ग्रासकरः परः ।
कोऽहमेकः पशुर्दक्षस्त्वां जाने परमेश्वरम् ।
यस्योदरे[2] इदं सर्व्वं जगत्स्थावरजङ्गमम् ॥२६॥
किमिदं दृश्यते नाथ युद्धं वृत्तमिवेक्ष्यते ।
अहो यज्ञः समारब्धो मया स्मरणमागतः ॥२७॥
स एव दृश्यते नष्टः कृतं साधु महेश्वरैः ।
न यत्र पूज्यते शम्भुस्तत्कर्म न समाप्यते ॥२८॥

शुक उवाच ।

इत्येवमपराधेन भूयसा स प्रजापतिः ।

---

१ C सात्त्वितुः । २ B ०दय० ।

भीतो निपत्य पदयोरिदं स्तोत्रं चकार सः ।
तेन प्रीताः सर्व्वदेवा बभूवुर्द्विज जैमिने ॥२९॥
निपत्योत्थायमुत्थायं प्रणनाम पुनः पुनः ॥
भक्त्या प्रजापतिर्दक्षः षड्भिः श्लोकैर्महेश्वरम् ॥३०॥

दक्ष उवाच ॥

नमस्यामि देव त्वदीयाङ्घ्रियुग्मं
यदाधाय चित्ते त्यजे मृत्युभीतिम् ।
भवव्याधिशान्त्यै भवन्नामभिन्नं
न भैषज्यमास्ते श्रुतिस्तत्प्रमाणम् ॥२१॥
प्रभो दीनबन्धो कृपापारसिन्धो
मनश्चक्षुरात्मस्वधिष्ठानकारिन् ।
मनोवृत्तिमाचिन्नमस्यामि तेऽङ्घ्री
क्षमस्वापराधं महादेव शम्भो ॥३२॥
पुरो जन्मजन्मार्जितात्कर्मणो वै
शरीरात्मकोऽसौ ध्रुवं बन्ध एषः ।
अतो बन्धमुक्त्यै नमस्यामि तेऽङ्घ्री
क्षमस्वापराधं महादेव शम्भो ॥३३॥
इदं यच्छरीरं वृथा मोहरूपं
ममाहं तवेत्यादिदुष्टग्रहस्य ।
जिहासुः कदा वा नमस्यामि तेऽङ्घ्री
क्षमस्वापराधं महादेव शम्भो ॥३४
न्मनस्ते वचस्ते दृशौ ते करौ ते

रसज्ञापदत्वक्श्रुती ते मदीये[1]।
विनिश्चित्य चेदं नमस्यामि तेऽङ्घ्री
क्षमस्वापराधं महादेव शम्भो ॥ २५॥
दिगाकाशकालस्वरूपो महात्मा
न तद्वस्तु यत्र त्वमेको न भासि।
शरीरी सदागा नमस्यामि तेऽङ्घ्री
क्षमस्वापराधं महादेव शम्भो ॥ २६॥
शरीरस्वभावात् सदागःप्रबन्धो
न चेत्त्वं प्रभुः सन् क्षमेथा महेश।
क यास्येष तस्मान्नमस्यामि तेऽङ्घ्री
क्षमस्वापराधं महादेव शम्भो ॥ २७॥
क्षमस्वापराधं न वा मे क्षमस्व
प्रभो ते गृहीते पदे पङ्कजाभे।
मृतौ वा जनौ वा धृते जीवने वा
गतिस्त्वं गतिस्त्वं महादेव शम्भो ॥ २८॥

शुक उवाच।

इत्येवं पतितं पादे भक्तिमन्तं प्रजापतिम्।
आकृष्य निजपाणिभ्यामुद्दधार दयानिधिः ॥ २९॥
शिवदेहामृतस्पर्शनिर्वृतः स प्रजापतिः।
आत्मनः पूर्णतां मेने तत्क्षणात्कल्पकोटिवत् ॥ ४०॥
नरकादिव वै घोरादुद्दधार महेश्वरः।

---

१ B रसज्ञा पदे ते, श्रुती ते मदीये।

आत्मानमीदृशं मेने तदा दक्षः प्रजापतिः ॥४१॥
त्रैलोक्यनाथो भगवान् शिवः परमपूरुषः ।
यस्योद्धारकरः साक्षात् तस्मै आत्मा समर्प्यते ॥४२॥
पश्याम्यार्त्तदयालुत्वं हरस्याप्याशुतोषताम् ।
आजन्मनिन्दको दक्षः सकृत् स्तुत्वा विमुक्तिभाक् ॥४३॥
तस्मात् सर्व्वप्रयत्नेन भज देवं महेश्वरम् ।
घोरसंसारतः पाता शिव एको महेश्वरः ॥४४॥
यत्करोषि यदश्नासि यज्जुहोमि ददासि यत् ।
यत्तु पश्यसि वा वत्स तत्कुरुष्व शिवार्पणं ॥४५॥
वरं प्राणपरित्यागः शिरसो वापि कर्त्तनम् ।
न त्वसंपूज्य भुञ्जीत भगवन्तं त्रिलोचनम् ॥४६॥
अथ भक्तियुतं दक्षं विलोक्य विधिकेशवौ ।
ऊचतुः परमप्रीतौ महेशस्य च शृण्वतः ॥४७॥

ब्रह्मविष्णू ऊचतुः ।

प्रजापते महाभाग यज्ञमारब्धवान् भवान् ।
तं सम्पादय [सर्व्वेषां देवानां प्रीतिहेतवे ॥४८॥
सर्व्वेषां खलु][1] देवानां भागाः सङ्कल्पितास्त्वया ।
न कल्पितौ द्वौ तु भागौ सत्या अपि शिवस्य च ॥४९॥
ताविहापि च कल्प्येतां भागौ सत्याः शिवस्य च ।
अनयोः शेषपूजा तु नास्तु सम्मानहानिकृत् ॥५०॥
मर्य्यादा श्रूयतां तत्र याथार्थ्य निरूप्यते ।

---

१ B omits the portion bracketted.

काली शिवस्य द्वावेतौ सर्व्वदेवमयौ मतौ ॥५१॥
एतयोः पूजने दृष्टो नान्यपूजां पुनश्चरेत्।
तस्मात्सर्व्वांस्तु संपूज्य शेषे एतौ प्रपूजयेत् ॥५२॥
सर्व्वदेवांस्तु संपूज्य न पूज्येते शिवौ यदि।
तदा वृथासमा पूजा प्रमाणं तत्र ते मखः ॥५३॥
पूजयन् सर्व्वदेवान् यो ह्यसमाप्तेऽन्यपूजने।
शिवौ संपूजयेद् यस्तु तेन तस्य कृतार्थता ॥५४॥
ततो न पूजयेदन्यं शिवपूजनतः परम्।
तत्र संपूज्यतां शम्भु र्विना देवीञ्च सम्प्रति ॥५५॥
ग्रहीष्यति ह्यसावेवं भागौ द्वावेव संप्रति।
उभयोरपि पूजायां शिवपूजा विशेषतः।
[अमुष्य पूजनेनैव तस्याः पूजा विशेषतः][1] ॥५६॥
अमुष्य पूजनेनैव तस्याः पूजापि वर्त्तताम्।
तस्मात् शिवस्य पूजास्य सर्व्वशेषे विधीयताम् ॥५७॥

शुक उवाच।

श्रुत्वैवं स तयोर्व्वाक्यं प्रजेशो विष्णुवेधसोः।
तथा चक्रे विधानज्ञो विधानज्ञैर्महर्षिभिः ॥५८॥
देवाः सर्व्वे प्राप्तभागाः पूजिताः स्वस्थलं ययुः।
ततो ब्रह्मा च विष्णुश्च देवदेवो गणैः सह।
दक्षेण पूजितौ प्रीतौ स्वलोकौ द्विज जग्मतुः ॥५९॥
सर्व्वे च ऋषयोऽन्येच गन्धर्व्वासुरकिन्नराः।

१ C omits the last line of 56.

ययुः स्वं स्वं स्थलं सर्व्वे यथायोग्यं प्रपूजिताः ॥६०॥
इति ते कथितं विप्र दक्षयज्ञविनाशनम् ।
सतीदेहपरित्यागो दक्षोक्तः शाम्भवः स्तवः ।
पुनर्यज्ञस्य संसिद्धि र्देवानां परितोषदा ॥६१॥
एतद् यः शृणुयान्नित्यं पठेद्वा सुसमाहितः ।
तस्य पापविलोपः स्यान्मृतः शिवलभाग्भवेत् ॥६२॥
श्राद्धकाले पठेदेतमध्यायं शृणुयाच्च वा ।
तदा स्युः पितरस्तुष्टा वर्षाणामयुतायुतम् ॥६३॥
यात्राकाले विवाहे च पुत्रसंस्कारकर्म्मसु ।
भक्तियुक्तः पठेदेतमध्यायं शृणुयाच्च वा ॥६४॥

गङ्गातटेऽथ खलु साधुसमीपतो वा
लिङ्गञ्च शैवमपि यत्र विराजते वा ।
शुश्रूषुसज्जनसमीपगतोऽपि वामुं
शृण्वन् पठन् भवति शम्भु-शरीर-धारी ॥६५॥

इति श्रीबृहद्धर्मपुराणे मध्यखण्डे दक्षयज्ञसम्भवो नामोन-
चत्वारिंशोऽध्यायः ॥

## चत्वारिंशोऽध्यायः ।

जैमिनिरुवाच ।

ततः किमकरोद्दचः शिवं प्राप्य क्रतौ हते ।
गङ्गा वा समभूत् कुत्र तन्मे वद गुरो प्रभो ॥१॥

शुक उवाच ।

गतेषु तेषु सर्व्वेषु देवर्षिमानवादिषु ।
प्रसूत्या भार्य्यया सार्द्धं दचो मुग्धः परोऽभवत् ॥२॥
शिवो मोहपरश्चापि बभूव मुनिपुङ्गव ।
भार्य्यां विना न जामाता शोभते श्वशुरालये ॥३॥
दचोऽनुतेपे बहुशो हा सतीति मुहुः स्मरन् ।
क्व गतासि महाभागे वत्से सति सुलोचने ।
अस्मांस्तु जन्मनैवास्थान् चिप्त्वा कूपवरे सुते ॥४॥
दिव्यज्ञानेन देवेशं ज्ञात्वा त्वं शिवमीश्वरम् ।
पतिं प्राप्तासि हित्वैव देवादीन् देववन्दिते ॥५॥
देवादिवन्दिता त्वञ्च देवादिवन्दितः शिवः ।
उभौ तु दम्पती योग्यौ नैवं जाने कुधीरहम् ॥६॥
मन्दभाग्यस्य मे दोषात् त्यक्त्वा चैनं पतिं शिवम् ।
परलोकं प्रयातासि मादृशो नास्ति दुष्कृती ।
त्वन्तु जन्मान्तरेऽप्येनं पतिं प्राप्स्यसि शोभने ॥७॥

नास्माभिश्चक्षुषा दृष्टौ युवां चारुसतीशिवौ ।
हाहा हतोऽस्मि दग्धोऽस्मि वृथाप्राणोऽस्मि चानिमि[1] ॥८॥
त्रैलोक्यदुर्लभं लब्ध्वा चिप्तं गम्भीरपाथसि ।
शिवं राजीवताम्राचमेतं परमपूरुषम् ।
यष्टुं जामातृबुद्ध्यापि न प्राप्तो विधिवञ्चितः ॥९॥

शुक उवाच ।

इत्यादिमनुतापं तं कुर्वन्तं वै प्रजापतिम् ।
क्व सती क्व सतीत्येवं जगाद मुग्धवच्छिवः ॥१०॥
उत्थाय च ततः स्थानात् ययौ स उत्तरामुखः ।
सती कालीति कालीति शब्दयन् भयदं परम् ॥११॥
तदा स[2]दुर्निरीच्योऽभूद्देवैरपि सवासवैः ।
दक्षाद्या दूरतस्तस्थुः शिवोऽगाद्दुर्गमं परम् ॥१२॥
ददर्श तत्र महसा[3] दीप्यमानां मृतामपि ।
सतीं दाक्षायणीं कालीमनुत्तानामनावृताम् ॥१३॥
दृष्ट्वा तां कालमेघाभां भूमावुत्तारलोचनाम् ।
शिवोऽहन्ते पतिः साध्वि लच्चोत्तिष्ठेत्यभाषत ॥१४॥
कृतार्था त्वं स्वभावेन गता भावान्तरं सति ।
अकृतार्थौ विधायैव शिवदक्षौ कृतागसौ ॥१५॥
दक्षो मौढ्यमनुप्राप्तो भवतीं नोपलब्धवान् ।
अहन्तु त्वां मृतामेनां न त्यक्ष्यामि कदाचन ॥१६॥

---

१ C प्राविनि । २ B सुदुर्निरीच्य । ३ B D सहसा ।

एवं विलप्य बहुधा हरः प्राकृतलोकवत्।
बाहुभ्यां तां परिष्वज्य जग्राह शिरसापि ताम् ॥१७॥
गृहीत्वा शिरसा कालीं देवीं दाक्षायणीं शिवः।
परमं मोदमापन्नो जगादात्मानमात्मना ॥१८॥
अहो मे परमं भाग्यं यत्त्वाहं शिरसावहम्।
भार्य्येति लोकलज्जाभि र्या त्वं नाराधिता मया ॥१९॥
इत्युक्त्वा परमानन्दविह्वलो नर्त्तुमुद्यतः।
आकाशे द्रष्टुमायाताः सर्व्वे ब्रह्मादयः सुराः ॥२०॥
कदाचिच्छिरसाधाय कदाचिद्वामपाणितः।
कदाचिद्दक्षिणे हस्ते धृत्वा दाक्षायणीं शिवः।
ननर्त्त धरणीखण्डे महाताण्डवपण्डितः ॥२१॥
तदा धरण्यां गगने तिलकायितचन्द्रमाः।
न मम्लौ स महादेवः[1] कण्ठ-भूषण-भास्करः ॥२२॥
बाहुक्षेपैर्बहुविधैर्दिक्पालास्ताड़िता गताः।
जटा-वेग-प्रतिक्षिप्ता अभूवंस्तारकागणाः ॥२३॥
धरणी धैर्य्यमुत्सार्य्य चचाल ह्यचलापि या।
कूर्म्मानन्तौ धरां धर्त्तुं व्यथितौ सम्बभूवतुः ॥२४॥
पाद-प्रक्षेप-सम्भूत-वायुना परिपीड़िताः।
अचला अपि ते चेलुः शैलाः कैलासमेरवः ॥२५॥
अब्धयोऽप्युच्छलत्तोयतरङ्गा धैर्य्यमत्यजन्।
सर्व्वे च पशुपक्ष्याद्या नीरवा मृतका इव।

---

१ C नमन् मौलिर्महादेवः।

भूता आकालिकापाये आकस्मिक उपागते ॥२६॥
आनन्दविह्वलो देवो लोकानां विपदं पराम् ।
नावधार्य्यैव बहुधा ननर्त्त घूर्णितेक्षणः ॥२७॥
सर्व्वेषामिह लोकानां देवादीनां महामुने ।
केनोपायेन देवोऽसौ शाम्येदिति हृदा दधुः ॥२८॥
तत्रोपायं विनिश्चित्य विष्णुः पालनपण्डितः ।
सतीदेहं महादेव-शिरस्थं भीतभीतवत् ।
सुदर्शनेन चक्रेण चिच्छेद खण्डशः शनैः ॥२९॥
यदा निःक्षिपते पादं धरणौ स महेश्वरः ।
तस्यैव यौगपद्येन क्षिपंश्चक्रं चकर्त्त सः ॥३०॥
चक्रेण विष्णुना च्छिन्ना देव्या अवयवास्तु ते ।
निपेतुर्धरणौ विप्र सा सा पुण्यतरा क्षितिः ॥३१॥
क्वचित्पादौ क्वचिज्जङ्घे क्वचिज्जिह्वा क्वचिन्मुखम् ।
क्वचित् स्तनौ क्वचिद्वक्षः क्वचिद्बाहू क्वचित् करौ ।
क्वचित्पार्श्वे क्वचिद्योनिः पपात शिवमस्तकात् ॥३२॥
यत्र यत्र सती-देह-भागाः पेतुः सुदर्शनात् ।
ते ते देशा धराभागा महाभागाः किलाभवन् ॥३३॥
ते तु पुण्यतमा देशा नित्यं देव्या ह्यधिष्ठिताः ।
सिद्धपीठाः समाख्याता देवानामपि-दुर्लभाः ।
महातीर्थाणि तान्यासन् मुक्तिक्षेत्राणि भूतले ॥३४॥
भूमौ पतितमात्रास्ते देव्या अवयवाः किल ।
जग्मुः पाषाणतां शीघ्रं लोकानुग्रहहेतवे ॥३५॥

तत्र ब्रह्मा च विष्णुश्च दिक्पालाश्चारणादयः ।
स्वलोकेभ्यः समागत्य सेवन्तेऽहरहः सतीम् ॥२६॥
तीर्थचूड़ामणिस्तत्र यत्र योनिः पपात ह ।
तीरे ब्रह्मनदाख्यस्य महा-योग-स्थलं हि तत् ॥२७॥
कालीपुराणे विज्ञेयं मुने विवरणं ततः ।
माहात्म्यं तस्य देशस्य विष्णुर्जानाति नापरः ॥२८॥
एवं कृत्ते सतीदेहे नृत्यन्देवो महेश्वरः ।
लघुर्भूतो दिशः सर्वा ददर्श शान्तिमावहन् ॥२९॥
देवाः सर्वे नुता[1]स्तस्थुर्भीताः क्वापि च कुत्रचित् ।
नारदः सहसा गन्तुं मतिं तन्निकटेऽकरोत् ॥४०॥
शनैः शनैः स्तुवन् गत्वा नारदो मुनिपुङ्गवः ।
पुटाञ्जलिः पुरस्तस्थौ नृत्यतस्तस्य जैमिने ॥४१॥
दृष्ट्वा च नारदं शम्भुः प्राञ्जलिं पुरतः स्थितम् ।
पप्रच्छ को भवान् दृष्टः सतीं दाक्षायणीमिति ॥४२॥

नारद उवाच ।

प्रभो देव महेशान सतीं प्राप्स्यसि सर्व्वथा ।
आकालिकोऽसौ प्रलयः स्वकृतो नावधीयते ॥४३॥
प्रभुर्भवसि लोकानां कर्त्ता पाताभिरक्षिता ।
कथं नृत्यच्छलेनेदं जगन्नाशयसि स्वयम् ।
नैतादृशं प्रभोः कर्म्म नाशयेद् यत् समाश्रितान्[2] ॥४४॥

---

१ C गताः । २ B वशमाश्रितान् ।

शिव उवाच ।

अनृत्यः शान्तभूतोऽहं शान्ताः सन्तु सुरादयः ।
सतीदेहः शिरस्थो मे क्व गतो वद श्रन्वतः ।
सती वा लभ्यते कुत्र तदपि ब्रूहि नारद ॥४५॥

नारद उवाच ।

भगवन् भूतभव्येश त्रिलोचन महेश्वर ।
त्रैलोक्यविपदं दृष्ट्वा त्वां शान्तयितुमर्थिनः ।
उपायज्ञस्य विष्णोस्तु चक्रेण त्वच्छिरःस्थितः ।
खण्डखण्डीकृतो देहः सत्याश्च लघुः कृतः ॥४६॥४७॥
दृश्यतां यत्र यत्रैव पतिता अङ्गसञ्चयाः ।
महापीठाश्च ते भूताः कामरूपादयो हर ॥४८॥

शुक उपाच ।

इत्युक्तः स महादेवो ददर्श योनिमण्डलम् ।
(लोमाञ्चितसमयाङ्गो बभूव दर्शनात्ततः ॥४९॥
दृष्टमात्रा तु सा योनिः शम्भुना मुनिपुङ्गव ।
धरां विभिद्य पातालं गच्छतीव बभूव ह ॥५०॥
तदा तु व्याकुलं सर्व्वं दृष्ट्वा देवो महेश्वरः ।
स्वयं गिरिवरो भूत्वा दध्रे तद्योनिमण्डलम्)[१] ॥५१॥
ब्रह्मा विष्णुश्च तत्रापि साहाय्यार्थमुपागतौ ।
सर्व्वे भूता[२]श्चतुर्भागां देवीं धर्त्तुं भगात्मिकाम् ॥५२॥

---

१ D Omits the portion bracketted. २ B सर्व्वभूताः ।

हरश्च पर्व्वतो भूत्वा धृत्वा योनिश्च मोदितः ।
यत्र यत्र सती-देह-भागास्तत्र स्वयं मुने ।
पाषाण-लिङ्ग-रूपेण ह्यधिष्ठाय[१] व्यसेवत ।
ततः स नारदं प्राह क सती तत्तु मे वद ॥५३॥५४॥

नारद उवाच ।

इहैव कामरूपे त्वं योगेनाधार्य. मानसम् ।
विश्राम्य ते सतीं देवीमन्वेष्टुं प्रव्रजाम्यहम् ॥५५॥
मा चञ्चलत्वं गन्तव्यं मान्यभावः कदाचन ।
त्वामृते न सती क्वापि वर्त्स्यते चिरतः प्रभो ।
अहं ते दर्शयिष्यामि सतीं सत्येन ते शपे ॥५६॥

शुक उवाच ।

इत्युक्का देवदेवेशं तं प्रणम्य महेश्वरम् ।
ययौ विहायसा तत्र शम्भुश्च शान्तिमान् स्थितः[२] ॥५७॥
सर्व्वे च शान्तिमापन्ना निश्चिन्तास्च तदा जगुः ।
यदि न स्यादसौ विष्णुः प्रलयः स्यात्तदा परः[३] ॥५८॥
धन्योऽपि नारदश्चासौ यः शम्भोर्निकटं गतः ।
त्रैलोक्यदुष्करं कर्म्म विष्णुश्चक्रे प्रपालकः ॥६९॥
यः संहारकरो देवो महादेवो महाप्रभुः ।
तन्मुखात् त्रिजगच्चैतत् ग्रस्तं पुनरपालयत्॥६०॥
सत्यमेव महात्मासौ लोक-पालन-कारकः ।

---

१ C अधिष्ठाय । २ B स्थिरः । ३ D परं ।

यदि न स्यादयं देवः किन्तदा स्यादिहैव तु ॥ ६१ ॥
इत्येवं चिन्तयित्वा तु ब्रह्मेन्द्राद्याश्च देवताः ।
जग्मुर्नारायणो यत्र स्तोतुकामा हरिश्च तम् ।
विष्णुलोकं समासाद्य विष्णुं तुष्टुवुरन्विताः ॥ ६२ ॥

देवा ऊचुः ।

विष्णुं पुराणपुरुषं त्वां नमस्यामहे वयम् ।
त्रिगुणाया[१]विकल्पाय नमो नारायणाय ते ॥ ६३ ॥
सत्यव्रताय सत्याय नमस्ते सत्ययोनये ।
नमः सत्यनिधानाय नमः सत्यात्मकाय ते ॥ ६४ ॥
इष्टाय यजमानाय यज्ञदेवाय ते नमः ।
देव-देवा-धिपतये विष्णवे लोकधारिणे ॥ ६५ ॥
नमः कारणशून्याय सर्व्वेषामपि हेतवे ।
पुरुषाय च जीवाय सुखदुःखार्थकाय च ॥ ६६ ॥
नमः कमलपादाय नमः कमलपाणये ।
नमः कमलनेत्राय विष्णवे परमात्मने ॥ ६७ ॥
यज्ञेश्वराय यज्ञाय दैत्यदानवघातिने ।
शिवाय शिवरूपाय शिवदात्रे च ते नमः ॥ ६८ ॥
सदा पालनकर्त्त्रे च नमः सत्त्वगुणाय ते ।
गुणातीताय गुणवद्दृष्टाय परमेष्ठिने ॥ ६९ ॥
वेदज्ञाय वेदकर्त्त्रे वेदाचरणकारिणे ।

---

१ A C D ०युगाय ।

नमः स्थूलाय सूक्ष्माय नमस्ते शास्त्रकारिणे ॥७०॥
निष्कलाय विशेषाय प्रसन्नाय प्रसादिने।
कर्त्रे हर्त्रे प्रवक्त्रे च नमस्तुभ्यं नमो नमः ॥७१॥
प्रायो विनाशिता सृष्टिः पुनः संरचिता त्वया।
संहारकारकाच्छम्भोः कोऽपरो वा भयापहः ॥७२॥
संहारकारकः शम्भुः सत्यमेव न संशयः।
त्वञ्च पालनकर्त्ता वै तत्र नास्तीह संशयः ॥७३॥

शुक उवाच।

इत्येवमुक्त्वा ते देवाः स्तुत्वा देवं सनातनम्।
ब्रह्मविष्णुयुताः सर्व्वे शिवं द्रष्टुमुपागमन् ॥७४॥

इति श्रीबृहद्धर्म्मपुराणे मध्यखण्डे चत्वारिंशत्तमोऽध्यायः ॥

---

# एकचत्वारिंशोऽध्यायः ।

शुक उवाच ।

ततो ब्रह्मा च विष्णुश्च तपस्यन्तं महेश्वरम् ।
आगत्य वै ददृशतुः कामरूपे महाप्रभुम्[१] ॥१॥
तमूचतुश्च तौ देवौ पूजितौ च समर्हणैः ।
निर्ज्जने तत्र मुदितौ शिवदर्शनतस्तदा ॥२॥

ब्रह्मविष्णू ऊचतुः ।

देवदेव महादेव तव भार्य्या सती शुभा ।
तत्त्याज देहं रुचिरं दक्षयज्ञे मनस्विनी ॥३॥
किं कर्त्तव्यमवश्यं यद्भाव्यं तद्भाव्यमेव हि ॥४॥
भार्य्या पुत्राश्च भृत्याश्च धनानि बान्धवास्तथा ।
न कोऽपि कस्यचित् क्वापि शरीरमपि नात्मनः ।
इत्येवं निश्चितं ज्ञात्वा न विमुह्यन्ति पण्डिताः ॥५॥६॥
विशेषतस्तु मरणं जातस्य नियतं मतम् ।
तस्मादपरिहार्य्येऽर्थे न त्वं शोचितुमर्हसि ॥७॥
त्वञ्च ज्ञानी महायोगी शिवस्त्रैलोक्यविश्रुतः ।
हीनमोहोऽसि सततं वचो नः सौहृदार्थकम् ॥८॥
सा च त्वया सती प्राप्ता विना यत्नेन सुन्दरी ।

---

१ B महेश्वरं ।

त्वाञ्च प्राप्तं[1] यत्नवती पुनः प्रत्युपपत्स्यते ॥९॥
अपि चैषा सती भार्य्या न ते भार्य्यैव केवलम्।
सा मूलप्रकृतिर्देवी स्वेच्छया देहधारिणी ॥१०॥
ब्रह्मा विष्णु[2]रिमावावां त्वञ्च शम्भुः सनातनः।
त्रयो वै परमात्मानस्तया परमयेरिताः।
वक्षामो वै गुणांस्तस्याः सहायांश्च परस्परम् ॥११॥
सर्व्वानस्मान् हि सा प्राप्ता सतीरूपेण[3] रूपिणी।
तत्र त्वां पूर्णभावेन आवामंशेन वै त्रिधा ॥१२॥
तस्यास्ते खलु भार्य्यायाः दाक्षायण्या महेश्वर।
प्रकल्पितं महापीठं कामरूपाख्यमद्भुतम् ॥१३॥
इहैव तां परां स्तुत्वा द्रक्ष्यामो यदि मन्यसे।
दृष्ट्वा त्वया तां संयोज्य याव आवां यथागतम् ॥१४॥

शिव उवाच।

नारदस्तु प्रतिज्ञाय तस्या अन्वेषणाय वै।
जगाम तत्कथञ्चाद्य युवां मे दर्शयिष्यथः ॥१५॥
तस्य दर्शनपर्य्यन्तमहमत्र तपःपरः।
सा सती मे क्वचिद्याता मान्तु प्राप्स्यति तन्मता ॥१६॥

ब्रह्मविष्णू ऊचतुः।

नारदस्यागमो देव चिरेण सम्भविष्यति।
अचिरेणैव लभ्या चेत् कथं चिरमुपेक्षसे ॥१७॥

---

१ C प्राप्तु। २ D ब्रह्मविष्णू। ३ C पत्नी°।

शिव उवाच।

एवं भवतु तां देवीं स्तोष्यामो भक्तिसंयुताः।
द्रक्ष्याम एव तां देवीं लब्धाऽलब्धास्तु[1] वा तथा ॥१८॥

ब्रह्मविष्णुशिवा ऊचुः।

देवि प्रसीद परमेऽखिल-मूल-रूपे
चिद्रूपिणी परमसूक्ष्मतरा सदासि।
न श्रूयसे न च दृशापि च लभ्यसे त्वं
न ध्यायसे च परमाणुरुदा नमस्ते ॥१९॥

निद्राङ्गतस्य पुरुषस्य तनूरुहेषु
गच्छत्पिपीलि-गति-बोध इतीह यस्य।
सैव त्वमात्मनि सुयोग-विविक्त-चित्ते
सूक्ष्माति-सूक्ष्म-मतिरेव नमोऽस्तु ते वै ॥२०॥

एतादृशं परमसूक्ष्मतरं महेशि
ज्ञानं न सम्भवति देवमनुष्यकेषु।
यस्तु प्रशक्यतितरामचलावबोधः
सैवासि मुक्तिरपरा प्रणनामि तुभ्यम् ॥२१॥

किं सम्भवेत् परमसूक्ष्मकलात्मिकायाः
स्तोत्रप्रणाममननानि तवातिसूक्ष्मे।
तत्रापि देवि भवतीं प्रतिलब्धुकामाः
स्तामो वयं कृपय देवि परिप्रसीद ॥२२॥

---

१ D स्तुत्वा C सा।

त्वं स्वेच्छया सृजसि पासि गुणत्रयार्हान्[१]
शेषे च संहरसि नोऽपि जगत् किमन्यत् ।
स्थूलासि सूक्ष्मपरमासि महात्मिकासि
त्वं निष्कलानवगमासि निषेधशेषा ॥२३॥

सानुग्रहात् धृततनूरपि निर्व्विकारा
भ्रूभङ्गमात्रकलिताण्डचयासि देवि ।
तेन प्रणाममननस्तवनादिकानि
कार्य्याणि कुर्म्म इह देवि वरे प्रसीद ॥२४॥

निर्हेतुभक्तिसुलभे भवदुर्लभा त्वं
निर्हेतुभक्तिरपि दुर्घटिता जनेषु ।
तस्माच्छरीर्य्यपि शरीर-विबन्ध-हीनो
यस्त्वां स्मरेत् स भवतीं समवैति लोके ॥२५॥

त्वं ब्रह्मविष्णुशिवदेहकरी च विष्णु-
राकाश-कालवद्-तीन्द्रियकासि मातः ।
ब्रह्माण्डकोटिकसमुद्भरलोमकूपा
किं क्षुद्रचेतसि जनैः परिचिन्तनीया ॥२६॥

दाक्षायणीमपि सतीं सुरुचिं रवीन्दु-
साहस्रकोटिरुचिकां परितः स्मरामः ।
श्यामासि चन्द्रधवलासि च हेमगौरी
रक्तासि चित्तमनुरूपतनुं स्मरामः ॥२७॥

---

१ B त्रयार्हा ।

त्वं वै समस्तसकलात्मसु वर्त्तमाना
यद्यन्नियोजयसि देवि तदेव सर्व्वे ।
कुर्व्वन्ति चाथ खलु ये मम तेऽहमेतत्
सम्यक्करोम्यत किलेति शिवासि माया ॥ १८ ॥
काली नवीनघनरूपपरार्द्धचन्द्र-
विभ्राजमानशुभमौलितलामला च ।
दुर्गा त्वमच्चरणपद्मतला भवानी
माताम्बिका च सदया सततं प्रसीद ॥ १९ ॥
एनं शिवं सकलपूरुषसग्यरूपं
भीमं चिणेचमपि सत्वपरं महेशम् ।
त्यक्त्वा कथं कृतविभावतरा स्थितासि
ह्येनं निरीक्ष्य दयया खलु जीवयास्मान् ॥ २० ॥

शुक उवाच ।

एवं तान् स्तुवतो देवान् देवी कमललोचना ।
नारीसहस्ररूपेण तेषां सन्दर्शनं ययौ ॥ २१ ॥
सर्व्वास्ताश्चारुसर्व्वाङ्गी युवत्योऽतिमनोहराः ।
नानाभरणभूषाढ्याः स्मेरोत्फुल्लमुखाम्बुजाः ॥ २२ ॥
तास्ते सन्ददृशुर्द्देवा नानारूपाः सुवाससः ।
क्षणे श्यामाः क्षणे शुक्लाः क्षणे रक्ताः क्षणेऽन्यथा ॥ २३ ॥
क्षणे विवस्त्रास्तरुणीः क्षणे कानकवाससः ।
नृत्यन्तीश्च हसन्तीश्च गानवाद्यकराः क्षणे ॥ २४ ॥
पुरः पृष्ठे पार्श्वयोश्च ऊर्द्धश्चाधः क्षणे क्षणे ।

दृष्ट्वैव तादृशीस्तास्ते चलच्चित्ता महामुने ॥३५॥
लेभिरे निर्वृतिं नैव किमाश्चर्यं ब्रूमहे वयम् ।
पश्यामो वा हिमशङ्काञ्च दिगङ्कांश्चाभिसंस्तुमः ॥३६॥
इमा हि सा ध्रुवं देवी स्वरूपं समदर्शयत् ।
देवी तु तांस्तु व्यामुग्धान् विलोक्य कृपयान्विता ॥३७॥
एकीभूता बभौ विप्र सती भिन्नेव निर्म्मिता ।

ब्रह्मविष्णुशिवा ऊचुः ।

एते वयं त्रयो देवाः भवद्दर्शनकाङ्क्षिणः ।
त्वं सती भव शम्भ्वर्थे सदया पूर्ववद्भव ॥३८॥

देव्युवाच ।

युष्माकं विहितात् स्तोत्रात्तुष्टाहं दर्शनं गता ।
त्यक्तदेहा[१] कथं शम्भुमशरीरा [२]ह्युपाश्रये ॥३९॥
एवञ्चेद् भवतोऽभीष्टं[३] विष्णोश्च ब्रह्मणस्तथा ।
तत्कथं मे वपुश्छिन्नं त्रैलोक्यापायकातराः ॥४०॥
तच्चेत्पूरचितं स्यात्तदा तत्र पुनर्गता ।
प्राप्ता शिवं स्यान्देवेशास्तद् युष्माभिर्विनाशितम् ॥४१॥
यावद्दक्षे कुधीः सम्यक् विनष्टा न भवेदपि ।
अहन्तावदपुस्त्यक्त्वा तिष्ठाम्यन्यत्र सङ्गता ॥४२॥
शुभां मतिं गते दक्षे पुनस्तदपुराश्रिता ।
शिवमेव भजिष्यामीत्येवं मे मनसि स्थितम् ॥४३॥

---

१ C त्यक्त्वादेहं । २ A B D उपाश्रये । ३ A D ऽभिष्टं ।

शिवो मां[1] परमानन्दपूर्णः सन् शिरसाकरोत् ।
तेनैवासन्नजीवाहं युष्माभिः प्रतिबाधिता ॥४४॥
किन्तु शम्भुशिरस्यैको वासो मम तदाभवत् ।
तच्च सम्पत्स्यते पश्चात् सम्भविष्याम्यहं यदा ॥४५॥
यूयन्तु मम वै देवा यद्वाञ्छितविरोधकाः ।
बभूव तेन वै ब्रह्मा मुहुर्मृत्युवशं व्रजेत् ॥४६॥
विष्णुर्निद्रावशं गच्छेत् मासान् वै चतुरोऽब्दिकान् ।
ब्रह्मा चतुर्युगदिने गते निद्रास्यते तथा ॥४७॥
प्रलयानन्तरां सृष्टिं करोत्वेष पुनः पुनः ।
सुरा विपन्ना भूयासुः सम्पत्तियाचका अपि ॥४८॥
एवं श्रुत्वा विमनसौ[2] बभूवतु रतीव तौ ।
ब्रह्मविष्णुमहात्मानौ प्रोचतुः प्राञ्जलिस्थितौ ॥४९॥
आवां कृतागसौ देवि त्वया शप्तौ निजेच्छया ।
कथमेष शिवो नाम नास्मत्तो भिद्यते क्वचित् ।
शापेऽवशिष्यसे[3] देवि वयं ते सर्व्वतः समाः ॥५०॥

शुक उवाच ।

इत्युक्ता सा तदा देवी प्रतिवाक्येन चारुणा ।
स्फुरत् स्मितमुखाम्भोजा जगाद मधुराक्षरम् ॥५१॥

देव्युवाच ।

एवमेव महेशोऽयं शापमर्हति नान्यथा ।

---

१ D शिवो मां । २ C विमनसौ बभूवतुस्तेऽमितौजसः ।
३ B शापेऽवशिष्यते ।

प्रेतभूमिप्रियोऽ[1]स्त्वेष दरिद्रो धनवानपि ॥५२॥
युवाभ्याञ्च वरानिष्टान् ददामि स्तवतोषिता।
ब्रह्मन् प्रजापतिर्भूया वर्णानां जनकोऽपि च ॥५३॥
ब्राह्मणास्ते प्रजा ज्येष्ठा भवन्तु शुचयः सदा।
पृथिवीधारकाः शास्त्रचक्षुषः क्षमिणः सदा ॥५४॥
देवैरपि समाराध्या धर्म्मपूर्णा महाप्रभाः।
सर्व्वेषामेव देवानां मुखानि तीर्थपादकाः ॥५५॥
त्वञ्च विष्णो भव श्रीमान् देवैः सर्व्वैरभिष्टुतः।
सत्त्वस्वरूपी भगवान् सर्व्वभूतसमः सुहृत् ॥५६॥
विष्णुस्त्वं व्यापकत्वाच्च महाशक्तिः सनातनः।
अजरश्चामरः सत्यः सद्यशा विश्वरूपवान् ॥५७॥
त्वं नानावतारान् कृत्वा प्रजाः संपालयिष्यसि।
मन्वन्तरेषु सर्व्वेषु ह्यवतारान् करिष्यसि ॥५८॥
यदा यदा हि धर्म्मस्य क्षयो वृद्धिश्च पाप्मनः।
तदा त्वमवतीर्णः स्या धर्म्मवृद्ध्यै अधर्म्मनुट् ॥५९॥
वर्णाश्रमाणामाचारान् बहून् धर्म्मान् प्रवर्त्तयेः[2]।
अहञ्च त्वानुयास्यामि श्रीरित्यंशेन धर्म्मिणी ॥६०॥
यत्र यत्रावतारस्ते[3] तत्र श्रीरवतारिणी।
आदौ कृते युगे देव ब्रह्मचारी भविष्यसि ॥६१॥
द्वितीये नारदो भूत्वा बहूंस्तन्त्रान् करिष्यसि।
वराहमूर्त्त्या पृथिवीमुद्धरिष्यसि लीलया ॥६२॥

---

१ B D ह्येष। २ B D प्रवर्त्तय। ३ B यत्रावतारास्ते।

हिरण्यनयनं नाम तदर्थे संवधिष्यसि ।
ततो भूयस्तपःकर्त्ता नरो नारायणस्तथा ॥६३॥
ततश्च कपिलो भूत्वा सांख्ययोगं वदिष्यसि ।
भविष्यसि ततः षष्ठ[1] आत्रेयो दत्तनामकः ॥६४॥
ततो रुचेः सूतो हूत्यां[2] यज्ञाख्यः संभविष्यसि ।
ततः प्रैयव्रते वंशे ऋषभाख्यो भविष्यसि ॥६५॥
ततो राजा पृथुर्भूत्वा पुरादीन् कल्पयिष्यसि ।
दशमः शफरो भूत्वा [3]वेदान्समुद्धरिष्यसि ॥६६॥
([4]मन्थानं मन्दरं शैलं कूर्म्मः पृष्ठे [5]भविष्यसि ।
तेन देवासुरैरब्धिं मथित्वामृतमाहरेः ॥६७॥
धन्वन्तरिस्ततो भूय आयूर्व्वेदप्रवर्त्तकः ।
नरसिंहस्ततो भूत्वा दैत्यराजं वधिष्यसि ॥६८॥)
रावणं कुम्भकर्णञ्च रामो भूत्वा हनिष्यसि ।
ततश्च वामनो भूत्वा राज्यमाच्छिद्य वै बलेः ॥६९॥
दास्यसीन्द्राय देवाथ ततो गङ्गा प्रवर्त्स्यति ।
भूत्वाथ भार्गवो रामो निःक्षत्रां क्ष्मां करिष्यसि ॥७०॥
भूत्वा महर्षिर्वाल्मीकिर्महाकाव्यं करिष्यसि ।
भूत्वा पाराशरिर्व्यासः पुराणादि करिष्यसि ॥७१॥
ततो लोकविमोहाय बुद्धस्त्वं हि[6] भविष्यसि ।

---

१ B श्रेष्ठः । २ B D कूत्यां । ३ B D वेदांस्त्वमुद्धरिष्यसि ।
४ B Omits the portion braketted ५ C D धरिष्यसि ।
६ C बुद्धो नाम ।

पृथ्वीं तदा धर्म्मद्वेषि[1]भावपीड़ायुतां स्वयम् ॥७२॥
विलोक्य धरणीखण्डे कृष्णरामौ भविष्यसि।
वसुदेवात्तु देवक्यां जन्मनी सप्तमाष्टमे ॥७३॥
गोकुले गोपवृन्दानामीश्वरौ त्वं भविष्यसि।
विहिंसितुं तदा कंसं प्रागेव पूतनादिकान् ॥७४॥
हत्वा गत्वा च मथुरां कंसं शत्रुं हनिष्यसि।
इन्द्रयागं विखण्ड्यैव धर्त्ता गोवर्द्धनं पुरः ॥७५॥
सर्व्वासां [2]गोपरामाणां युवतीनां महोत्सवः।
शृङ्गाररसमिच्छूनां पूरयेस्त्वं मनोरथम् ॥७६॥
तदा मे प्रीतिरधिका त्वदर्थे संभविष्यति।
तत्तु ते पुण्यदं कर्म्म लोके गेयं भविष्यति ॥७७॥
जरासन्धवलं हत्वा भीतस्त्वं यवनात् परम्।
समुद्रे द्वारका[3]नाम्नीं पुरीं पुण्यां करिष्यसि ॥७८॥
छलेन यवनं हत्वा मुचुकुन्दवरप्रदः।
षोड़शस्त्रीसहस्रस्य अष्टोत्तरशतस्य च[4] ॥७९॥
पतिर्भूत्वा तथा मूर्त्तीः कृत्वा तत्र सुखी भवेः।
पुत्रपौत्रादिकां गोष्ठीं कृत्वाग्रे ह्रीभविष्यसि ॥८०॥
तेनैव तु गृहस्थानामाश्रमज्ञानदो भवेः।
जरासन्धवधञ्चैव शिशुपालवधन्तथा ॥८१॥
शौभं शाल्वं निहत्यापि दन्तवक्रं हनिष्यसि।

---

१ B ०द्वेष्टृ०। २ B सर्व्वेषां गोपबालानाम्, C सर्व्वेषां गोपवर्गाणां युवतीनां मनोहरः। ३ C द्वारकांनामपुरीम्। ४ C सप्ततस्याष्टकस्य च।

ततोऽर्ज्जुनस्य कौन्तेय-पाण्डवस्य नरस्य च ॥८२॥
सम्भूय सारथिः श्रीमान् हन्ता दुर्य्योधनादिकान् ।
कृष्णार्ज्जुनौ नामतो वै नरनारायणौ युवाम् ॥८३॥
भूत्वा भारं भुवो हृत्वा पृथ्वीं संसुखयिष्यसि ।
युधिष्ठिरं धर्म्मपुत्रं साक्षाद्धर्म्ममिवापरम् ॥८४॥
धर्म्मसिंहासने भूपं स्थापयित्वा पुरीं व्रजेः ।
ततस्तु ब्रह्मशापेन च्छलेन स्वकुलात्मकम् ॥८५॥
हरिष्यसि धराभारं वैकुण्ठञ्च गमिष्यसि ।
वैकुण्ठाख्यं तव स्थानं पश्य सङ्कल्पितं मया ।
नामानि तव गास्यन्ति पुण्यानि परमानि च ॥८६॥

नारायनाच्युत हरे मधुकैटभारे
गोविन्द केशव भयापह पूतनारे ।
गोपीजनप्रिय वकान्तक नन्दसूनो
चानूरमुष्टिकविनाशक कंसशत्रो ॥८७॥
श्रीदेवकीतनय गोपपते मुरारे
गोपालपालक धराधरराजधारिन् ।
श्रीनाथनाथ गजराजविपत्तिमोचिन्
कंसालये कुवलयेभशिरोविदारिन् ॥८८॥
दामोदर त्रिपदविक्रमलङ्घितार्क-
चन्द्रादिमण्डलविखण्डयशः प्रसीद ।
भूभारहारक नवाम्बुदसान्द्रमूर्त्ते
भूदेव देव वसुधोद्धरणाव्ययात्मन् ॥८९॥

लोकेश गोद्विजसुरार्त्तिहरावतार
भीमानुजातरथसारथिभूत पाहि।
देवप्रलम्बवधकाघविनाशकारिन्
सारिष्टधेनुकविनाशपवित्रनामन् ॥९०॥
विष्णो मुकुन्दपुरुषोत्तमपद्मनाभ-
वैकुण्ठ वामन जनार्दन वासुदेव।
रामानुजात मथुरेश्वर रौहिणेय
व्यामोहनाशन नवाम्बुजनेत्र पाहि ॥९१॥
गोपीपते व्रजपते यमुनाविहारिन्
वृन्दावनेश्वर गदाधर यादवेन्द्र।
वार्ष्णेयसात्वतपते जयसत्यभामा
सूर्य्यात्मजाधर सुधाकर माधवेश ॥९२॥
श्रीरुक्मिणीधव माधव कौस्तुभाभा
शोभाढ्यशार्ङ्गकर कामकलारसज्ञ।
नागेन्द्रमर्दन भयार्दनयज्ञभोक्तः
श्रीमन्नृसिंहहरभक्तहरैकभक्त ॥९३॥
भक्तैकवश्य रघुवीर मनो महर्षे
राजाधिराज जयजीवनरूप कृष्ण।
पाशांशषोड़शसहस्रशताष्टभार्य्या
तत्पुत्रपौत्रसमुपार्जितवंशगेहिन् ॥९४॥
प्रद्युम्नदेव अनिरुद्ध सदानिरुद्ध
सङ्कर्षणाभयदशान्तिकरप्रसीद।

इत्यादि खलु नामानि तव गास्यन्ति नित्यशः।
पाताले शेषशय्यायां लक्ष्मीसंसेवितः स्वराट् ॥९५॥
शिवो ब्रह्मा तथा त्वञ्च न भिन्ना वै कदाचन।
मन्मयाः खलु यूयं यत्तस्माद्भिन्ना न वोऽप्यहम् ॥९६॥
अभिन्नानाञ्च भेदार्थी नारकी परमो मतः।
अहन्तु भवतां सर्व्वकार्य्येषु खलु संस्मृता ॥९७॥
अभीष्टं साधयिष्यामि युष्माकमित्यसंशयम्।
अहञ्च गोपनीया वो नारीणां योनिरूपिणी ॥९८॥
सर्व्वासु खलु नारीषु ममाधिष्ठानमुत्तमम्।
कुमारीषु च सर्व्वासु युवतीषु विशेषतः ॥९९॥
आसां योनिं स्तनं दृष्ट्वा प्रणमेन्मामनुस्मरन्।
कटुवाक्यं तथा पीड़ां पुष्पेणापि च योषिति ॥१००॥
शाक्तो वा वैष्णवः शैवो न कदापि समाचरेत्।
स्त्रीषु पीड़ादिकर्त्ता हि देवान् वैमुख्यमाचरेत्[1] ॥१०१॥
अहं माता हि जगतां सर्व्वासु स्त्रीष्वधिष्ठिता।
मम तन्त्रांश्च मन्त्रांश्च शिवो वक्ष्यति नापरः ॥१०२॥
[2]अहं त्यक्तशरीरैव क्वापि लब्ध्वा जनुः परम्।
द्विधा भूत्वा शिवं प्राप्स्ये चिन्तितव्यो न संशयः ॥१०३॥

---

१ C ० मानयेत्।

२ B अहं त्यक्तशरीरे वै क्वापि लब्ध्वा जनुः परम्।
द्विधा भूत्वा शिवं प्राप्स्ये चिन्तितं वो नसंशय ॥
D चिन्तितं वो न संशयः।

यूयं परस्परं कार्य्यं[1] सहायाः कुरुत क्रियाः[2]।
मया निरीक्षिताः सर्व्वे शक्तिमन्तो न चान्यथा ॥१०४॥

शुक उवाच।

इत्युक्त्वान्तर्दधे देवी ब्रह्मविष्णू ततो गतौ।
शिवश्च नारदापेक्षी कामरूपे तपःस्थितः ॥१०५॥
सती च त्यक्तदेहा सा द्विधा भूत्वा हिमालयम्।
जगाम मेनकागर्भेऽभवत् कन्याद्वयं[3] द्विज ॥१०६॥
सत्यामृतां तनुं शम्भुः शिरसा विदधे यदा।
तदैव शम्भुमौलौ सा वासं प्राप सती शुभा ॥१०७॥
तदर्थं शिरसि स्थातुं शम्भोः किल सती शुभा।
गङ्गा बभूव मेनायां उमा तस्याः स्वसानुजा।
तत्रादौ जन्मकर्म्माणि गङ्गायाः शृणु[4] कथ्यते ॥१०८॥

इति श्रीबृहद्धर्म्मपुराणे मध्यखण्डे सतीब्रह्मादिसंवादनामैकचत्वारिंशोऽध्यायः।

---

१ C कार्य्यं०। २ B क्रियाम्। ३ C स्वयं। ४ B खलु।

# द्विचत्वारिंशोऽध्यायः।

शुक उवाच।

या मेना तु मनोरमा सुरगिरेः कन्या ततः सम्भवा
गङ्गा स्वर्गपुरं गता सुरगणैर्नीता च भाण्डे विधेः।
तच्चैवाप पतिं शिवं हरितनुं याता द्रवीकारितां
सा विष्णोश्चरणाद्भगीरथवशात् त्रैलोक्यगा स्वर्धुनी ॥१॥
सती देहं परित्यज्य दक्षयज्ञे महामुने।
पुनः सा जन्मने शैलं ययौ देवी हिमालयम् ॥२॥
पुत्री सुमेरोः सुभगा मेना नाम मनोरमा।
तस्या गर्भे जनुर्लेभे सती गङ्गेति योच्यते[1] ॥३॥
वैशाखे मासि शुक्लायां तृतीयायां दिनार्द्धके।
बभूव देवी सा गङ्गा शुक्ला सत्ययुगाकृतिः ॥४॥
सुतायां तत्र जातायां शैलराजो हिमालयः।
बभूव परमप्रीतो मङ्गलञ्चाकरोद्बहु ॥५॥
दिने दिने च सा कन्या ववृधे गिरिवेश्मनि।
त्रिनेत्रा शुक्लवर्णा सा चतुर्बाहुः सुलोचना ॥६॥
एवम्भूताञ्च तां दृष्ट्वा सर्व्वे मुमुदिरे द्विज।
तत्र शैलाधिराजस्य ववर्द्धे स्नेह उत्तमः ॥७॥

---

१ C चोच्यते।

तस्यां सुतायां चार्व्वङ्ग्यां कोटिचन्द्रसमत्विषि।
स्फुरद्दागिव सा जाता गते मासचतुष्टये।
अथ देवालये देवानभ्यभाषत नारदः ॥८॥

नारद उवाच।

देवा ब्रह्मादयः सर्व्वे शृणुतेदं मयेरितम्।
त्यक्तदेहा सती जाता हिमालयगृहे सुता ॥९॥
इयमेवाभवद्गङ्गा[1] भागार्द्धेन महाप्रभा।
भागार्द्धमपरञ्चापि[2] तत्रैवोमा भविष्यति।
साम्प्रतन्तु वयं गङ्गां भुवि द्रक्ष्यामहे वयम् ॥१०॥

देवा ऊचुः।

अहो नारद किं सत्यं प्राप्तदेहा सती पुनः।
वद गत्वा शिवं शीघ्रं सतीविरहदुःखिनम् ॥११॥

नारद उवाच।

अहो यूयं न जानीध्वमविचार्य्य वचो हि वः।
मया यदुच्यते वाक्यं तद्विचारयताखिलम् ॥१२॥
यदा शम्भुः सतीं धृत्वा शिरसा संननर्त्त ह।
तदा तस्य महानृत्यसुखं युष्मद्विनाशितम्।
तेनानन्दविरोधेन शिवो वोऽद्यापि दुःखितः ॥१३॥
अतः शिवस्य सन्तुष्ट्यै शिवाय गिरिजां सतीम्।
वयमेव हि दास्यामः समानीतामिहैव हि ॥१४॥

---

१ B एषा। २ C परमस्यापि।

अत आदौ गिरिसुतां गङ्गामानयतामराः ।
पश्चाच्छिवो ज्ञापनीयो लब्धा दाक्षायणीति वै ॥१५॥

देवा ऊचुः ।

कथं शैलो महाभागो देवीं त्यच्यति नः सुरान् ।
कथं वा तं परित्यज्य दिवं देव्यागमिष्यति ॥१६॥
सा देवी भक्तिसुलभा भक्तिमांश्च हिमालयः ।
आगमिष्यति किं देवी तस्मादस्माकमालयम् ॥१७॥

नारद उवाच ।

यूयं देवा महात्मानो दातारं तं हिमालयम् ।
याचध्वं स हि वो दाता गङ्गां दास्यति नान्यथा ।
गङ्गा च संस्तुता स्वर्गं[1] युष्माकमागमिष्यति ॥१८॥

शुक उवाच ।

इत्युक्ता नारदेन[2] ते देवा ब्रह्मादयोऽखिलाः ।
एवमेवेति निश्चित्य तथा कर्त्तुं समुद्यताः ॥१९॥
ब्रह्मा[3] इन्द्रः कुवेरश्च वरुणश्च यमस्तथा ।
हिमालयगृहं गन्तुं मतिं चक्रुस्त्वरान्विताः ॥२०॥
गङ्गा चात्मानममलां हिमालयमदर्शयत् ।
स्वप्ने ददर्श तां शैलश्चारुरूपां चतुर्भुजाम् ॥२१॥
शुक्लां त्रिणयनां देवीं मकरासनसंस्थिताम् ।
चतुर्भुजां वरं पद्ममभयं चामृतं तथा ॥२२॥

---

१ D B स्वर्गे । २ B नैव । ३ D ब्रह्मेन्द्रश्च ।

दधानां युवतीं चारु सर्व्वाङ्गीं सस्मितान्नाम्।
नानाभरणभूषाढ्यां प्रणतां सर्व्वदैवतैः॥२३॥
भासयन्तीं दिशः सर्व्वाः स्वया कान्त्या समन्ततः।
पापभूधरदावाग्निशिखामिव हि सर्व्वतः॥२४॥
एवं सा स्वं[1] निजं रूपं दर्शयित्वा हिमालयम्।
अभ्यभाषत देवानां प्रविधातुमनुग्रहम्॥२५॥
शैलाधिराज धर्म्मात्मन् तवाहं तनया शुभा।
श्रुतं ते दक्षसवने[2] जहौ दाक्षायणी तनुम्॥२६॥
सैवाहमर्द्धभागेन त्वत्तो लब्धवती वपुः।
पुनरन्या भविष्यामि दुहिता ते सुलोचना॥२७॥
मां नेतुं स्वर्गममरास्त्वामायास्यन्ति याचकाः।
तेषां दास्यसि तत्रैव पतिं प्राप्स्याम्यहं शिवम्॥२८॥
लब्ध्वा[3] न्यान्तनयां तस्मै शिवायाहूय दास्यसि।
अहं देवोपरोधेन स्वर्गं यास्यामि भूतलात्॥२९॥
मद्विच्छेदान्महा विमोहं भवान् क्वापि करिष्यति।
एतदर्थं पुरोऽवोचं मोहशान्तिकरं वचः॥३०॥
इत्युक्त्वान्तर्दधे देवी शैल उत्थाय तत्पतः।
चिन्तयामास यद्दृष्टं श्रुतं स्वप्ने किलाद्भुतम्॥३१॥
तस्याश्च[4] दुहितुस्तत्त्वं सर्व्वं ज्ञात्वा धराधरः[5]।
मोहं तत्याज कन्येयं ममेति यः[6] पुरा कृतः॥३२॥

---

१ C सारं। २ B भवने, C शरणे। ३ B त्वन्त्वन्यां।
४ C ०तु। ५ धरोत्तमः। ६ C या पुरा कृता।

शयने भोजने स्नाने कथायाञ्च सदा गिरिः ।
दध्यौ तां परमां देवीं देवदेवीभिरर्च्चिताम् ॥२३॥
अथागताः पञ्च देवा अवतीर्य्य नभस्तलात्[१] ।
हिमालयं महाभागं ददृशुः स्मितभाषिणः ॥२४॥
हिमालयस्तान् पञ्चैव स्वतेजोभिः समुज्ज्वलान् ।
पूजयामास विधिवद्ब्रह्मबुद्ध्या महाप्रभान् ।
आसनेषूपविष्टांस्तान् शैलराजोऽभ्यभाषत ॥२५॥

हिमालय उवाच ॥

के यूयं सुप्रभावन्तः किमर्थं वा समागताः ।
ममात्र वान्यत्र वा वो विद्यते कार्य्यमुत्तमम् ॥२६॥

देवा ऊचुः ॥

वयमेते महाभाग देवास्ते निकटागताः ।
किञ्चिदर्थं याचितुं च समायाताः शृणुष्व तत् ॥२७॥
अयं ब्रह्मा अयञ्चेन्द्रो यमोऽयं वरुणोऽप्ययम् ।
अयं कुवेर आख्यातः[२] पञ्चैते देवताधिपाः ॥२८॥
कश्चिदस्ति महावृक्षो नानाविधफलैर्युतः ।
तस्यैकन्तु फलं नेतुमागता वै वयन्त्विमे ।
सहायो भव तत्र त्वं येन तत् फलमाप्नुमः ॥२९॥

शुक उवाच ॥

श्रुत्वैवं वचनं तेषां शैलराजो हिमालयः ।
ज्ञातवान् खलु गङ्गान्तां नेतुकामान् सुरोत्तमान् ॥४०॥

१ D नभस्थलात् । २ C ख्याख्याताः ।

गङ्गाया वचनं श्रुत्वा दृष्ट्वा च तान् सुरोत्तमान् ।
गङ्गात्यागं सुदुःसहं चिन्तयित्वाऽब्रवीच्च[1] तान् ॥ ४१ ॥

हिमालय उवाच ॥

ज्ञाता यूयं मया[2] देवा ब्रह्माद्याः परमोदयाः ।
युष्माकञ्च समायातं महाभाग्योदयोद्भवम् ॥ ४२ ॥
एवञ्च खलु जानामि तथाप्येवं निवेदये ।
अचलोऽहं विधिकृतः क्व यास्यामि ह्यशक्तिकः ।
कोऽसौ वृक्षो न जानेऽसौ फलं वा तस्य कीदृशम् ॥ ४३ ॥

देवा ऊचुः ॥

अस्ति सोऽसौ महावृक्षो भवतो वशगोऽपि च ।
फलञ्च त्वद्वशे तस्य वर्त्तते नात्र संशयः ॥ ४४ ॥
ददासि चेत् स्वच्छन्दा वयञ्च प्राप्नुमस्तदा ।
सर्व्वः स्वार्थपरो लोको न वेद परसङ्कटम् ।
यदि वेद न याचेत नेति नाह यदीश्वरः ॥ ४५ ॥

हिमालय उवाच ।

अस्ति तावन्महावृक्षः फलन्तस्य च वर्त्तते ।
अनिष्पन्नं तच्च फलं तद्विच्छेदोऽतिदुःसहः ॥ ४६ ॥

देवा ऊचुः ।

वृक्ष एव फलं धत्ते परार्थमेव नान्यथा ।
उपस्थितेभ्यः पात्रेभ्यो दत्तं स्यात्तद्धि[3] सार्थकम् ॥ ४७ ॥

---

१ C अब्रवीति तान् । २ B महा । ३ C तत्स्याद्धि ।

विशेषतो वयं देवास्तत्फलार्थाः समागताः ।
न प्रत्याख्याहि शैलेश भव नानीश्वरोऽपि च ॥४८॥

शुक उवाच ॥

एवं तद्वचनं श्रुत्वा विवचुं तं धराधरम् ।
ज्ञात्वा गङ्गा समागत्य कन्यारूपेण चाब्रवीत् ॥४९॥

कन्योवाच ॥

किं देवैः सह संवादं कुरुषे पार्थकं पितः ।
यद्ब्रुवन्ति तद्देवेष्टं समाचर धराधर ॥५०॥
अहं ते निकटस्थैव किं प्राकृत इवाचर ।
अदूरस्थापि दूरस्था कर्मविक्षिप्तचेतसाम् ॥५१॥
दूरस्थापि हृदिस्थाहं सदा भक्तिमतामिह ।
भक्त्याहमेकया ग्राह्या न ध्यानान्न च दर्शनात् ।
अतस्ते निकटस्थां मां न दूरस्थां विचिन्तय ॥५२॥

हिमालय उवाच ॥

स्वयञ्चेद् यद्यसौ देवी गन्तुमिच्छति वः पुरम् ।
तदहं केन यत्नेन रक्षिष्याम्यविदूरतः ॥५३॥
किन्तु सन्मुखतो वाक्यं यातु चेति न निःसरेत् ।
देव्या अभिमतं मत्वा कुरुध्वमुचितं सुराः ॥५४॥

शुक उवाच ॥

इत्युक्तास्ते सुरगणाः प्रफुल्लवदनास्तदा[१] ।
आकाशे वर्त्तमाना वै देवीं भक्त्या प्रतुष्टुवुः ॥५५॥

---

१ C तथा ।

त्वां नमस्यामहे देवीं सतीं सज्जनसेविताम्।
महाप्रभावां देवेशीं नित्या[1]माकाशवासिनीम् ॥५६॥
अजामाद्यामनन्ताञ्च प्रकृतिं परमेश्वरीम्।
दुर्गमां सुगमां गङ्गां कोटिब्रह्माण्डवासिनीम् ॥५७॥
आदिशक्तिं महाशक्तिं शुक्लां सत्यस्वरूपिणीम्।
तरुणीं रूपसम्पन्नां सेवनीयां कलावतीम् ॥५८॥
गीतां गणेश्वरीं वन्द्यां वन्द्यवन्द्यां त्रिलोचनाम्।
त्रिगुणामगुणां शुद्धां परमां पापनाशिनीम् ॥५९॥
पवित्रनाम्नीं पुण्याख्यां पुण्यकीर्त्तिमनामयाम्।
अव्ययां पावनीं रामां वामाचीं वीररूपिणीम् ॥६०॥
वरदामीश्वरीं बालां त्रिजगद्रूपरूपिणीम्।
एवं प्रणमतां तेषां सुराणां गिरिजा सती ॥६१॥
त्यक्त्वा भूमितलं याता ब्रह्मादिनिकटं नभः।
तान्ते सुदुर्लभां लब्ध्वा मुदा परमया युताः[2] ॥६२॥
ययुः स्वर्गपुरं सर्व्वे सर्व्वे देवा मुदं ययुः।
सदा तां परमानन्दमयीं गिरिसुतां शिवाम् ॥६३॥
सेवमानाः सुरगणा मुदमापुः सुदुर्घटाम्।
मेनकाद्यास्तनालोक्य तां देवीं पुत्री[3]रूपिणीम् ॥६४॥

---

१ C नित्य।

२ C B add. अन्तर्द्धाय स्थितां गुप्तां तदा ब्रह्मा कमण्डलौ।
तां नीत्वा ते तदा देवा ब्रह्मेन्द्रवरुणादयः।

३ B पुत्र D पुत्रि।

व्यामुग्धा हा हता नष्टा क सा बालेति चारुदन्।
प्रबोधिताश्च शैलेन ज्ञात्वा वृत्तान्तमादितः ॥६५॥
अभिशेपुस्तदा गङ्गां दुःखेन महता तदा।
यदस्मान्नाभिनन्द्यैव गता स्वर्गं निजेच्छया ॥६६॥
तस्माद्भूयो नदी भूत्वा स्थलादुच्चैरधःपतेः।
गां स्वर्गं सङ्गता यस्मात्तस्माद्गङ्गाभिधा भव ॥६७॥
वयं तदपरां प्राप्य पुनर्निर्वृतिमाप्नुमः।
ततो यातेषु कालेषु नारदो देवदर्शनः।
ययौ यत्र[1] महादेवः सतीं ध्यायंस्तपस्यति ॥६८॥

नारद उवाच ॥

नारदोऽहं महादेव प्रणमे त्ववधेहि माम्।
सती भूयः प्रलब्धा ते तां द्रष्टुमुद्यमं कुरु ॥६९॥

शुक उवाच ॥

शिवोऽद्भुतमिव[2] श्रुत्वा रोमाञ्चिततनुर्मुने।
किं किं किं किं कुतः कुत्रेत्यूचे तूर्णं मुहुर्मुहुः ॥७०॥
आसनात् सहसोत्थाय गन्तुमैच्छद्दिदृक्षया।
सर्व्वतश्चारयंश्चक्षुश्चकितो हरिणो यथा।
क गन्तव्यं क गन्तव्यं सती सा मे क वेति च ॥७१॥

नारद उवाच ॥

प्रभो महेश ग्राम्यस्व किमेवं वदसे वचः[3]।
क्षणं संस्तभ्य मद्वाक्यं[4] सावधानः शृणुष्व च ॥७२॥

१ B तत्र। २ B D इति। ३ B ततः। ४ D मे वाक्यम्।

धीरो भव न चाधैर्य्यं कृत्वा कार्य्यं करिष्यसि।
अधैर्य्येणावसन्ना हि[1] ध्वस्तकार्य्या भवन्ति वै ॥७३॥
मया नानास्थलं भ्रान्त्वा भूपातालखरादिकम्।
सती हिमवतः क्षेत्रे लब्धदेहा मयेक्षिता ॥७४॥
शुक्ला चतुर्भुजा चारुनेत्रत्रयविराजिता।
आसीना मकरे शुक्ले प्रफुल्लवदनाम्बुजा ॥७५॥
शिवेशान महादेव प्रभो स्वामिन्महेश्वर।
एवं जपन्तीं[2] सततं सती दृष्टा मया तव ॥७६॥
आनीता च स्वर्गपुरं हिमालयगृहात् सुरैः।
ब्रह्मेन्द्रवरुणैः कालकुवेराभ्यां प्रयत्नतः।
अधुना वर्त्तते स्वर्गे तां गत्वा पश्य सुन्दरीम् ॥७७॥

शिव उवाच।

जीव जीव चिरं वत्स महर्षे देव नारद।
त्वया पुनर्मे देहेऽस्मिन् प्राणाः संक्रामिता इव ॥७८॥
आलिङ्गयामि ते पुत्र चारु शुक्लतरं वपुः।
त्वमेव खलु जानीषे सतीं प्राणाधिकां मम।
व्रजयामि त्वया सार्द्धं यत्र सा मे सती प्रिया ॥७९॥

शुक उवाच ॥

इत्युक्त्वा वृषमारुह्य नन्दिना सह शङ्करः।
ययौ स्वर्गं पुरं यत्र गङ्गा वसति पार्व्वती ॥८०॥

---

१ B अधैर्य्येणैव सर्व्वे हि। २ D जल्पन्ती।

शिवमागतमाकर्ण्य सर्व्वे तत्र दिवौकसः ।
ब्रह्माद्या मिलिताः सर्व्वे सभां चक्रुः सुशोभनाम् ॥८१॥
आगतास्तत्र दिक्पालाः सायुधाः सहवाहनाः ।
सहस्रैः परिवारैश्च सायुधैः सबला मुने ॥८२॥
नानाभरणभूषाढ्या मुदिताः परमादरैः ।
दिदृक्षवश्चिरात्तष्टपार्व्वतीशिवसङ्गमम् ॥८३॥

इति श्रीबृहद्धर्मपुराणे मध्यखण्डे शुकजैमिनिसंवादे
गङ्गाजन्मकथनं नाम द्विचत्वारिंशोऽध्यायः ॥

---

# त्रिचत्वारिंशोऽध्यायः ।

शुक उवाच ।

अथ सर्व्वे तदा देवाः सह सर्व्वैश्च तां सभाम् ।
प्राविशन्मेरुशिरसि सर्व्वदेवगणालये ॥१॥
सभामध्ये तदा गङ्गा बभौ चन्द्रचयोज्ज्वला ।
सर्व्वेन्द्रियाभिमुख्येन परमेवात्मरूपिणी ॥२॥
तस्याश्च चारुसर्व्वाङ्ग्या मुखचन्द्रं समुज्ज्वलम्[1] ।
आनन्दामृतपानस्य पात्रं नेत्रैरलभ्यत ॥३॥
नेत्राणि शम्भोस्तद्वक्त्रं वीक्षमाणानि यत्नतः ।
कालान् संयापयामासुस्तृप्तिं नाप्तानि जैमिने ॥४॥
सर्व्वे देवास्तदा देव्यै गङ्गायै सुमुदान्विताः ।
मालामेकां ददुः शुक्लां शुभां चान्द्रमसीमिव ॥५॥
सा च गङ्गा समुत्थाय तां मालां प्राप्य जैमिने ।
ददौ शिवाय देवाय शङ्कराय महात्मने ॥६॥
सा च माला प्रभोर्मूर्द्ध्नि विरराज विराजिता ।
न च मौलिं परित्यज्य गता कण्ठस्थलं तदा ॥७॥

---

१ B तस्याश्चारुसर्व्वाङ्गमुखचन्द्रं समुज्ज्वलम् ।

यदा माला मौलिगता शिवस्याभून्महामुने।
दशदिक्षु तदा भूता जयशङ्खादिनिस्वनाः।
महादेवः प्रियां मालां प्राप्य देवानुवाच ह ॥८॥

शिव उवाच।

इयं माला मया देवा गृहीता शिरसैव हि।
शिरसैव धृता भार्य्या गङ्गेयमिति मन्यताम् ॥९॥
यदा मृतवपुः सत्याः शिरसा धृतवानहम्।
तदैव मे शिरोवासमियं प्राप मनस्विनी ॥१०॥
वस्तुतो हृदि मे योगो वामाङ्गे शक्तिरस्ति मे[1]।
दक्षिणाङ्गन्तु वै पुंसां कन्यापुत्रादिधारकम् ॥११॥
तस्मात् सम्यग्विचार्य्यैव शिरसीयं धृतैव मे।
एतद्विज्ञाय यूयञ्च संशयं त्यजत ध्रुवम् ॥१२॥

शुक उवाच।

इत्युक्तास्ते देवगणाः शिववाक्यामृतं परम्।
विमुक्तसंशयाः सर्व्वे प्रणेमुः शिवमुत्तमाः ॥१३॥
तन्मालाशिरसं देवमद्भुतं ददृशुः शिवम्।
शिवशक्तिमयं ब्रह्ममूर्त्तं चक्षुरिवागतम् ॥१४॥
गङ्गां नीत्वा जिगमिषुं शिवं बुद्ध्वा विधिस्तदा।
विनयेनाभिसङ्गम्य चतुर्वक्त्रैरभाषत ॥१५॥

---

१ B शक्तिरस्तु। D °योगो वामाङ्गे शक्तिरस्तु मे।

ब्रह्मोवाच ।

इयं गङ्गा चितौ जाता प्राप्तास्माभिस्तु भिक्षया ।
तुभ्यं दत्ता वरायैषा दुहितेवामलानना ॥ १६ ॥
कञ्चित्कालमिहैवास्तु पितृगेहे सुरालये ।
अतीते कतिचित्काले तव गेहं गमिष्यति ॥ १७ ॥

शिव उवाच ।

दत्ता युष्माभिरेवेयं कथं पुनरपेक्षते[1] ।
नारीणां चिरवासो हि बान्धवे नोपपद्यते[2] ॥ १८ ॥
तस्मादद्यैव मे गेहमियमायातु सर्व्वथा ।
अथवेयं स्वमेवेष्टं ब्रवीतु तद्धि मे मतम् ॥ १९ ॥

गङ्गोवाच ।

ब्रह्मन्नहं शिवं प्राप्ता दत्ता युष्माभिरेव च ।
विना शिवं न मे युक्ता स्थितिः कुत्रापि सम्भवेत् ॥ २० ॥
यूयञ्च भक्तिमन्तो मां प्राप्ता एव न चान्यथा ।
अतः कमण्डलौ ब्रह्मन्मम वासश्चिरन्तनः ॥ २१ ॥
न त्याज्यः स च मे वासो देव ते वै कमण्डलुः ।
नित्यं ह्यधिष्ठिता तत्र तव ब्रह्मन् कमण्डलौ ॥ २२ ॥
यदा युष्मत्कार्य्यकाले तत्क्षणे मां प्रलप्स्यथ ।
मूर्त्ता लेषा सदा शम्भोः स्थास्यामि निकटे किल ॥ २३ ॥
अहं शिवा[3] शिवो ह्येष नावयोर्विच्छिदा क्वचित् ।

1 A अपेक्ष्यते । 2 C ॰पयुज्यते । 3 A शिवो ।

सदा भक्तिमताञ्चापि निकटेषु वसाम्यहम् ।
एवं विज्ञाय सन्देहं त्यक्त्वा [सुख][१]मवाप्नुत ॥२४॥

ब्रह्मोवाच ।

एवमेव महेशानि गिरिजे शिवसुन्दरि ।
त्वदीया हि वयं सर्व्वे यथोचितमथो कुरु ॥२५॥

शुक उवाच ।

इत्युक्त्वा ते तदा देवा ब्रह्माद्या ब्रह्मणो मुखात् ।
प्रणेमुः शिरसा भक्त्या शिवं गङ्गाञ्च तत्पराः ॥२६॥
गङ्गा च मूर्त्तिभागेन शिवं प्राप्ता जगाम सा ।
अन्तर्द्धानांशभागेन स्थिता ब्रह्मकमण्डलौ ॥२७॥
देवाः सर्व्वे यथास्थानं गता एव यथागतम् ।
ब्रह्मा ययौ ब्रह्मलोकं मुदा परमया युतः ॥२८॥
कमण्डलुगतां गङ्गां बुबोध परमार्थतः ।
गङ्गां कमण्डलौ कृत्वा ब्रह्मलोकं जगाम सः ॥२९॥

इति श्रीबृहद्धर्म्मपुराणे मध्यखण्डे शिवगङ्गा-
समागमस्त्रिचत्वारिंशोऽध्यायः ॥

---

१ B omits the portion Backetted.

# चतुश्चत्वारिंशोऽध्यायः ।

शुक उवाच ॥

गते शिवे तु कैलासं गङ्गां नीत्वा शिरःस्थिताम् ।
ययौ च नारदो विप्र वैकुण्ठं देवसत्तमः ॥१॥
ददर्श स च वैकुण्ठे देवं नारायणं प्रभुम् ।
लक्ष्मी-सरस्वती-युक्त-पार्श्व-द्वन्द्वं महाप्रभम् ॥२॥
नारदोऽहं नतोऽस्मीति प्रणनाम हरिं प्रभुम् ।
स च नारायणो देवो नारदं देवदर्शनम् ॥३॥
ददर्श सहसा[१] भातं जटा-मण्डल-धारिणम् ।
शङ्खश्वेतं महोरस्कं दीर्घमाजानुबाहुकम् ॥४॥
श्वेताम्बरधरं दिव्यं दिव्यभावयुतं सदा ।
वीणा-तन्त्रीं-लसत्पाणि-पद्माङ्गुलिदलं मुनिम् ॥५॥
तं दृष्ट्वा पूजयामास पाद्यार्घ्याचमनासनैः ।
ततः पप्रच्छ सहसा तदागमनकारणम् ॥६॥

नारद उवाच ।

प्रभो देव जगन्नाथ दक्षकन्या सती पुनः ।
हिमालयगृहे जाता देहं लब्धवती बभौ ॥७॥
सा भूतलात् समानीता स्वर्गं ब्रह्मादिपञ्चभिः ।
तत्रैव सा सुरैर्दत्ता शम्भवे परमप्रभा ॥८॥

---

१ D सहसा ।

तां प्राप्य स ययौ स्थानं कैलासं गङ्गया सह ।
ब्रह्मा कमण्डलुस्थां तां बुद्धा नीत्वा ययौ निजम् ॥९॥
एतदेव प्रभो तुभ्यं मयागत्य निवेदितम् ।
न दृष्टं भवता तादृक् परमाद्भुतमीश्वर ॥१०॥

हरिरुवाच ।

अहो प्राप्तः सतीं शम्भुः प्रनष्टामिव[१] वै चिरम् ।
तथाभूतमहं तस्य द्रक्ष्याम्येव न संशयः ॥११॥
गत्वा द्रक्ष्याम्यहं तौ वा तौ वात्रागच्छतां मम ।
किमत्र ब्रूह्यनुष्ठेयं देवर्षे ननु नारद ॥१२॥

नारद उवाच ।

[२][तव वैकुण्ठभवनं तावेवागच्छतामिदम् ।
गङ्गा पश्यतु वैकुण्ठं तवेमं पुरमुत्तमम् ॥१३॥
इदमेव मतं मेऽस्तु यद्युक्तं तत्समाचर ।
अहं गायामि निकटे तवेति यदि मन्यसे ॥१४॥

हरिरुवाच ।

गाय नारद देवर्षे वीणापाणे महामते ।
गानन्तु परमं ब्रह्म विधिरूपेण तद्भवेत् ॥१५॥]

नारद उवाच ।

त्वन्तु ब्रह्म परं विष्णो गानञ्च ब्रह्म चाव्ययम्[३] ।
उभयं मिलितञ्चास्तु लक्षयामीति मन्यते ॥१६॥

---

१ A प्रणष्टामपि । २ A B D omit the portion bracketted.
३ B C D चाद्वयं ।

हरिरुवाच।

यथाविधि कृतं गानं जगन्मोहयते चिरात्।
तस्माद्यथाविधानं वै गाय नारद श्रूयते ॥१७॥
सौस्वर्य्यञ्च विधिज्ञानं गाने द्वयमपेक्ष्यते।
अतिशेते विधिज्ञानं सौस्वर्य्यन्तु[1] फलाधिकम् ॥१८॥
पदाली तु पदार्थानां वाचिका न तु दर्शिका।
स्वरबन्धविशेषेण रससाक्षात्करी तु सा ॥१९॥
मूलाधारे वसेदग्निस्तस्मान्नादोऽभिपद्यते।
पञ्चस्थानानि भित्त्वासौ व्यक्तो भवति मूर्द्धनि ॥२०॥
नाभौ सूक्ष्मोऽतिपूर्व्वः स्यात् सूक्ष्मो हृदि विशिष्यते।
कण्ठे भवति चाव्यक्तो मुखे कृत्रिमतां व्रजेत् ॥२१॥
मूर्द्धनि च तथाऽव्यक्तो नाद एष प्रकीर्त्तितः।
नाभेश्च मूर्द्धपर्य्यन्तं सन्ति द्वाविंशतिः क्रमात् ॥२२॥
श्रुतयो नाम विख्याता दयावत्यादयो मताः।
ता वै चतस्रो द्वे तिस्रश्चतस्रस्तिस्र एव च।
द्वे च षट् च[2] संहताः स्युः षड्जाद्याः सप्त वै स्वराः ॥२३॥
षड्जश्च ऋषभश्चैव गान्धारो मध्यमस्तथा।
पञ्चमो धैवतश्चैव निषादश्चैव [3]तत्क्रमात् ॥२४॥
एते सप्तस्वराः प्रोक्तास्त्रिधैषां गतयो मताः।
घोरी मन्द्र[4]स्तथोच्चैश्च स्वरबन्धविशेषकाः ॥२५॥

---

१ D सौस्वर्य्यञ्च। २ D षट्सु संहताः। ३ ते क्रमात्।
४ B D मद्रुः, C मन्द्र।

स्वरप्रबन्धनामानो रागा रागिण्य एव च।
कोटयः पञ्चलक्षाणि पञ्च तद्वत् सहस्रकम्॥२६॥
रागिण्यश्चैव रागाश्च शिवकण्ठे वसन्त्यमी।
तेषां प्रधानभूताश्च षड्रागाः कामदादयः॥२७॥
षट्त्रिंशदपि तेषां वै भार्य्या दासीसमन्विताः।
सालङ्काराः सुरूपास्ता परमानन्दमूर्त्तयः॥२८॥
एवन्तु खलु रागाणां सुसम्यक् प्रतिपत्तये।
आरोहन्त्यवरोहन्ति सञ्चरन्ति स्वरा द्विजः॥२९॥
आरोही चावरोही च सञ्चारी तेन ते त्रिधा।
एते यन्त्रेष्वपि प्रोक्ता यन्त्रकण्ठावुभौ समौ॥३०॥

नारद उवाच।

रागाणां वद नामानि रागिणीनाञ्च सत्तम।
काश्च दास्यः परिप्रोक्ता दासा वा कमलेक्षण॥३१॥

हरिरुवाच।

कामदश्च वसन्तश्च मल्लारश्च विभाषकः।
गान्धारो दीपकश्चैव रागा एते षडीरिताः॥३२॥
मायूरी तोटिका गौड़ी वराड़ी च विलोलिका।
धानाश्रीरपि विख्याता कामदस्य प्रिया शुभा॥३३॥
वागीश्वरी शारदी च श्यामा वृन्दावनी तथा।
वैजयन्ती जयन्ती च दास्य एताः प्रकीर्त्तिताः॥३४॥
परजश्चैव दासश्च भवेत् कामदकस्य हि॥३५॥
केदारी चैव कल्याणी सिन्धुरा सुहया तथा।

अश्वारूढ़ा च कार्णाटी वसन्तस्य प्रिया मता ॥३६॥
श्यामकेली देवकेली मालिनी कामकेलिका।
सम्भावती सम्बरा च दास्यस्तासां क्रमात् स्मृताः ॥३७॥
हिल्लोल इति[१] विख्यातो वसन्तरागकिङ्करः ॥३८॥
नटी च सुरहट्टी च पाहिड़ी चारुरूपिणी।
नीला जयजयन्ती च षड्ग मल्लारयोषितः ॥३९॥
चक्रवाकी चन्द्रमुखी रसिका च विलासिका।
यामिनी श्यामघटिका दास्यस्तासां क्रमात् स्मृताः[२] ॥४०॥
[३][रामकेली च ललिता कोड़रा कौमुदी तथा।
भैरवी शर्व्वरी चैव विभाषस्य प्रिया मता ॥४१॥
तरङ्गिणी नागिनी च किशोरी हेमभूषणा।
कल्लोलिनी भीमनेत्रा दास्यस्तासां क्रमान्मताः] ॥४२॥
श्यामघोटक इत्याख्यो विभाषस्य तु किङ्करः ॥४३॥
श्रीवैं रूपवती गौरी धानसी च तथापरा।
मङ्गलाख्या[४] च गान्धर्व्वी गान्धारस्य प्रिया इमाः ॥४४॥
पटमञ्जरी च मञ्जीरा महापद्मावती तथा।
वेलावली[५] च भूपाली गन्धिनी चेति दासिकाः ॥४५॥
गौड़राज[६] इति ख्यातो दासो गान्धारसेवकः ॥४६॥

---

१ B हिन्दोल इह। C मधुनामा च।
२ B मताः।
३ B omits the portion bracketted.
४ B मङ्गलाख्यातं।
५ B वेलावती। D वेयावती। ६ B गौरराज।

उत्तरी पूर्व्विका चैव गुर्ज्जरी कालगुर्ज्जरी ।
तथा गोण्डकरी[1] ख्याता मालेति दीपकप्रिया ॥४७॥
दीपहस्ता दीपवर्णा दीपकर्णा प्रदीपिका ।
दीपाची दीपवक्त्रा च दास्यस्तासां प्रकीर्त्तिताः ॥४८॥
प्रदीपनाभ इत्याख्यो विख्यातो दास एव च ॥४९॥
एते प्रोक्ता रागवर्गा गाय नारद तत्त्ववित् ॥५०॥

शुक उवाच ।

नारदस्तु तथेत्युक्त्वा गातुं समुपचक्रमे ।
यत्नवान् परमो भूत्वा वीक्षमाणो मुखं हरेः ॥५१॥
ये प्रोक्ता हरिणा रागाः साक्षाद्दामयितुञ्च तान् ।
[2]साक्षाद्देवमुनिश्रेष्ठो न चाशक्यत सर्व्वशः ॥५२॥
कश्चित् स्थानपरिभ्रष्टः खञ्जः पथि रुजा स्थितः ।
कश्चित् काणो भिन्नवर्णः कश्चिद्रागोऽपि विक्लवः ॥५३॥
कश्चिद्दुर्व्वलतां यातः कश्चिद्दलितभूषणः ।
पत्नीहीनः कोऽपि कोऽपि[3] कश्चिद्बधिरतां गतः ॥५४॥
एवं विघटिता रागा नारदेन कृतास्तदा ।
आवृत्य वसनेनास्यं जहासे यत् सरस्वती ।
तत् दृष्ट्वा तत्यजे गानं नारदो म्लानवक्त्रतः ॥५५॥

हरिरुवाच ।

गानाद्विरम देवर्षे कृतं गानं विलक्षणम् ।

---

१ B गण्डकरी । D गोण्डकिरीं । २ C ऐच्छन् ।
३ D हीनः कोऽपि ।

नवशिचापरीपाकाद्गानविच्चं भविष्यसि ॥५६॥
गानं कुरुष्व चेत्युक्तो यो गायति स मूढधीः।
जिज्ञासोर्निकटे विप्र तस्य गानं विधिच्युतम् ॥५७॥
अतएव न गायेत प्रोक्तो जिज्ञासुना क्वचित्।
मया जिज्ञासुना लब्ध गायेत्युक्तस्त्व गीतवान् ॥५८॥
उत्तिष्ठ मत्पुरं पश्य वैकुण्ठं सकलं मम।
पुरेऽस्मिन् रागवर्गा मे सन्ति तान् पश्य सर्व्वशः ॥५९॥

शुक उवाच।

इत्युक्तो[1] हरिणा तेन नारदो मुनिपुङ्गवः।
उत्थाय हरिणा सार्द्धं ददर्श सकलं पुरम् ॥६०॥
यत्र सर्व्वे लसच्चारुवक्त्रास्चारुचतुर्भुजाः।
शङ्ख-चक्र-गदा-पद्म-धराः सर्व्वे घन-प्रभाः ॥६१॥
किरीटिनः कुण्डलिनो लसत्पुष्करमालिनः।
सर्व्वे च नूत्नवयसः सस्मेरवदनाम्बुजाः ॥६२॥
दिशो वितिमिरालोकाः कुर्व्वन्तः स्वेन तेजसा।
तत्र क्वापि स्थलेऽपश्यद्व्यङ्गान् कांश्चिच्छरीरिणः ॥६३॥

नारद उवाच।

देव श्रीपुण्डरीकाक्ष पुरेऽस्मिंस्ते सुखालये।
एवंभूतानि भूतानि कथं नरकदेशवत् ॥६४॥

---

१ C इत्युक्तस्तेन हरिणा।

हरिरुवाच।

एत एव[1] कृता रागा भवता व्यङ्गचक्षुषः।

[2]यत एव सरस्वत्या हसितञ्चावृतास्यया।

एते सज्जीभविष्यन्ति साङ्गोपाङ्गाः शिवागमात् ॥६५॥

शुक उवाच।

इत्युक्तस्तेन हरिणा नारदो लज्जयान्वितः।

न जगाद मुखे किञ्चिद्धरिणा सह चावसत् ॥६६॥

हरिर्लक्ष्मीसरस्वत्योर्मध्यगो विरराज सः।

उवास नारदश्चापि पूर्व्वकल्पित आसने ॥६७॥

अन्ये च ऋषयस्तत्र वैकुण्ठपुरवासिनः।

ऊषुर्विष्णुसभायान्ते परमामोदनिर्वृताः ॥६८॥

सस्मार च हरिः शम्भुं सगङ्गं वेधसन्तथा।

तेन स्मृतास्ते स्वस्थानात्[3] शम्भुर्ब्रह्मा च दैवतैः ॥६९॥

आगता चैव गङ्गा च स्मृता कृष्णेन विष्णुना।

ब्रह्मा विष्णुः पिनाकी च इन्द्राद्याश्चैव देवताः ॥७०॥

ऋषयो नारदाद्याश्च तत्रोषुः स्वासनेषु च।

गानं शुश्रूषवः सर्व्वे यत्तु शम्भुः करिष्यति ॥७१॥

अथ तत्र महादेवं वसन्तं परमासने।

शुक्लमालालसच्छीर्षं गङ्गासंशोभितामकम् ॥७२॥

पिनाकपाणिं शुक्लाभं पिहितव्याघ्रचर्म्मकम्।

---

१ C अतएव। २ A अतः।
३ B स्वजनाः।

विलोक्य पूजयित्वा च ब्रह्माद्यर्च्चनपूर्व्वकम्।
उवाच परमप्रीतो वैकुण्ठेशो गदाधरः॥७३॥

हरिरुवाच।

चन्द्रशेखर हे शम्भो किं लोके परमं सुखम्।
किं शोकनाशनं[1] लोके किं वा दुःखविमोचकम्[2]॥७४॥

शिव उवाच।

त्वत्सेवनं सुखं लोके त्वद्ध्यानं शोकनाशकम्[3]।
दुःखानां मोचकं कृष्ण[4] तवैव नाम नान्यथा॥७५॥
अस्ति चान्यत् परं तादृग्गानं त्वत्कीर्त्तिकीर्त्तकम्।
यस्य तेऽङ्गेभ्य उत्पन्ना रागा रागिण्य एव च॥७६॥
चित्रिताः पुष्पिता वाचो न चेत्त्वत्कीर्त्तिबोधिकाः[5]।
मिथ्या हेमचितिं तान्तु हेमज्ञो नानुधावति॥७७॥
विना गानेन ते नाम पवित्रयति नान्यथा॥७८॥
नारायणाच्युतानन्त कृष्ण श्रीमधुसूदन।
इति गायन्ति ये नित्यं न ते संसारिणः पुनः॥७९॥
गोविन्द केशवानन्द[6] श्रीराम पुरुषोत्तम।
इति गायन्ति ये नित्यं न ते संसारिणः पुनः॥८०॥
मुकुन्द पद्मनाभेति पुण्डरीकाक्ष माधव।
इतीरयन्ति[7] ये नित्यं न हि तान् बाधते कलिः॥८१॥

---

१ A ०नाशकं। २ B D ०मोचनं। ३ B and D नाशनं।
४ D मोचनं कृष्णो तथैव च न चान्यथा। ५ D ०रोधिका।
६ D केशवानन्त। ७ B इति गायन्ति।

हरिरुवाच।

उक्तं मन्नाममाहात्म्यं पुण्यकीर्त्तन शङ्कर।
कर्णौ प्रीणय मे[1] गानात् सर्व्वे शुश्रूषवः स्थिताः।
गानामृतमहाविद्याकुशलोऽसि न चापरः॥८२॥

शुक उवाच।

इत्युक्तः श्रीमता तेन हरिणा प्रभुना द्विज।
गातुं प्रचक्रमे शम्भुर्गानशास्त्रविशारदः॥८३॥
तेन चानुजगे[2] गायन्नारदोऽपि महामुनिः।
लक्ष्मीः सरस्वती ब्रह्मा विष्ण्वाद्यास्तन्मुखाः[3] स्थिताः॥८४॥
आदौ नादं समुत्थाप्य गान्धारं समभाषयत्।
ब्रह्मविष्ण्वादयः सर्व्वेऽपश्यन् गान्धारमागतम्॥८५॥

लसत् सुहेमाभरणं समुज्ज्वल-
नवाम्बुदाभासमपूर्व्वसुन्दरम्।
गृहीतपीताम्बरम[4]म्बुजद्वयं
ददर्श गान्धारमिमं सभा च सा॥८६॥
सुचारुहेमासनमासिते वरं
महाप्रभे रागवरे महेश्वरः।
जगौ हरिं कापि च दूतिकागता
प्रियोक्तसन्देशवचोऽब्रवीदिति॥८७॥

---

१ D मो। २ C चानुगतो।
३ D तन्मुखस्थिताः। ४ C पङ्कज।

दूतिकोवाच।

केशव कमलमुखीमुखकमलं

कमलनयन कलयातुलममलम्।

कुञ्जगेहे विजनेऽति विमलं[1]। ध्रुवः ॥८८॥

सुरुचिर हेमलतानवलम्बा-

तरुणतरुं[2] भगवन्तम्।

जगदवलम्बनमवलम्बितु-

मनुकलयति सा तु भवन्तम् ॥८९॥

इतीह सङ्गायति गानपण्डिते

महेश्वरे चारुतरस्वरे हरे।

ददर्श दूतीं समुपस्थितामिव

श्रियः पतिः स्तब्धविलोचनद्वयः ॥९०॥

सभा च सानन्तरबोधवर्ज्जिता

शिवेऽर्पिताचा अचला इव स्थिता।

सरस्वती श्रीरपि तादृशौ तदा

ब्रह्मा विघूर्णच्चतुराननोऽभवत् ॥९१॥

पुनः शिवो गायति गानसम्भव-

प्रमोदविच्छेदविरागतो द्विज।

समावभाषे स्वरवन्धसम्भवा

श्रीनामिका रागवरस्य वल्लभा ॥९२॥

---

१ D इति विरलं, B C विरलं। २ D भवं।

ज्वलत्सुवर्णामलचारुकायिका[१]
करद्वये पद्मयुगञ्च बिभ्रती ।
विचित्रभूषाभरणोज्ज्वलांशुका
श्रीरागिणी राजतसस्मितानना ॥९३॥
या दूतिकाऽह्लतवती हरिं पुरः
सैवान्यथाकारगतेव सा प्रिया ।
हरिं प्रलभ्येव रहः स्थिताऽश्लिषत्
तदेति साक्षादिव वीक्षते हरिः ॥९४॥

प्रियोवाच ।

रसिकेश केशव हे । रससरसीमिवमामुपयोजय रसमय
रसमिवहे । ध्रुवः ॥९५॥

शुक उवाच ।

एवं गायति देवेशे देवो नारायणस्तदा ।
आलिङ्गितेव तादात्म्याद्धरिर्निरवलम्बनः ॥९६॥
रसोऽभूद्रसतादात्म्यादपतच्चासनात्ततः ।
तैजसन्तच्छरीरन्तु द्रवीभूतं लसत्तरम् ।
संप्लावयितुमारेभे वैकुण्ठं पुरमुत्तमम् ॥९७॥
तदा सर्व्वे भग्ननिद्रा इव ब्रह्मादयः सुराः ।
प्लाव्यमानं पुरं सर्व्वं ददृशुश्चाप्यचिन्तयन् ॥९८॥
कुत एतज्जलं जातं वैकुण्ठस्य विपादकम् ।
क्व वा[२] यातो हरिर्देव आसने च न दृश्यते ॥९९॥

---

१ C नायिका । २ C कुत्र ।

ब्रह्मा तदवधार्य्याथ शिवगानफलं तदा।
गङ्गाधिकरणं तत्र कमण्डलुमदर्शयत्॥१००॥
गानब्रह्मभवं ब्रह्म हरिदेहद्रवाख्यकम्।
गङ्गा ब्रह्म संवृणुयादिति ब्रह्मा ह्युपाययत्॥१०१॥
भाण्डसंस्पर्शमात्रेण सर्व्वा हरितनुद्रवः।
गङ्गां विवेश सहसा तत्चणादेव पश्यताम्॥१०२॥
तदा नीरमयी गङ्गा बभूव पापनाशिनी॥१०३॥
यथैवात्मानमाश्रित्य शरीरं प्रविराजते।
तथा[1] गङ्गां समाश्रित्य हरेर्द्देहद्रवो बभौ॥१०४॥
कमण्डलौ तदा ब्रह्मा निहितं ब्रह्म दुर्लभम्।
नीत्वा ययौ ब्रह्मलोकं शिवोऽपि प्रययौ तथा।
अन्ये च वासवाद्याश्च ययुः स्वस्थानमुत्तमम्॥१०५॥
शिवगानप्रभावेण द्रवीभूतोऽच्युतोऽभवत्।
इति वै घोषयामासुः सर्व्वे त्रैलोक्यवासिनः॥१०६॥
तदा लक्ष्मीसरस्वत्यौ विनाभूते बभूवतुः।
हरेर्द्देहग्रहं[2] भूयो ह्यपेचन्त्यौ स्थिते तथा॥१०७॥
कैलासे तं[3] शिवं देवी गङ्गा वै शिश्रियेतराम्।
साकार[4]लक्ष्मलं तत्तु यद्गङ्गां शिवभाविनी॥१०८॥
इयं ते कथिता गङ्गा हिमालयसुता शुभा।
कमण्डलौ स्थिता देवी ब्रह्मणो ब्रह्मलोकगा॥१०९॥

---

१ B तदा। २ B देहाश्रयं।
३ B तु। ४ B साकारात्तु।

सैव विष्णोः पदं प्राप्ता वामनस्य महात्मनः।
ततो विष्णुपदाद्भूता[1] समायाता धरातलम्।
राज्ञो भगीरथस्येष्टं संपूरयितुमिच्छती ॥११०॥
ततो भूमेरधो गत्वाऽपावयत् सगरात्मजान्।
ततोऽनन्तं समासाद्य विरराम जलावधि ॥१११॥
इत्येतत् कथितं विप्र संक्षेपात् सकलं वचः।
श्रोतुमिच्छसि किं भूयः पृच्छ तन्मां वदामि तत्[2] ॥११२॥

इति श्रीबृहद्धर्मपुराणे मध्यखण्डे शिवगानं नाम
चतुश्चत्वारिंशोऽध्यायः ॥

---

१ B पदोद्भूता। २ D ते।

# पञ्चचत्वारिंशोऽध्यायः।

जैमिनिरुवाच।

कथं विष्णुपदं प्राप्ता गङ्गा ब्रह्मकमण्डलोः।
कथं वा वैष्णवात् पादाद्गङ्गायाता धरातलम् ॥१॥
कथं वाऽराधयद्गङ्गां देवीं राजा भगीरथः।
कथं सगरपुत्रान् वाऽपावयत् परमेश्वरी ॥२॥
विरराम कुतो देवी प्रश्नानेतान् वदस्व मे।
संक्षेपात् ये त्वया[1] प्रोक्तास्तेषां पुण्यमुदाहर ॥३॥

शुक उवाच।

मरीचिर्ब्रह्मणः पुत्रस्तस्माज्जातस्तु कश्यपः।
हिरण्यकशिपुर्जातः कश्यपाद्दितिगर्भभूः ॥४॥
तस्य पुत्राश्च चत्वारः प्रानुसंपूर्व्वकेवलाः ॥५॥
ह्लादास्तेषां तु प्रह्लादो ज्येष्ठो विष्णुपरायणः।
विरोचनस्तस्य पुत्रो बलिस्तस्याभवत्सुतः ॥६॥
स इन्द्रादीन्देवगणानभिभूय महाबलः।
भूरादिं बुभुजे लोकं सर्व्वदैत्यगणेश्वरः ॥७॥
अदितिर्देवमाता वै पुत्राणां दुःखशान्तये।
पत्याज्ञया हरिं देवमाराध्य समराधयत् ॥८॥

---

१ B,D यत्त्वया।

वने सा निर्जने क्वापि तपः परममास्थिता।
आराधयामास हरिं वरदं जगदीश्वरम् ॥९॥
तां तदा तपसाविष्टां विलोक्य दितिनन्दनाः।
देवमूर्त्तिधरा भूत्वा शठा अदितिमब्रुवन् ॥१०॥

दैत्या ऊचुः।

देवा वयं नमस्यामो भवत्याश्चरणद्वयम्।
इदमेव पदद्वन्द्वमस्माकं कुशलार्थकम् ॥११॥
कथं तपस्यसि प्रायो देहकर्षणमुग्रकम् ॥१२॥
त्वञ्चेत्तिष्ठसि जीवन्ती तदा नो मङ्गलं महत्।
त्वञ्चेदुपेक्षसे देहं कुतो नः कुशलं भवेत् ॥१३॥
यस्य नास्ति गृहे माता भार्य्या वा प्रियवादिनी[1]।
अरण्यन्तेन गन्तव्यं यथारण्यन्तथा गृहम् ॥१४॥
यस्य नास्ति गृहे माता भार्य्या वाक्यकरः सुतः।
विरक्तश्च परिवारो गन्तव्यं तेन वै वनम् ॥१५॥
किमस्माकन्तु राज्येन किं सुखेनात्मनापि वा।
यत्र त्वं महताविष्टा तपसोपेक्षसे तनुम् ॥१६॥
अप्राप्तदुःखा भवती ह्यस्मदर्थेऽतिदुःखिनी।
तपस्यति यतो मातस्ततो नो धिक् प्रवर्त्तताम् ॥१७॥
ईश्वरः सुखदुःखानां कर्त्ता नान्योऽस्ति कुत्रचित्।
अनाराधित एवासौ कर्त्ता स्यात् सुखदुःखयोः ॥१८॥
अस्माकं सुखदुःखं यदस्ति स्वोपार्जितं पुरा।

---

१ C and D चाप्रियवादिनी।

तत् किं त्वं तपसोग्रेण शक्ता वारयितुं भवेः ॥१९॥
तस्मात्त्यक्त्वा तपस्यैतत् स्मर गेहे हरिं प्रभुम्।
चिरं वर्त्तस्व हे मातस्तद्राज्यं नो महत्तरम् ॥२०॥
अस्माकं दुरदृष्टन्तु राज्यनाशाय चास्थितम्।
त्वं तदात्मविनाशेन न वर्द्धय परेष्टदम् ॥२१॥

अदितिरुवाच।

यूयं सदा मम प्रायः सर्व्वमङ्गलचिन्तकाः।
देवा अपि च यूयं वै ध्वस्तराज्याः स्थ चाचिरात् ॥२२॥
अहं हि वः परीहास्या परिहासं[1] यथापि च।
देवा इवापातदुःखा दुःखभाजः स्थ सर्व्वदा ॥२३॥
अहमाराधयामीशं विष्णुं प्रभुमनामयम्।
कर्त्तारं सुखदुःखानां धिगित्येवास्तु वोऽपि च ॥२४॥

शुक उवाच।

इत्युक्तास्ते दैत्यगणा असिद्धार्थाः क्रुधान्विताः।
दन्तैर्दन्तान् विनिष्पीड्य निश्वसन्तो मुहुर्मुहुः ॥२५॥
उद्गीर्य्य मुखतो वह्निं निश्वासवायुनेरितम्।
वनं तज्ज्वालयामासुः समन्तात्तद्दिधक्षया ॥२६॥
वनदाहभयाद्दैत्यास्ततो याता[2] बलिं ययुः।
सर्व्वं निवेदयामासुर्दग्धा चादितिरित्यपि ॥२७॥
इह त्वरण्ये देवानां मातरं दावमध्यगाम्।
सुदर्शनेन स्वास्त्रेण ररक्ष हरिरव्ययः ॥२८॥

१ D परीहासं। २ C and B जाताः।

ततोऽदितिस्तपश्चेरे महोग्रं हरिमीचितुम्।
वायुमात्राशना चोर्द्धं तिष्ठत्यङ्गुष्ठस्पृष्टभूः ॥२९॥
एवं वर्षे गते दिव्ये श्रीहरिर्देवमातरम्।
दर्शयामास चात्मानं परमाद्भुतविग्रहम् ॥३०॥
देवं मरकतश्यामं पीतवाससमच्युतम्।
श्रीमद्दीर्घचतुर्बाहुं तप्तकाञ्चनकुण्डलम् ॥३१॥
पुण्डरीकाभिरामाक्षं किरीटशोभिमौलिनम्।
स्मेरस्फुरद्वक्त्रपद्ममालोलतुलसीस्रजम्।
आरूढ़विनतापुत्रं ददर्शादितिरच्युतम् ॥३२॥
दर्शनोत्पादितानन्दभारनम्रेव सा तदा।
प्रणतादितिरेषाह देवमाताऽतिदुःखिनी ॥३३॥
क्वाहमल्पमतिर्योषित् क्व त्वं त्रैलोक्यनायकः।
अनुग्रहस्वभावात्मा प्राप्तोऽसि मम दर्शनम् ॥३४॥
तस्मात्त्वां प्रणमामीशं कमलापतिमव्ययम्।
अभीष्टपूरकस्त्वन्तु स्वभावेनैव किं वदे ॥३५॥

प्रसीद लोकेश [जगन्निवास[१]]
स्थौल्येन सौक्ष्मेण च व्याप्तात्मन्[२]।
गुप्तस्त्रिलोकेषु स्वतः प्रसिद्ध-
स्त्वं कालरूपी जगतां विधाता ॥३६॥
त्वं सत्वरूपी जगदेकबन्धु-
रतर्क्यरूपो भगवाननन्त[१]।

---

१ B omits the portion bracketted. २ C व्यापितात्मन्

कूटस्थ आद्यः पुरुषः पुराणो
महानन्तात्मा ग्रग्निसूर्य्यरूपः ॥३७॥
यस्त्वं हि योगेन दृढ़ेन योगिभिः
प्रलक्ष्यसे विष्णुरनुस्वरूपः ।
वपुःषु सर्व्वेषु भवाननेको
वह्निर्यथा दारुषु ति नमोऽस्तु ॥३८॥
[1]सुभासमे स्वात्मकबोधरूपिणे
(स्वरूपिणे[2]) सर्व्वजनेषु यस्तम् ।
तस्मै नमस्ते गुरवे पराणवे[3]
महात्मने वेदनताय विष्णो ॥३९॥

शुक उवाच ।

इत्यादि स्तुवतीं देवमातरं तपसा कृशाम् ।
ऊचे[4] मधुरया वाचा देवकीनन्दनोऽदितिम् ॥४०॥

हरिरुवाच ।

वरं वृणु महाभागे वरदोऽस्मि तवागतः[5] ।
तपसा परितुष्टोऽस्मि स्तवेनानेन चानघे ॥४१॥

अदितिरुवाच ।

नारायण नमस्तेऽस्तु शङ्खचक्रगदाधर ।
अहं वरार्थिनी सत्यं लक्ष्म देवो वरप्रदः ॥४२॥

---

१ C स्वभासमे । २ Omitted in B.
३ D पुराणवे । C परात्मने । ४ C उवाच । ५ C तवाग्रतः ।

अन्तर्यामी भवान् कस्मान्मां पृच्छति विशेषवित् ।
स्वयमेव हृदिस्थं मे जानीषे यदुनन्दन ॥ ४ ३ ॥
स्वयं मे हृदयं ज्ञात्वा वरं देहि यथोचितम् ।
[1][अहन्तु वरदेशानं त्वां मोक्षपरिसेवितम् ॥ ४ ४ ॥
न वक्ष्यामि वृथावाक्यं राज्यादियाचनार्थकम् ।
बहुधा वासना देव शरीरधारणाफलम् ॥ ४ ५ ॥
त्वयेव ग्राहितं जीवं नैव त्यजति दुस्त्यजम् ।
तस्मात्त्वयैव विज्ञेन वरो देयो यथारुचि ।
ममाभिप्राय एषोऽद्य त्वां प्राप्स्यामि यथोचितम् ॥ ४ ६ ॥]

हरिरुवाच ।

[2]तथास्तु देवमातस्ते यत्त्वया वाञ्छितं हृदा ।
इन्द्रादयस्ते पुत्रा वै राज्यं प्राप्स्यन्ति नान्यथा ॥ ४ ७ ॥
तवगर्भे लब्धजन्मा राज्यं वलिहृतं तव ।
दास्यामि तव पुत्राय पुनरिन्द्राय सर्व्वथा ॥ ४ ८ ॥

शुक उवाच ।

एवं श्रुत्वा हरेर्वाक्यं देवमातादितिस्तदा ।
[3]कम्पमानहृदा भीता हरिं वचनमब्रवीत् ॥ ४ ९ ॥

अदितिरुवाच ।

प्रभो विश्वेश विश्वात्मन् वरेणालं मतं मम ।
कथं त्वां धारयिष्यामि स्वगर्भे जगदीश्वरम् ॥ ५ ० ॥

---

१ A omits the portion bracketted. २ A अथास्तु ।
३ कम्पमाना ।

[त्वं विश्वमूर्त्तिर्भगवान् विश्वव्यापी पुमान् परः।
यस्य ते लोमकूपस्थो ब्रह्माण्डप्रचयः प्रभो।
त्वां कथं धारयिष्यामि स्वगर्भे जगदीश्वरम्॥५१॥][1]
अहन्तु कृपणायोषित् तापसी च कृशोदरा।
कथं त्वां धारयिष्यामि स्वगर्भे जगदीश्वरम्॥५२॥
प्रसीद जगतां नाथ गोविन्द पुरुषोत्तम।
वरो वरं विरमतां कथं धार्य्या मया भवान्[2]॥५३॥

भगवानुवाच।

मा भैर्मातर्द्देवमातः कथं मां न धरिष्यसि[3]।
मां ते धर्त्तुं कथं चित्ते भयं प्राविशदत्र हि॥५४॥
अहं त्वज्जगदीशानः प्रवेक्ष्याम्युदरे तव।
इति त्वमपि शक्तास्या धर्त्तुं मां जठरे स्वके॥५५॥
सर्व्वतः समचित्तात्मा सदा सर्व्वोपकारकः।
सत्यवादी क्षमाशीलो मां धारयति वैष्णवः॥५६॥
दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः।
सर्व्वत्रसमभावो यो[4] मां धारयति नित्यशः॥५७॥
पितुर्मातुः प्रीतिकरो गुरुभक्तः प्रियम्वदः।
शिवपूजारतः साधुर्मां[5] धारयति नित्यशः॥५८॥
भोजने शयने याने कथने पुण्यकर्मसु।

---

१ B omits the portion bracketted. २ A भवन्।
३ B मां धारयिष्यसि। ४ C यः स मां धरति नित्यशः।
५ C स मां धरति नित्यशः।

यः सदा मत्प्रियं कर्त्ता स मां धारयति[१] नित्यशः ॥५९॥
[[२]यः पुराणार्थशुश्रूषुः साधुसङ्गसमीहकः ।
तुलसीधारणपरः स मां धारयति[३] नित्यशः ॥६०॥
यः पुमान् पुत्रवित्तादौ पद्मपत्रजलोपमः ।
स वै भागवतो ज्ञेयः स मां धारयति[४] नित्यशः ॥६१॥]
गङ्गास्नानरतो यस्तु ब्राह्मणे भक्तिसंयुतः ।
स वै भागवतो ज्ञेयः स वै धरति नित्यशः ॥६२॥
यस्य रुद्राक्षमालावान् रुद्रविष्णुप्रपूजकः ।
स वै भागवतो ज्ञेयः स मां धरति नित्यशः ॥६३॥
यश्चण्डीपाठनिरतश्चण्डीजपपरायणः ।
स वै महाभागवतो[५] मां धारयति नित्यशः ॥६४॥
[[६]यः शास्त्रज्ञः स्वयं धर्म्मानाचरेन्मत्समाश्रयः ।
स वै भागवतो ज्ञेयः स मां धरति नित्यशः ॥६५॥
यो वै मदीय नामानि सदा गायति नित्यदा[७] ।
स वै भागवतो ज्ञेयः स मां धरति नित्यशः ॥६६॥
रामनारायणानन्त मुकुन्द पुरुषोत्तम ।
इति गायति यो नित्यं स मां धरति नित्यशः ॥६७॥
पद्मनाभ कृपानाथ गुरो श्रीपुरुषोत्तम ।
इतीरयति यो नित्यं स मां धरति नित्यशः ॥६८॥

१ C D धरति । २ B omits the portion bracketted. ३ C धरति । ४ C D धरति । ५ B स वै भागवतो ज्ञेयः स मां धरति नित्यशः । ६ B omits the portion bracketted. ७ C नित्यशः ।

गरुड़ध्वज गोविन्द मधुसूदन केशव।
इतीरयति यो नित्यं स मां धरति नित्यशः॥६९॥]
[1]शिव शङ्कर रुद्रेश नीलकण्ठ त्रिलोचन।
इतीरयति यो नित्यं स मां धरति नित्यशः॥७०॥
[2]वृषकेतो भवेशान श्रीकण्ठ पार्व्वतीपते।
इतीरयति यो नित्यं स मां धरति नित्यशः॥७१॥
[3][चन्द्रमौले वासुदेव हरे हर हरित्पते[4]।
इतीरयति यो नित्यं स मां धरति नित्यशः॥७२॥
महाविपत्तियुक्तोऽपि यो न धर्म्मं जहाति वै।
स वै देवप्रियो नित्यं स मां धरति नित्यशः॥७३॥]
कर्म्मभूमिमिमां प्राप्य यो मां भजति भक्तिमान्।
स वै देवप्रियो ज्ञेयः स मां धरति नित्यशः॥७४॥
दुर्गेति भद्रकालीति वैष्णवी चण्डिकेति च।
मुदा गायति यो नित्यं स मां धरति नित्यशः॥७५॥
पतिपूजापरा या स्त्री[5] सद्भक्ता च दयान्विता।
सुशीला साधुचित्ता च स मां धरति नित्यशः॥७६॥
अहं महानहं दीर्घो वामनोऽहमहं कृशः।
स्थूलश्चाहमणुश्चाहं सुरूपश्च कुरूपकः॥७७॥

---

१ B here reads "वृषकेतो" इत्यादि।
२ B here—"शिवशङ्कर" इत्यादि।
३ B omits the portion bracketted.
४ C सरित्पते। ५ D स्त्रीच।

याद्दृशं मां धर्त्तुमीशा भविष्यसि वृणुष्व तत्।
तेन रूपेण ते साध्वि भविष्यामि सुतोऽदिते ॥७८॥

अदितिरुवाच।

वरदो यदि मे देव वरार्हा यदि वाप्यहम्।
तदा मे वामनो भूत्वा पुत्रत्वं याहि केशव॥७९॥
नातिस्थूलो नातिकृशो यथा त्वां धर्त्तुमुत्सहे॥८०॥
स्वयं वामनको भूत्वा खण्डयित्वा बलिं हरे।
इन्द्रस्य राज्यमिन्द्राय दातुमर्हसि केशव॥८१॥
मद्गर्भे तव जातस्य बलिं खण्डयतस्तथा[१]।
कीर्त्तिस्ते विपुला लोकमलग्ना जागरिष्यति॥८२॥

शुक उवाच।

इत्युक्तो देवमात्रा स हरिर्नारायणः प्रभुः।
शिवगानाम्नष्टदेहो देहार्थी तां तथेति दै॥८३॥
उक्त्वा चान्तर्दधे सद्यः पश्यन्त्या अदितेः पुरः।
अदितिश्च ययौ काले सेवितुं कश्यपं पतिम्॥८४॥

इति श्रीबृहद्धर्मपुराणे मध्यखण्डेऽदितिवरप्राप्तिर्नाम पञ्च-चत्वारिंशोऽध्यायः॥

---

१ C तदा।

# षट्चत्वारिंशोऽध्यायः ।

शुक उवाच ।

अथ काले देवमाता देवी कश्यपभाविनी ।
कश्यपात् गर्भमाधत्ते[1] प्राची दिगिव भास्करम् ॥१॥
अदितिं गर्भिणीं श्रुत्वा सर्व्वे शक्रादयः सुराः ।
स्तोतुं प्रचक्रमुर्विष्णुमलक्ष्या[2] असुरादिभिः ॥२॥

देवा ऊचुः ।

ॐ नमः कृष्णाय जगदेकनाथाय गोविन्द पुरुषोत्तम वासुदेव निखिलजगदघसङ्घातघातक विविधपापनिचय[3]निधनकरभास्कर देवाधिदेव वैकुण्ठपुरुषोत्तम सकलसुरनरकिन्नरगणशरीरेषु लग्नचक्षुःश्रवणरसज्ञाघ्राणाधिष्ठात्रे ज्ञानरूपाय वाक्पाणिपादपायूपस्थमनोऽधिष्ठात्रे कर्म्मरूपाय महात्मने श्रीपतये निर्म्मलाय ते नमः ॥३॥

एवमाहरहर्देवाः स्तुवन्ति जगदीश्वरम् ॥४॥
काले प्रादुरभूद्देवः कश्यपस्य गृहे प्रभुः ।
भवाय विप्रदेवानामभवाय बलेरपि ॥५॥
भाद्रे मासि सिते पक्षे द्वादश्यां द्विजपुङ्गव[4] ।
श्रवणानक्षत्रयुक्ते मुहूर्त्तेऽभिजिति प्रभुः ॥६॥

---

१ A ॰माधत्त । २ C ॰लक्ष्यमसुरा॰ ।
३ C पापक्षिमनिचय॰ । ४ D ॰पुङ्गवः ।

अदितिः कश्यपश्चापि हरिं ददृशतुस्तथा[1]।
चतुर्भुजं शङ्खचक्रगदापद्मैर्विराजितम् ॥७॥
मणिना कौस्तुभाख्येन जाज्वल्यमानवक्षसं।
कुण्डलोद्भासिगण्डञ्च कृष्णं श्रीवत्सलाञ्छनम् ॥८॥
पीताम्बरं रक्तवर्णं ब्रह्मेन्द्रादिभिरीड़ितं।
तं दृष्ट्वात्यद्भुतं देवं प्रणनाम च कश्यपः ॥९॥

कश्यप उवाच।

ॐ कृष्णाय गोविन्दाय हरये परमात्मने।
प्रणत[2]क्लेशनाशाय श्रीनाथाय नमोनमः ॥१०॥

अदितिरुवाच।

तस्मै नमस्ते कृष्णाय हरये परमात्मने।
अजाय चादितेयाय काश्यपाय नमोऽस्तु ते ॥११॥
नमस्ते पृश्नि[3]गर्भाय कैवल्यपतये नमः।
[देववन्दितपादाब्ज नमस्तुभ्यं नमोनमः][4] ॥१२॥
स्मृतार्त्तिनाशकानन्त देव पद्मविलोचन।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमोनमः ॥१३॥
इदं ब्रह्माण्डमखिलं क्रीड़ागेण्डूकमेव ते।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमोनमः ॥१४॥
[5][निक्षिप्तोत्क्षिप्तविक्षिप्तप्रतिक्षिप्ता वयन्तथा।

---

१ D स्तदा। २ D प्रणमो। ३ C पृश्नि०।
४ C adds the portion bracketted.
५ B omits the portion bracketted.

[1]नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमोनमः ॥१५॥]
विष्णो तव[2] कृपा यस्य परमानन्दवर्षिणी[3]।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमोनमः ॥१६॥
तपस्ते यस्य हृदयं भक्तिस्ते यस्य दर्शनं।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमोनमः ॥१७॥
परमां निष्कलां सूक्ष्मां प्राप्य यस्यात्मनि स्थितः।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमोनमः ॥१८॥
[4][प्राणायामादिनिर्धूतकल्मषो यं समीक्षते।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमोनमः ॥१९॥]
चन्द्रादित्यौ दृशौ यस्य ब्राह्मणा यस्य वै मुखं।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमोनमः ॥२०॥
[5][निचिन्नोत्चिन्नविचिन्नप्रतिचिन्ना वयं पुनः।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमोनमः ॥२१॥]
अग्निर्यस्य मुखं चास्य कर्णौ यस्य दिशोदश।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमोनमः ॥२२॥
वायुर्यस्य स्वयं श्वासो माया हास्यश्च यस्य वै।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमोनमः ॥२३॥
पृथ्वी यस्यासनं [6]सत्यं लोको मुकुटमेव यत्।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमोनमः ॥२४॥

---

१ D omits नमस्तुभ्यमित्यादि। २ B विष्णोस्तव०।
३ B वर्षिणां.। ४ C adds the portion bracketted.
५ B adds the portion bracketted. ६ D सत्यलोको।

दक्षिणा चोत्तरा दिक् च भुजौ यस्य महाबलौ।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमोनमः ॥२५॥
नासाग्रं यस्य पूर्व्वा दिक् पृष्ठं यस्य च पश्चिमा।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमोनमः ॥२६॥
यस्याज्ञाकारिणो वायुसूर्य्यचन्द्रधराम्बुदाः।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमोनमः ॥२७॥
त्रैलोक्यं लङ्घितं येन दुर्लङ्घ्यगमनेन वै।
[1][नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमोनमः] ॥२८॥
यस्योदरस्थं सकलं त्रैलोक्यं भूर्भुवादिकं।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमोनमः ॥२९॥
मुखबाहूरुपादेभ्यो वर्णा यस्य बभूविरे।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमोनमः ॥३०॥
मनश्चक्षुःश्रुतिलग्भ्यो यस्याभूवंस्तथाश्रमाः।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमोनमः ॥३१॥
सहस्रशीर्षा[2] यः कूटः सहस्राक्षः सहस्रपात्।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमोनमः ॥३२॥
आदित्यकोटिवर्णो यो योऽतीतो निखिलन्तमः।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमोनमः ॥३३॥
एक उर्ध्वरितो यस्तु कल्पान्ते महति प्रभुः।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमोनमः ॥३४॥

---

१ B omits the portion bracketted. २ B ॰शीर्षे।

एतावानेव नैव त्वमनन्तगुणशक्तिमान्[1]।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमोनमः॥२५॥
त्रिगुणानामपार्थक्यात् सृष्ट्यादि कुरुषे च यः।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमोनमः॥२६॥
भक्तेच्छानुगतो यस्त्वं मम गर्भगतोऽभवः।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमोनमः॥२७॥
गर्भे जातोऽस्मि मे देव गर्भदुःखविवर्जितः[2]।
गर्भदुःखविमोची त्वं पुत्रबुद्धिर्न तेऽस्तु मे॥२८॥
त्वन्तु पुत्रः पिता माता गुरुश्च परदेवता[3]।
भार्य्या पतिश्च शिष्यश्च सर्व्वरूपो भवान् पृथक्॥२९॥

शुक उवाच।

इति स्तुवन्तीमदितिं भगवान्देवमातरं।
मोचनः किल दुःखानां जगाद द्विजपुङ्गव॥४०॥

भगवानुवाच।

मातरेवं यदेवात्थ तत्तदेव नचान्यथा।
एषोऽहं वामनो भूतस्त्वत्कार्य्यार्थं समाश्वस॥४१॥
इत्युक्त्वा तत्क्षणादेव द्विभुजो वामनोऽभवत्।
कश्यपस्तस्य मङ्गल्यं चकार बहुधा मुने॥४२॥
सर्व्वमङ्गलपूर्णोऽपि समुद्र इव पर्व्वणि।
जवाकुसुमसङ्काशः काश्यपेयो महाद्युतिः॥४३॥

---

१ C ०मनन्तशक्तिरेव यः। २ D ०विवर्ज्जितं।
३ B गुरुदेवता।

रराज वामनो बालः कश्यपादितिवेश्मनि ।
चकार नामकरणं तस्य बालस्य कश्यपः ॥ ४ ४॥
इन्द्रानुजत्वादुपेन्द्रो वामनत्वाच्च वामनः ।
काश्यपिश्चादितेयश्च रक्त इत्यपि[1] नामतः ॥ ४ ५॥
त्रेतायुगेऽवतीर्णोऽसौ रक्तवर्णश्च वामनः ॥ ४ ६॥
ततः काले गते क्वापि निश्चित्योपनयार्हतां ।
ऋषीन्देवांस्तथामन्त्र्य संस्कर्त्तुं पुत्रमुद्यतः ॥ ४ ७॥
आहूय वह्निं संशुद्धं कृत्वा विधिवदेव च ।
बृहस्पति र्यज्ञसूत्रं ददौ मालाभिलम्बितं[2] ॥ ४ ८॥
सविता स्वयमागत्य गायत्रीं प्रददौ द्विज ॥ ४ ९॥
अथ देवी समागत्य पार्व्वती शिवसुन्दरी ।
ददौ भिक्षां वामनाय वटुमानवकाय वै ॥ ५ ०॥
विप्र तुभ्यं प्रयच्छामि भिक्षान्ते प्रथमामहं ।
लच्च प्रतिगृह्णाणेमां जरामरणहारिणीम् ॥ ५ १॥

[3][वामन उवाच ।]

मातर्भगवति श्रेष्ठां[4] भिक्षां मे देहि पार्व्वति ।
ॐ स्वस्तीति सकृत् प्रोच्य भगवान् वटुवामनः ॥ ५ २॥
अङ्गुष्ठानामिकाभ्यान्तु[5] गृहीत्वा तस्य वै क्रियत् ।
मूर्द्धा ववन्दे चेत्येव प्रतिजग्राह जैमिने ॥ ५ ३॥

---

१ B रक्ताख्य इति नामतः । २ C तस्मै सुलम्बितं ।
३ C adds. ४ B and C श्रेष्ठां ।
५ B omits the ०न्तु ।

ततो द्यौः प्रददौ छत्रं पादुके प्रददौ धरा ।
भिक्षापात्रं ददौ प्रभुः कौपीनञ्च लसत्तरम् ॥५४॥
दण्डञ्च वैणवं प्रादात् प्रजासंयमनो यमः ।
ब्रह्मर्षयो ददुर्दर्भान् ब्रह्मा प्रादात् कमण्डलुं ।
गिरयस्तिलकं शुक्ल मूर्द्धपुण्ड्रं विराजितम् ॥५५॥
एवं परमतेजस्वी भूत्वा वटुकवामनः ।
रराज राजराजस्य[1] चितौ राजेव चापरः ॥५६॥
ततः स वामनोविप्रः कृत्वा परिसमूहनं ।
मातरं पितरञ्चोभौ प्रणनाम क्रमाद्गुरू[2] ॥५७॥
ब्रह्मादिदेवताः सर्व्वा ऋषीन् सर्व्वानथैकदा ।
ब्राह्मणेभ्यो नमदृति प्रणनाम महाप्रभुः[3] ॥५८॥
प्रणम्य सर्व्वानित्येवं प्राञ्जलिः प्रजगाद वै ॥५९॥

वामन उवाच ।

अहं व्रजामि गुरुषु यूयं तत्रानुमोदत ।
समावृत्य पुनः सर्व्वान् द्रक्ष्याम्यहमुपागतः ॥६०॥

शुक उवाच ।

इत्युक्ता याति तनये चिन्तयामास चादितिः ।
अन्ये च कश्यपाद्या वै यथायोग्यमचिन्तयन् ॥६१॥
अयं देवोऽव्ययो विष्णुः कश्यपाङ्गभजो मम ।
महाप्रभावो विप्रोऽभूद्याति वस्तुं गुरावपि ॥६२॥

---

१ C राजराजास्य । २ B and D ०द्गुरून् ।
३ D महाप्रभुः ।

कीदृशेन ह्युपायेन बलिञ्च मोहयिष्यति[1]।
इन्द्राय राज्यं तद्दत्तं कथमेष प्रदास्यति ॥६३॥
अयन्तु वामनोबालो ब्राह्मणो नूतनोऽपि च ॥६४॥
कथं दानवदैत्यानां पतिं तं बलिनामकं।
खण्डयिष्यति धर्म्मात्मा देवा उद्वेजिता यतः ॥६५॥
मन्ये ह्यस्य तेजसैव मुग्धो वैरोचनो बलिः।
सर्व्वं राज्यममुष्मै तु दास्यत्येव न संशयः ॥६६॥
अयं पुनर्दानलब्धं सर्व्वमिन्द्राय दास्यति ॥६७॥
बलिस्तु दाता धर्म्मात्मा दण्डमर्हति नैव हि ॥६८॥
तेनायं विप्ररूपेण शक्रार्थे भिक्षयिष्यति ॥६९॥
एवं चिन्तयतां तेषां वामनो विप्रनन्दनः।
कतिचिद्ब्राह्मणैः सार्द्धं ययौ गुरुनिवेशनम् ॥७०॥
तत्र सर्व्वाणि शास्त्राणि पपाठ वटुवामनः।
बृहस्पतिर्व्याकरणं पाठयामास तं तदा ॥७१॥
ततो वेदान्तमीमांसे न्यायपातञ्जलौ तथा।
सांख्यं वैशेषिकञ्चापि पपाठ दर्शनानि षट् ॥७२॥
ततः पपाठ सर्व्वानि स्मृतिशास्त्राणि वाक्पते[2]।
आगमान्निगमांश्चैव पुराणानि पपाठ च ॥७३॥
शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां चितिः।
छन्दसां विचितिश्चैव षड़ङ्गो वेद इष्यते ॥७४॥

---

१ D मोषयिष्यति, BC मोचयिष्यति।
२ B and D वाक्पतेः C वाक्पतिः।

सर्व्वं कश्यपपुत्रोऽसौ पपाठाङ्गिरसाद्गुरोः ॥७५॥
एवमल्पेन कालेन विद्याः सर्व्वा अधीतवान् ।
गुरुदक्षिणया जीवं छन्दयामास वामनः ॥७६॥

वामन उवाच ।

बृहस्पते महाभाग गुरो शास्त्राणि मे भवान् ।
अध्यापयद्दक्षिणया[1] कथां स्यां निर्ऋणस्त्वयि ॥७७॥
एकमप्यक्षरं यस्तु गुरुः शिष्ये समर्पयेत् ।
त्रैलोक्ये नास्ति तद्द्रव्यं यद्दत्त्वा सोऽनृणो भवेत् ॥७८॥
यदि तत्र गुरुर्द्देवः प्रसीदति किल स्वयम् ।
तदा स्वल्पञ्च वै द्रव्यं दक्षिणत्वाय[2] कल्पते ॥७९॥
त्वन्तु मे सर्व्वशास्त्राणां ज्ञानदाता प्रसीद मे ।
अहन्तु जाने कियतीं भक्तिमेव बृहस्पते ॥८०॥

गुरुरुवाच ।

भवान् वामनरूपेण ह्यवतीर्णोऽखिलेश्वरः ।
लोकयात्रानुकुर्व्वाणो विद्याः सर्व्वाः पपाठ वै ॥८१॥
सर्व्वशास्त्रस्य कर्त्ता त्वं सर्व्वलोकपतिर्भवान् ।
लोकातीतो भवानेव प्राप्तोऽसि भगवन्मया[3] ॥८२॥
अतःपरा दक्षिणा का यत्त्वां प्राप्य परं[4] स्पृहे ।
यदर्थमवतीर्णोऽसि दक्षिणा परमेव[5] सा ॥८३॥

---

१ B D अध्यापनदक्षिणया । २ C दक्षिणार्थाय ।
३ C D भगवान् । ४ B वरं । ५ B D परमेव ।

हृतराज्यः पुनः शक्रस्त्वत्तो वामं[1] प्रलप्स्यते ।
प्रसन्नोऽहं गुरुस्ते वै गच्छ यत्र प्रयोजनम् ॥८४॥

शुक उवाच ।

इत्युक्तस्तेन गुरुणा वामनोऽदितिनन्दनः ।
गुरुं प्रणम्य प्रययौ कतिचिद्ब्राह्मणैः सह ॥८५॥

इति श्रीवृहद्धर्मपुराणे मध्यखण्डे वामनचरिते
षट्चत्वारिंशोऽध्यायः ॥

---

१ C राज्यं ।

## सप्तचत्वारिंशोऽध्यायः।

शुक उवाच।

पप्रच्छ ब्राह्मणान्[1] विप्र वामनोऽदितिनन्दनः।
विज्ञातार्थोऽपि भगवान् लोकयात्रामनुष्ठितः॥१॥

वामन उवाच।

अहन्तु भूमिभिक्षार्थी तपःस्थानाय संप्रति।
को मे दास्यति वै भूमिं यत्र तप्स्यामि तापसः॥२॥

ब्राह्मणा ऊचुः।

अधुना सकला भूमिर्बलेर्वैरोचनस्य हि।
सोऽधुना यजते तीरे नर्मदाया अथोत्तरे॥३॥
स तुभ्यं दास्यते भूमिं यज्वा दाता द्विजप्रियः।
त्वं[2] गत्वा खलु याचस्व धरां स्वार्थस्य साधनीम्॥४॥

शुक उवाच।

एवमेवेति चोक्त्वाऽसौ[3] बलिं गन्तुं मनो दधे।
पदे पदे चकम्पे च धरणी तस्य गच्छतः॥५॥
आगच्छन्तं ततो दूराद्वामनं तं बलिर्नृपः।
यज्ञासने [4]स्थितोऽद्राक्षीदृषिमण्डलमध्यगः॥६॥

---

१ B ब्राह्मणो। २ D तं। ३ C बालोऽसौ।
४ C D यज्ञासनस्थितो।

तर्कयामास बहुधा कोऽयमित्येव भूपतिः ।
दृश्यते दिवि सूर्य्योऽसौ नोदेति दिवसे शशी ॥७॥
अग्निर्ममात्र सम्पूर्णः कोऽयमन्योऽभिलक्ष्यते ।
सनत्कुमार एवासौ नैव ह्रस्वलक्षणात् ॥८॥
इत्येवं बहुधा तर्कं कुर्व्वतस्तस्य वै बलेः ।
उपाजगाम सर्व्वेषां पश्यतां चालयन् धराम् ॥९॥
बलिस्तु धैर्य्यमुत्सार्य्य तद्भासा क्षिप्तमानसः ।
दीक्षासनात् समुत्तस्थौ वारितो वामनेन च ॥१०॥
ततो बलिर्वामनाय ददावासनमुत्तमम् ।
सौवर्णं ज्वलदग्न्याभं स तत्रोवास वामनः ॥११॥
तस्य पादद्वयं राजा क्षालयामास वै स्वयम् ।
तत्पादक्षालनजलं शिरसा च दधार सः ॥१२॥
यज्ञकर्म्म परित्यज्य तत्पूजायां मनो दधे ॥१३॥
तं पूजयित्वा विधिवन्निर्मलेनान्तरात्मना ।
कृताञ्जलिपुटः[१] स्थित्वा वामनं बलिरब्रवीत् ॥१४॥

बलिरुवाच ।

स्वागतन्ते महाबाहो नमस्तुभ्यं महात्मने ।
ब्रह्मर्षीणां तपः साक्षादस्मद्दृग्गोचरो मतः ॥१५॥
दातुमिच्छामि ते किञ्चित्तच्चये त्वाञ्च याचकम् ।
त्वादृशं याचकं प्राप्य सार्थकत्वमुपैम्यहम् ॥१६॥

---

१ B ०पुटो भूत्वा ।

वामन उवाच ।

उचितन्ते वचश्चैतत् प्रह्लादपौत्र धार्म्मिक ।
अहं याचक आयातो यजतस्ते मखोत्तमम् ॥१७॥
मह्यं दास्यसि यत्किञ्चिद् याचितस्तन्न संशयः ।
ब्राह्मणा हि वयं स्वल्पं याचेम बहुनिःस्पृहाः ॥१८॥

बलिरुवाच ।

कथं बहुतरं त्यक्त्वा स्वल्पं याचिष्यते भवान् ॥१९॥
अहमाढ्यः परो ब्रह्मंस्त्वञ्च तेजीयसां वरः ।
मां प्राप्य प्राप्तसर्व्वार्थो न भूयोऽर्हति याचितुम् ॥२०॥
भवान् कथं स्वल्पमर्थं नीत्वान्यं याचयिष्यति ॥२१॥
तस्मान्मां ननु[1] याचस्व द्वीपं गिरिमथापि वा ।
सागरं वा स्त्रियो वापि ग्रामान् वा नगराणि वा ॥२२॥
वनानि वाथ हस्त्यश्वरथान् वा कोटिकोटिशः ।
मणिमुक्तास्वर्णरूप्यकोषान् वा लक्षकोटिशः ॥२३॥
अपर्य्याप्तधनः कस्मात् स्वल्पं दास्ये भवादृशे ॥२४॥
यस्य प्रसादात् सर्व्वा मे विपुला राज्यसम्पदः ।
तस्मै ते ब्राह्मणश्रेष्ठ दातुं कृपणता न मे ॥२५॥
तस्माद् याचकदात्रो नौ योग्यं याचस्व वामन ।
नोपहास्यौ यथावश्च लक्ष्म स्यावः कदाचन ॥२६॥

वामन उवाच ।

यदुक्तं तद्धि सत्यन्ते वदन्यस्य दयावतः ।

---

१ B C. मामनु ।

किन्तु दाता भवान् यद्वत्तादृसमर्थौ च तादृशः ॥२७॥
अहं तापसवंशे हि [1]जातोऽल्पार्थेऽर्थको नृप ।
त्वन्तु पर्य्याप्तमैश्वर्य्यं प्राप्तोऽस्येव न चान्यथा ॥२८॥
स्वल्पत्वं विस्तरत्वञ्चाप्यपर्य्याप्तमपेक्षया ।
यत्तु स्वल्पमहं याचे परापेक्षन्तु तद्बहु ॥२९॥
ब्रह्माण्डराज्यस्वाल्पं स्याद्दशब्रह्माण्डचिन्तया ।
तस्मात् किन्नु त्वया ज्ञातं बहुत्वं स्वल्पतापि वा ॥३०॥
अर्थिनो यादृशे द्रव्ये कार्य्यं भवति भूपते ।
तदेव देयं दात्रा[2] वै नात्र स्वल्पादिभावना ॥३१॥
न देयं स्वल्पमित्येव [3]नित्यदात र्वचस्त्यज ।
स्वल्पं वा विस्तरं वापि दातारो ददते ध्रुवम् ।
अहन्ते यत्तु याचे वै तद्बले दीयतां मम ॥३२॥

बलिरुवाच ।

याचस्व किं तवाभीष्टं तदेव श्रूयते वद ।
[4][अज्ञात्वा ते ह्यभिप्रायं कथमेतद्वृथा वचः ॥३३॥

वामन उवाच ।

अहं तपस्चरिष्यामि बले ब्राह्मणबालकः ।
तदर्थं ते धरां याचे तुभ्यं त्रिपदसम्मिताम् ॥३४॥
एतेनैव कृतार्थोऽस्मि त्वञ्च सर्व्वप्रदो भवेः ।
निरीहा ब्राह्मणाः सर्व्वे तत्राहं याचकस्तव ॥३५॥

---

१ C जातोऽल्पार्थार्थके । २ C तस्मै च । ३ C D ०मित्यदातुः ।
४ A omits the portion bracketted.

बलिरुवाच ।]

अहो ब्राह्मणदायाद अयोग्यं किं नु भाषसे ।
न लज्जसे वचस्त्वत्र त्रिपादक्षितियाचने ॥३६॥
सभ्याः शृणुत नो[1] यूयं किमेष भाषते द्विजः ।
अहमेकः कथं कुर्य्यां विवादं परमं जनाः ॥३७॥

वामन उवाच ।

शृणु राजन् बले धीर वचो मम समार्थकम् ।
यन्मया याच्यते तन्मे दीयतां त्रिपदस्थलम्[2] ॥३८॥
यत्त्वयोक्तं याचनाय द्वीपवर्षादिवस्तु वै ।
प्रत्येकं दातुकामेन बलिना कामपूरिणा[3] ।
समुदायफलं ते तत्त्रिपदक्षितितो भवेत् ॥३९॥
मा चिन्तय महाभाग दानयोग्यन्तु याचितम् ।
मत्पादत्रिकसम्मानसम्मितां देहि मे धराम् ॥४०॥

बलिरुवाच ।

अहो ते वामन वचः सुदृढं नापरार्थकम् ।
कुतस्ते मतिरुत्पन्ना याचनेऽत्र द्विजर्षभ ॥४१॥
सर्व्वथा वामनोऽसि त्वं तेजसास्यमितो मतः ।
किं ब्रूत सभ्या एतस्मै वाञ्छितार्थः प्रदीयते ॥४२॥

सभ्या ऊचुः ।

यदेष ब्राह्मणसुतो याचते तत् प्रदीयताम् ।
याचमानस्य चाल्पं[4] हि दातुर्नाकीर्त्तिसूचकम् ॥४३॥

---

१ B omits नो । २ C त्रिपदं स्थलम् ।
३ C कामरूपिणा । ४ D स्वल्पं ।

शुक्र उवाच ।

इत्येवं निश्चितं ज्ञात्वा वामनस्य वचः परम् ।
दास्यामि खर्व्व ते द्रव्यं गृह्यतामित्युवाच सः ॥४४॥
इत्युक्त्वा जगृहे राजा तद्दित्सुर्जलभाजनम् ।
ताम्रपात्रे कुशजलं तिलांश्चादाय वै यदा ।
ॐ तत्सदित्युदाहार्षीत्तदा शुक्रोऽभ्यभाषत ॥४५॥

शुक्र उवाच ।

अहो विरम हे[1] राजन् सत्यमेव ददासि हे[2] ।
त्यज्यतां ताम्रपात्रञ्च यद्ब्रवीमि शृणुष्व तत् ॥४६॥
दाता दत्ते विचार्य्यैव दानं पात्रञ्च सत्तम ॥४७॥
ज्ञातोऽयं ते गृहीता यो दानं किं तच्च ते मतम् ।
[3]राजासि चाविचार्य्यैव कथं कर्म्म करोषि भो ॥४८॥

बलिरुवाच ।

नम आचार्य्य मे तुभ्यं पुरोहित भृगूद्वह ।
तेजसा धर्षितोऽस्म्यद्य[4] ब्रह्मरूपेण भार्गव ॥४९॥
जिज्ञासितं नाम[5] किञ्चिद्विप्र इत्येव दीयते ॥५०॥
भवांस्तु यदि जानीते एनं ब्राह्मणसत्तमम् ।
तन्मां कथय नामास्य गोत्रं कर्म्माण्यभीप्सितम् ॥५१॥

---

१ C भो । २ C ह ।
३ B राज ह्यस्य विचार्य्यैव । D राजा चासि विचार्य्यैव ।
४ C ०स्य । ५ B जिज्ञासितं न मे । CD जिज्ञासितुं न मे ।

शुक्र[1] उवाच ।

अयं बले महाभागः कश्यपाददितिसम्भवः ।
मायया वामनो भूतो[2] विष्णुरेष[3] सनातनः ।
देवानां कार्य्यसिद्ध्यर्थमवतीर्णोऽपकृत्तव ॥५२॥

बलिरुवाच ।

अहो विष्णुरयं देवो हरिर्नारायणः प्रभुः ।
देवानां कार्य्यसिद्ध्यर्थमवतीर्णोऽत्र मे कथम् ॥५३॥

[4][शुक्र उवाच ।

इन्द्रस्य राज्यं निखिलं यत्त्वया नृप भुज्यते ।
तदेव त्वां त्रिपादेन छलेनैष प्रयाचते ॥५४॥
धरामेकपदेनैष द्वितीयेन दिवं तथा ।
क्रमिष्यति च कायेन सर्व्वमेव नभःस्थलम् ।
तृतीयपादकार्य्यार्थं नास्ति यत्त्वं[5] प्रदास्यसि ॥५५॥

बलिरुवाच ।]

द्वौ पादावस्य दृश्येते तृतीयो नास्य दृश्यते ।
कथमेष त्रिभिः पादैर्याचते त्रिपदस्थलम् ॥५६॥
पादौ द्वावेव सर्व्वेषां वर्त्तते ख्यातमस्य च ।
अनेन वा कुतो लब्धं तृतीयचरणाम्बुजम् ॥५७॥

शुक्र उवाच ।

इन्द्रराज्यगृहीतुस्ते खण्डनाय पदद्वयम् ।

---

१ C शुक्राचार्य्य । २ B भूत्वा । ३ C ०रेव ।
४ B omits the portion bracketted. ५ C यत्तं ।

रजस्तमस्स्वरूपञ्च धराकम्पनहेतुक ।
एतायातस्तवाचेह विष्णुर्वामनरूपधृक् ॥५८॥
तव वै सात्त्विकाद्वाक्यादपरं सत्त्वरूपकम् ।
जातं पदं तृतीयं वै लघु चैव प्रकाशकम् ॥५९॥
अतएव पदान्यस्य त्रीणि जातानि भूपते ।
दत्त्वा त्रिपादसामग्रीं[1] त्वं कुत्र ननु स्थास्यसि[2] ॥६०॥

बलिरुवाच ।

एवमस्तु भृगुश्रेष्ठ त्रिपादच्छलं[3] दण्डकृत् ।
तृतीयपाद[4]मासाद्य स्थानं स्थास्यति सर्व्वथा ॥६१॥
नायं देवोऽखिलात्मा वै मद्भिन्नं किन्तु याचते ॥६२॥
किमतः परमस्तीह भाग्यं मम महत्तरम् ।
यदयं[5] वामनो विष्णुर्याचते मां सनातनः ॥६३॥
इदं सर्व्वममुष्यैव तत्त्व यद्यपि याचते ।
परमोऽनुग्रहो मेऽसौ कृत एतेन नान्यथा ॥६४॥
दानं ब्राह्मणभक्तिश्च वर्त्तते मम चेत्ययम् ।
ज्ञात्वैव ब्राह्मणो भूत्वा याचते मामतोऽस्ति किम् ॥६५॥
ज्ञातये ब्राह्मणायास्मै विष्णवे यज्ञरूपिणे ।
याचकाय स्वयञ्चैत्य ददामीष्टं न संशयः ॥६६॥
ददामीति वचः कस्मान्मम मिथ्या भविष्यति ॥६७॥

---

१ B त्रिपदसामग्रीं । २ D स्थास्यति । ३ B ०स्थल० ।
४ D ०पद० । ५ D यदयं ।

शुक्र उवाच ।

क्वचिन्मिथ्यापि धर्माय सत्यञ्चाधर्मकृत् क्वचित् ।
यदादिकविना गीतं तच्छृणुष्व महामते ॥६८॥
स्त्रीषु नर्म्मविवाहेषु वृत्त्यर्थे प्राणसङ्कटे ।
गोब्राह्मणार्थे हिंसायां नानृतं स्याज्जुगुप्सितम् ॥६९॥
तस्मात् सर्व्वस्वापचये मिथ्यावाक्यं समाचर ।
येन सर्व्वस्वरक्षा स्यात् प्राणरक्षा च शाश्वती ॥७०॥

बलिरुवाच ।

एवं चेत्तनु जानीषे प्रोक्तमेतत् पुरा न किम् ।
दास्यामीति यदा प्रोक्तं तदैतत् कथितं त्वया ॥७१॥
अहो ते मतिराज्ञाता विष्णुकार्य्यानुकूलिनी ।
चरन्ति ब्राह्मणाः केऽपि कूटभावेन भूतले ॥७२॥
भवितव्यं भवत्येव विष्णवे दीयतेऽखिलम् ॥७३॥
आहूयतां सती भार्य्या मम विन्ध्यावलिः प्रिया ।
तया युक्तोऽहमीशानमर्च्चयामि सनातनम् ॥७४॥
न वासुदेवभक्तानामशुभं विद्यते क्वचित् ॥७५॥
अस्माकं कुलदेवोऽयं विष्णुर्नारायणोऽव्ययः ।
प्रह्लादप्राणरक्षार्थं नरसिंहो बभूव ह[1] ॥७६॥
इत्युक्ता स बलिर्भूपो जग्राह जलभाजनम् ।
ताम्रपात्रे कुशजलं तिलांस्त्वादाय वै तदा[2] ॥७७॥

---

१ C D यः । २ B and D ताम्रपात्रे कुशतिलांश्चादाय वै बलिस्तदा ।

ॐ तत् सदित्युदाहृत्य मामपत्रादि चोल्लिखन् ।
निष्कामश्च सभार्य्यः सन् ददे एवमुदाहरत् ॥७८॥
[1]पदश्रवणमात्रेण वामनोऽभूदवामनः ॥७९॥
सात्त्विकं यत् पदं विष्णोरुत्पपात दिवं हि तत् ।
ब्रह्माण्डं स्फोटयामास तत्पदं दिवमुत्पतत् ॥८०॥
ब्रह्मा कमण्डलुजलं गङ्गेति पूर्व्वसञ्चितम् ।
ददौ पदाय[2] तस्मै च विरराम तदा च तत् ॥८१॥
राजसं तत्पदं तस्य तेन व्याप्तं धरातलम् ।
कायेन खल्त्[3] निचितं खलत्वे तामसं पदम् ॥८२॥
तृतीयपादवासं मे देहीत्येवं बबन्ध तम् ।
बद्धं दृष्ट्वा पतिं क्लिष्टं विन्ध्यावलिरुवाच ह ॥८३॥
प्रभो देव जगन्नाथ पुण्यश्रवणकीर्त्तन ।
बन्धं कथमसौ प्राप्तः सेवित्वा त्वां विमुक्तिदम् ॥८४॥
[4][अयं निष्कपटो राजा बलिर्वैरोचनोऽसुरः ।
कथमर्हत्यसौ बन्धं सेवित्वा त्वां विमुक्तिदम्] ॥८५॥
पदद्वयस्य स्थानं ते दत्तमप्यन्यदस्ति च ।
शिरो न दत्तं तच्चास्य गृह्यतां चरणार्पणात् ॥
मुक्तोऽयमसुरस्त्वास्तु ख्यातोऽस्तु तव सेवकः ॥८६॥

शुक उवाच ।

एवं विन्ध्यावलीवाक्यं गृहीत्वा स जनार्द्दनः ।

---

१ BD पादं । २ B पादाय । ३ BCD खञ्च ।
४ B omits the portion bracketted.

तस्य मूर्द्धन्यर्पयामास तृतीयं चरणं हरिः ॥८७॥
तदा जयजयध्वानो बभूव किल सर्व्वतः ।
मोचयित्वा बलिं भूपं जगाद मधुराक्षरम् ॥८८॥

भगवानुवाच ।

इन्द्राय राज्यं सकलं न्यर्पितं वर्त्ततां नृप ।
त्वञ्चापि सुतलं गच्छ पितामहसमन्वितः ॥८९॥
अष्टमेऽन्तर आयाते भवितेन्द्रो भवानिति ॥९०॥
अहं त्वया परिक्रीतो द्वारि तेऽहं गदाधरः ।
त्वया सदेक्षितः स्थाता सुतलेऽपि महामते ॥९१॥
स्थिता ते विमला कीर्त्तिः सर्व्वस्वदानकारिणः ॥९२॥
त्वत्तुल्यो ब्रह्मणः सृष्टौ न सन् भावी न भूतवान्[1] ।
यः शत्रवे ब्राह्मणाय ददौ सर्व्वस्वमात्मना ॥९३॥
त्वदर्थमवतारोऽयं वामनाख्यकृतो मया ।
प्रह्लादर्थः[2] पुरा यद्वन्नारसिंहो महाद्भुतः ॥९४॥
समाप्य कर्म चारब्धं सुतलं प्रविश भुवम् ॥९५॥

शुक उवाच । .

इत्युक्तस्तेन कृष्णेन वामनेन महात्मना ।
कर्म्म सन्तानयामास विधिश्रिष्टञ्च[3] यत् स्थितम् ॥९६॥
बलिर्ययौ च सुतलं पितामहसमन्वितः ।
विष्णुस्त्वान्तर्दधेऽंशेन तले तस्थौ गदाधरः ॥९७॥

---

१ D न भावी न च भूतवान् । २ B प्रह्लादार्थः । ३ B ०दृष्टञ्च ।

इत्येतत् पुण्यमाख्यानं चरितं वामनस्य ते ।
कथितं जैमिने साधो यथामति तवेच्छया ॥९८॥
इदं पठेद्वा[1] शृणुयात् सर्व्वपापैः प्रमुच्यते ।
[2]धनार्थी चाप्नुते कृत्स्नं धनं धर्म्मं[3] यशस्करम् ॥९९॥
राज्यार्थी लभते राज्यं पुत्रार्थी लभते सुतम् ।
बन्ध्या प्रसवयोग्या स्यात् कुरूपस्य सुरूपताम् ॥१००॥
विद्यां धर्म्मं तथारोग्यं प्रदत्ते फलमव्ययम् ।
दिनेषु खलु पुण्येषु पठेदेतत् समाहितः[4] ॥१०१॥
श्राद्धकाले पठेदेतद्देवताराधनेषु च ।
श्रावयेद्वा विष्णुभक्त्या स मुक्तिं परमां लभेत् ॥१०२॥

इति श्रीबृहद्धर्म्मपुराणे मध्यखण्डे वामनचरितं नाम सप्तचत्वारिंशोऽध्यायः ॥०॥

---

१ B पठित्वा । २ C धनार्थश्चाप्नुते कृत्स्नं ।
३ B धर्म्मार्थं । ४ D तदेतत् सुसमाहितः ।

## अष्टचत्वारिंशोऽध्यायः ।

शुक उवाच ।

सत्त्वरूपो हरेः पादो यदा ब्रह्माण्डमस्तकम् ।
आस्फोटयत्तदा ब्रह्मा कमण्डलुजलं ददौ ॥१॥
तदा[1] पर्य्याप्तवान् पादं हरिः सत्त्वगुणाश्रयः ॥२॥
प्रफुल्लकमलाभः स पादः कृष्णस्य दीप्तिमान् ।
तथैव तस्थौ तत्रैव गङ्गा तत्र यतः स्थिता ॥३॥
हरिरन्तर्दधे तस्य पादो गङ्गाश्रयः स्थितः ।
तस्मादपि समुद्भूता गङ्गायाता धरातलम् ।
कथा ते वर्णयिष्यामि तदिहैकमनाः[2] शृणु ॥४॥
पद्मनाभनाभिपद्माद्ब्रह्मा जातश्चतुर्मुखः ।
ततो मरीचिर्मारीचः कश्यपस्तत्सुतो रविः ॥५॥
तस्य पुत्रो मनुर्जातः श्राद्धदेव इति श्रुतः ।
तस्य पुत्रः पटुर्जज्ञे इक्ष्वाकुरिति विश्रुतः ॥६॥
तस्य पुत्रो विकुक्षिश्च विकुक्षेस्तु पुरञ्जयः ।
पुरञ्जयादनेनाश्च पृथुश्चाभूदनेनसः ॥७॥
पृथोर्जातो विश्वगन्धि चन्द्रस्ततोऽभवत्सुतः[3] ।
चन्द्राज्जातो युवानाश्वः[4] श्रावस्तस्तत्सुतोऽभवत् ॥८॥

---

१ B D यदा । २ D तदेवैकमनाः ।
३ B चन्द्रस्तस्याभवत्सुतः । ४ C D युवनाश्व ।

आवस्ताद्दृढदश्वोऽभूद्धुन्धुमारस्ततः सुतः ।
[1][धुन्धुमाराद्दृढाश्वोऽभूत् हर्य्यश्वस्तत्सुतोऽभवत् ॥९॥
[2][निकुम्भस्तत्सुतो जज्ञे [3]वर्हिणाश्वोऽभवत्ततः ।
[4]कृताश्वस्तत्सुतो जातस्ततः सेनजिदाख्यकः ॥१०॥
युवनाश्वस्ततो जातः मान्धाता तनयस्ततः ।
मान्धातुः पुरुकुत्सश्च त्रसदश्वस्ततोऽभवत् ॥११॥
अनरण्यः सुतस्तस्माद्धर्य्यश्वश्च ततोऽभवत् ।]
[5]ततस्त्रारुण इत्येव ततो जज्ञे त्रिबन्धनः ॥१२॥
त्रिबन्धनात् त्रिशङ्कुश्च हरिश्चन्द्रस्ततः सुतः ।
हरिश्चन्द्राद्रोहितोऽभूद्रोहिताद्धरितोऽभवत् ॥१३॥
हरितस्य सुतश्चापः[6] सुदेवस्तस्य चात्मजः ।
विजयस्तत्सुतो जज्ञे विजयाद् भरुकस्तथा][7] ॥१४॥
भरुकात्तु वृको [8]जातस्तत्सुतो बाहुकोऽभवत् ।
बाहुकस्य सुतो जज्ञे सगरो नाम वीर्य्यवान् ॥१५॥
द्वे भार्य्ये सगरस्यापि सुमतिः केशिनीति च ॥१६॥
और्व्वस्य च प्रसादेन सुमतिः सगरान्नृपात् ॥
पुत्रान् षष्टिसहस्राणि केशिनी त्वसमञ्जसम् ।

---

१ A omits 11 lines from धुन्धुमाराद्दृढाश्वोऽभूत् and B omits 5 lines from निकुम्भस्तत् सुतोयज्ञे ।
२ C निकुम्भस्तु ततो यज्ञे । ३ C हरिनाश्व । ४ C कृशाश्व ।
५ B and C ततस्त्रय्या । ६ B हरितस्य सुतः । C D ०स्तम्पः
७ C भरुकोऽभूत्ततः सुतः । ८ D जज्ञे ।

सुषुवे तैस्तु[1] सगरः शुशुभे राज्यसम्पदि ॥१७॥
[2]स पुत्रान् बलिनो दृष्ट्वा पृथिवीधारणक्षमान्।
स्वयं यष्टुं मनश्चक्रे आहूय ऋषिदेवताः ॥१८॥
तस्य [3]यज्ञहयं विप्र जह्रुर्नागा असूयया॥ १९॥
हृत्वा तं यज्ञियं सप्तिं महातलनिवासिनः।
कपिलस्यान्तिकेऽरचत् समाधिस्थस्य सर्व्वदा ॥२०॥
अप्राप्तघोटको राजा षष्टिसाहस्रमात्मजान्।
न्ययुङ्क्तान्वेषणेऽश्वस्य ते तथा चक्रुरेव हि ॥२१॥
अन्विष्य नववर्षेषु सप्तद्वीपेषु चैव हि।
सप्तस्वर्गेषु चान्विष्य न प्रापुर्यज्ञियं हयम् ॥२२॥
[4]ततः [5]कुद्दाननामाथ शस्त्रं सृष्ट्वा धरातलम्।
निचख्नुर्बहुभिस्तैस्तु प्राविशन् विवरानपि ॥२३॥
अतलं वितलञ्चैव[6] सुतलं तलमेव च।
रसातलं बभ्रमुस्ते नापश्यन् यज्ञियं हयम् ॥२४॥
महातले बभ्रमुस्ते नागा अन्तर्हितास्तदा।
ददृशुस्ते मखहयं मुनेरेकस्य सन्निधौ ॥२५॥
तं ते पितुर्हयं ज्ञात्वा तं मुनिं हयचोरकम्।
पलायितजने देशे तं दृष्ट्वा ते ह्यताड़यन्[7] ॥२६॥
आदौ चक्रुर्महाशब्दान् ढक्काद्यानप्यनादयन्[8]।

---

१ B तैस्व। २ C सुपुत्रान्। ३ B यज्ञे। ४ B तथा। D तदा।
५ D कुद्दाल०। ६ D ०श्चापि। ७ B नाप्यताड़यन्।
८ D ढक्कावाद्यानप्यनादयन्। B कराद्यानप्यनादयन्।

तदा पादैरप्रहार्य्यं ताड़यामासुरोजसा ॥२७॥
ततो भग्नसमाधिश्च कपिलो नाम वै मुनिः ।
उन्मिद्रयित्वा नयने तान्ददर्श स तामसान् ॥२८॥
हुङ्कारशब्दसंयुक्तचक्षुर्दर्शनतो मुनिः ।
तत्क्षणादेव वै भस्म चकार[1] तान् कृतागसः ॥२९॥
ततश्चिरायितान् दृष्ट्वा सगरः स्वान् सुतान् बहून् ।
चिन्तयन्नारदान्देवान्मृतान्[2] शुश्राव तांस्तथा ॥३०॥
ततः स पौत्रं[3] सगर आसमञ्जसमुत्तमम् ।
अंशुमन्तं न्ययुङ्क्तैव दर्शयन् ब्राह्मणाद्भयम् ॥३१॥
पितामहेन चाज्ञप्तः सोऽंशुमानासमञ्जसः ।
तेषां गत्यनुसारेण ययौ साधुर्महातलम् ॥३२॥
ददर्श कपिलं तत्र महापुरुषमीश्वरम् ।
प्रणम्य दण्डवद्देवं प्राञ्जलिः पुनरब्रवीत् ॥३३॥
प्रभो विश्वेश विश्वात्मन् भगवन् विश्वसम्भव ।
नारायण सुरैरीड्य सांख्ययोगप्रवर्त्तक ॥३४॥
पितामहो मे सगरश्चक्रवर्त्ती महायशाः ।
धरण्यां यजते देव हयमेधेन देवताः ॥३५॥
हयं तस्य मखस्थेमं[4] हृत्वा नागा महाबलाः ।
बन्धयित्वा समीपे ते नागा[5] अन्तर्हिताः क्वचित् ॥३६॥

---

१ D भस्मीचकार । २ B and D नारदाद्देवा० ।
३ C and D स्वपौत्रं । ४ C ०स्थैनं । B D ०स्थैव । ५ C स्थिता ।

एतदर्थाः पितृव्या मे आगता इह ते प्रभो[1] ।
तमोभावेन पूर्णास्ते नष्टास्त्वयि कृतागसः ॥३७॥
ब्रह्मदण्डहता एते दुर्गतिं परमां गताः ।
अनुग्रहस्वभावात्मा मोचयामून् कृतागसः ॥३८॥
पितामहपशुञ्चामुं दातुमर्हसि मे प्रभो ॥३९॥

कपिल उवाच ।

आसमञ्जस ते भद्रं नीयतां यज्ञियो हयः ।
त्वयि तन्तुस्य पिण्डस्य सगरस्य महात्मनः ॥४०॥
नष्टा एते पुराह्येव सुमतिस्तु वृथात्मजा ॥४१॥
एषां[2] मत्तस्वभावानां न किञ्चित् साधु विद्यते ।
विना मद्दर्शनं तात नाफलं दर्शनं मम ॥४२॥
एतेषां खलु सर्व्वेषामुद्धारायासमञ्जस ।
गङ्गा यदि समायाति भित्वा ब्रह्माण्डमस्तकम् ।
विष्णोः पदात् पुण्यजला तदैतेषां गतिर्भवेत् ॥४३॥
सा दुराराधिता देवी पार्व्वती शिववल्लभा ।
आराधिता चेत् सायाति तदा तेषां गतिर्भवेत् ॥४४॥
तस्या आनयनं तात कुरु यत्नेन भूयसा ।
सा ह्यनन्या गतिर्देवी गङ्गा पापवतां किल ॥४५॥
पितामहस्ते सगरस्तदर्थं यत्नवान् भवेत् ।
ततश्चेत् कार्य्यसिद्धिर्न तदा त्वं यत्नवान् भवेः ॥४६॥

---

१ B आगतास्ते हताः प्रभो ।
२ B C एषां तमःस्वभावानां । D तेषां तमःप्रभावानां ।

त्वत्तोऽपि चेन्न तत्कार्य्यं तदा पुत्रादयस्तव ।
आराधयेयुर्गङ्गां वै तत्र कोऽप्यानयिष्यति ॥ ४७॥
गच्छ नीत्वा क्रतुहयं सगरस्य समात्तया ॥ ४८॥

शुक उवाच ।

इत्युक्तः कपिलेनैव नप्ता सगरभूपतेः ।
अश्वं नीत्वा ययौ यत्र[१] याज्ञिकः सगरो नृपः ॥ ४९॥
मरणञ्च पितृव्याणां दुर्गतिश्चापि जैमिने ।
उद्धारहेतुं देवोक्तं भूपतौ [२]संन्यवेदयत् ॥ ५०॥
सगरो ज्ञातसर्व्वार्थः क्रतुं प्रारब्धमार्पयत् ।
गङ्गामाराधयामास पुत्राणां कुशलाय सः ॥ ५१॥
नाशक्नोत्तां दुराराध्यां गङ्गां विष्णुपदस्थिताम्[३] ।
[४][न्यस्य चांशुमते राज्यं कालस्य वशमीयिवान् ॥ ५२॥
ततश्चैवांशुमान्नाम गङ्गानयनकाम्यया ।
तपश्चेरे बहून् कालांस्तामानेतुं न चाशकत् ॥ ५३॥
तस्य पुत्रो दिलीपोऽभून्महाराजोऽतिधार्म्मिकः ।]
न्यस्य पुत्रे दिलीपे स राज्यं सर्व्वमकण्टकम् ।
गङ्गाकथां सुते दत्वा कालस्य वशमीयिवान् ॥ ५४॥
स दिलीपो महाराजो बहुकालांस्तपोऽचरत् ।
नाशक्नोद् वैष्णवात् पादाद्गङ्गामानयितुं द्विज ॥ ५५॥

---

१ B D तत्र । २ B C स न्यवेदयत् । ३ B D ०पदे स्थिता०
४ B omits the portion bracketted.

पुत्रे भगीरथे न्यस्य सप्तद्वीपेशतां नृपः।
कालधर्म्मं गतो ध्यात्वा देवीं गङ्गां परं ययौ ॥५६॥
राजा भगीरथस्त्वसौ सप्तद्वीपेश्वरः कृती।
श्रुतवान् पूर्व्ववंश्यानां दुर्गतिं ब्रह्मदण्डतः ॥५७॥
चिन्तयामास चोद्धारं तेषां परमचिन्तया।
अयमेव[1] समाराध्य गङ्गां देवीं ददर्श वै ॥५८॥

इति श्रीबृहद्धर्म्मपुराणे मध्यखण्डे गङ्गाराधने
अष्टचत्वारिंशोऽध्यायः ॥०॥

---

१ B अद्यमेव।

## ऊनपञ्चाशत्तमोऽध्यायः।

जैमिनिरुवाच।

पूर्व्वैरपारितं कर्म्म कथं राजा भगीरथः।
अशक्नोत् येन सा गङ्गा धरण्यामवतारिता ॥१॥
तद्वदस्व महाभाग श्रोतुं कौतुहलं मम।
कीदृशं वा तपश्चेरे तदा राजा भगीरथः ॥२॥

व्यास उवाच।

एवमुक्तो जैमिनिना शुकदेवः प्रहर्षितः।
जगाद ननु जाबाले गङ्गावतरणं परम् ॥३॥

शुक उवाच।

राजा भगीरथो नाम दिलीपतनयः पुरा।
वशिष्ठं परिपप्रच्छ ससन्देहेन चेतसा ॥४॥

राजोवाच।

कथं वशिष्ठ ब्रह्मर्षे मम पूर्व्वपितामहाः।
गङ्गामानयितुं शक्ता नाभवन् कृतपुण्यकाः ॥५॥
अहं वा तैर्न शक्तं यत् तत् करिष्यामि वा कथम्।
तद्वदस्व महाभाग कथं तेषां गतिर्भवेत् ॥६॥

वशिष्ठ उवाच[१]।

गङ्गादेवी दुराराध्या कथमल्पतपस्यया।
मनुष्यलोकं धरणीमायास्यति नृपोत्तम ॥७॥

---

१ B omits वशिष्ठ उवाच।

तव पूर्व्वैस्तु पुरुषैर्यत्तपः सञ्चितं परम् ।
तैस्तपोभिः [1]कृतैस्त्वयैस्तपसा च तव प्रभो ।
चतुर्भिः पुरुषैर्गङ्गाराधिता सागमिष्यति ॥८॥
तव जन्म तु तेषां वै तपसां सार्थकार्थकम् ।
त्वमाराधय तां गङ्गां सर्व्वथैवानयिष्यसि[2] ॥९॥

राजोवाच ।

गङ्गा कीदृक् कुत्र चास्ते तदर्थं वा कथन्त्वहम् ।
करिष्यामि तपो ब्रह्मंस्तन्मे वक्तुमिहार्हसि ॥१०॥

वशिष्ठ उवाच ।

ध्येया गङ्गा श्वेतरूपा त्रिनेत्रा वरदा शुभा[3] ।
अभया पद्महस्ता च पीयूषघटपाणिका ॥११॥
चतुर्भुजा दिव्यरूपा वसन्ती मकरे शुचौ ।
नानालङ्कारभूषाढ्या स्फुरत्स्मेरमुखाम्बुजा ॥१२॥
भ्राजमाना दशदिशो दीपयन्ती महाप्रभा ।
ज्वलत्कनकहेमाभा वासोयुगपिधायिनी ॥१३॥
कलिकल्मषसंहन्त्री पातु पर्व्वतकन्यका ।
एवं ध्येया त्वया गङ्गा स्मरणीया सुखप्रदा ॥१४॥
तद्विष्णोः परमं पदं ब्रह्माण्डोपरि राजते ।
तस्मिन् वसति सा गङ्गा त्यक्त्वा ब्रह्मकमण्डलुम् ।
पतिस्तस्या महादेवो मूर्त्त्या तत्रापि तिष्ठति ॥१५॥

---

१ B omits कृतैः । २ D सर्व्वार्थैरानयिष्यति । ३ B C D शिवा ।

हिमालयस्य निकटे त्वं नु तावत्तपः कुरु ।
यावन्न लप्स्यसे[१] गङ्गां [२][देवदेवीभिरर्चिताम् ॥१६॥
कुलप्रदीपो हि भवान् गङ्गां परमपावनीम् ।
दुराबोध्यां[३] महापुण्यां लोकेऽवतारयिष्यति ॥१७॥
त्वत्तुल्यो वाऽधिको वापि न भूतो न भविष्यति ।
त्रैलोक्यपावनीं गङ्गां] त्वञ्चावतारयिष्यसि ॥१८॥
[४]यत्तपो विहितं पूर्व्वैस्तत्तु पिण्डीकृतं हि सत् ॥१९॥
भवानेव बभूवेह यदपूर्व्वावतारकृत् ।
कीर्त्तिस्ते विपुला पुण्या लोके स्थास्यति निर्म्मला ॥२०॥
यद्ब्रह्म परमं सूक्ष्मं नरदृग्गोचरो भवेत् ।
स्वेषां पूर्व्वभुवां पुंसामुद्धारायावतारिता ।
अनायासेन त्रैलोक्ये भवेद्ब्रह्मत्वदायिनी ॥२१॥
भागीरथीति ते नाम्ना सा गङ्गा ख्यातिमेष्यति ।
वत्स साधो चिरं जीव किमपूर्व्वं करिष्यसि[५] ॥२२॥
नरेभ्यो दुर्लभां गङ्गां सुलभाञ्च करिष्यसि ।
गङ्गापूजानुगा राजंस्तव पूजा भविष्यति ॥२३॥

शुक उवाच ।

एवं तेन वशिष्ठेन प्रोक्तो राजा भगीरथः ।
जगाम तपसे धीमान् गङ्गानयनकारिणे[६] ॥२४॥

---

१ C लप्स्यते । २ B omits the portion bracketted.
३ C and D दुराराध्यां । ४ D तत्तपो ।
५ C करिष्यति । ६ D ०कारणे ।

एकपादस्थितस्तोर्द्ध्वं नभोदृष्टिर्निराश्रयः ।
तपस्तेपेऽशनं त्यक्त्वा दिव्यान् द्वादशवत्सरान् ॥२५॥
एवं तपस्यति ह्युग्रे महाराजे भगीरथे ।
देवाः सर्व्वे निरुच्छ्वासाः शिवं गत्वा न्यवेदयन् ॥२६॥
देवदेव महादेव चन्द्रमौले महेश्वर ।
त्रिलोचन नमस्तेऽस्तु पञ्चवक्त्र नमोऽस्तु ते ॥२७॥
नमस्ते नीलकण्ठाय शितिकण्ठाय ते नमः ।
नमो वृषाकपे तुभ्यं भैरवाय नमोऽस्तु ते ॥२८॥
सर्व्वाय चितिमूर्त्ते ते सर्व्वाधाराय शाश्वत ।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमो नमः ॥२९॥
भवाय जलमूर्त्ते ते जीवनामृतरूपिणे[१] ।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमो नमः ॥३०॥
रुद्राय चाग्निमूर्त्ते ते सर्व्वदेवमुखाय च ।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमो नमः ॥३१॥
[२][उग्राय वायुमूर्त्ते ते प्राणापानादिरूपिणे ।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमो नमः ॥३२॥
भीमायाकाशमूर्त्ते ते भूताय विष्णुरूपिणे ।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमो नमः ॥३३॥
पशुपतये यजमानमूर्त्ते[३] साध्याय साधकात्मने ।

१ D प्राणापानादिरूपिणे ।
२ B omits the portion bracketted.
३ C ०मूर्त्तेते ।

नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमो नमः ॥२४॥
महादेवाय ते सोममूर्त्ते च सुखरूपिणे।
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमो नमः] ॥२५॥
ईशानाय सूर्य्यमूर्त्ते तेजोरूपाय भास्वते[१]।
[२][नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमो नमः] ॥२६॥
अष्टमूर्त्ते[३] नमस्तुभ्यं नमस्ते कालमूर्त्तये।
नमो भगवते तुभ्यं प्रपन्नान् पाहि नः प्रभो ॥२७॥
भगीरथस्तपस्यन् वै न मन्ये किं करिष्यति।
भगीरथस्य तपसो महोग्रात् सभया वयम्।
भवन्तं शरणापन्ना यथोचितमथो कुरु ॥२८॥

भगवानुवाच।

मा चिन्तयत वै देवा नायं राजा भगीरथः।
युष्माकमपकाराय[४] तपस्यति महामनाः[५] ॥२९॥
चिकीर्षुर्यदयं राजा तन्मया पूरयिष्यते[६]।
यूयं गच्छत निर्भीताः स्वस्वस्थानानि हर्षिताः ॥४०॥

शुक उवाच।

इत्याकर्ण्य तदा देवाः प्रणम्य चन्द्रशेखरम्।
ययुः प्रहर्षिताः स्वर्गं गङ्गां सस्मार शङ्करः ॥४१॥

---

१ B ईशानसूर्य्यमूर्त्ते तेजोरूपाय भास्वते।
२ B omits the portion bracketted.
३ B नमस्तुभ्यमष्टमूर्त्ते।
४ B ०मुपकाराय।
५ D महात्मना।
६ B C ०ष्यति।

स्मृता गङ्गा समागत्य देवदेवं त्रिलोचनम् ।
प्रणिपत्य स्थिता तत्र शिवो गङ्गामथाब्रवीत् ॥ ४२॥
स्वागतन्ते वरारोहे गङ्गे पार्व्वति सुन्दरि ।
यदर्थं त्वं स्मृता देवि कथयामि शृणुष्व तत् ॥ ४३॥
सूर्य्यवंशोद्भवो राजा धर्म्मचारी भगीरथः ।
स तपस्यति यत्नेन त्वं कथं दयसे न तम् ॥ ४४॥
दया हि परमो धर्म्मस्तेन शून्यासि मन्यते ॥ ४५॥
त्वां समाराधयामासुः सगरांशुमदादयः ।
न तेषु दृष्टिपातञ्च कृतवत्यसि पार्व्वति ॥ ४६॥
ते सर्व्वे परमार्थज्ञा जितात्मानो जितेन्द्रियाः ।
शुचयः पुण्यकर्म्माणो यज्वानो दानशीलिनः ॥ ४७॥
तेषां चतुर्णां भूपानामेक एव तपस्यया ।
द्रष्टुं त्वां शक्यते किन्त्वत्र सर्व्वे कृतश्रमाः ॥ ४८॥
यद्गतं तद्गतं देवि दर्शय स्वं भगीरथम् ।
स तपस्यति धर्म्मात्मा त्वदर्थे[1] त्यक्तजीवितः ।
चिराधःपतितांस्तस्य चोद्धर प्रपितामहान् ॥ ४९॥

शुक उवाच ।

एवमुक्ता तदा गङ्गा विषस्वदना शिवम् ।
अभ्यभाषत वै किञ्चिन्मानमन्दाचदर्शिनी ॥ ५०॥

गङ्गोवाच ।

प्रभो शङ्कर देवेश किं मां त्वच्चयसि मन्यते ।

---

१ B तदर्थे ।

अहं त्वया परित्यक्ता कुत्र स्थास्यामि ते प्रिया[१] ॥५१॥
यत्नेन महता देव त्वां लब्धास्मि पतिं प्रभो ।
तां मां त्यजसि[२] कस्मात्त्वं सापराधास्मि मन्यते ॥५२॥
मामाराध्यति राजासौ पातालगमनायहि ।
कथं त्वमीदृशे कार्य्ये करोष्यनुमतिं प्रभो ॥५३॥
अन्योपायेन तत्पूर्व्वान् समुद्धर महेश्वर ।
न मे पातालगमने उपरोधं समाचर ॥५४॥
कलौ धरातले मर्त्त्या अवमंस्यन्ति मामिमाम् ।
कथं पापस्य पीड़ां तां सहिष्यामि महेश्वर ॥५५॥
नराणां पशुधर्म्माणामवमानभयादहम् ।
सगरादिकभूपानां नैव दर्शनमाययौ ॥५६॥
अतः क्षमस्व मे देव नोचितं पतनं मम ।
परामृश[३] त्वमेवेदं कथमेवं भवेन्मम ॥५७॥
भार्य्याहन्ते शिरः प्राप्ता दत्ते तस्य फलं मतम् ।
भार्य्या पतिमतिक्रान्ता चावसीदत्यसंशयम् ॥५८॥
याहं गता शिरः पत्युर्लोकनाथस्य शङ्कर ।
साहं कथं भविष्यामि पातालतलगामिनी ॥५९॥
यस्या मे वसतिर्देव चतुर्व्वक्त्रकमण्डलौ ।
साहं कथं भविष्यामि पातालतलगामिनी ॥६०॥
याहं हिमालयसुता पार्व्वतीति मता शुभा[४] ।

---

१ B प्रिय । २ D त्यक्ष्यसि । ३ B C D परामृष ।
४ C शुभा तथा ।

साहं कथं भविष्यामि पातालतलगामिनी ॥६१॥
याहं शैलसुता त्यक्त्वा धरां स्वर्गं[1] गता सुरैः ।
साहं कथं भविष्यामि पातालतलगामिनी ॥६२॥
याहं देवैस्तु दुर्लभा[2] पूजिता मेरुमूर्द्धनि ।
साहं कथं गमिष्यामि[3] पातालतलगामिनी ॥६३॥
याहं त्यक्त्वा वपुर्दिव्यं त्वां प्राप्तुं तनुमाश्रिता ।
साहं कथं गमिष्यामि[4] पातालतलगामिनी ॥६४॥
याहं गता ब्रह्मलोकं ब्रह्मभाण्डकृतालया ।
साहं कथं गमिष्यामि[5] पातालतलगामिनी ॥६५॥
[6]याहं वैकुण्ठभवनं गता च भवता सह ।
साहं कथं भविष्यामि पातालतलगामिनी ॥६६॥
उच्चैरुच्चैर्गतिर्यस्या ममाभूदुत्तरोत्तरा ।
[7]साहं कथं गमिष्यामि[8] पातालतलगामिनी ॥६७॥
निराकारापि याकारं प्राप्ता हरितनुद्रवम् ।
[9]साहं कथं गमिष्यामि[10] पातालतलगामिनी ॥६८॥

---

१ B दुर्गां ।  २ B C D दुर्लभ्या ।  ३ B C भविष्यामि ।
४ B and C भवि० ।  ५ B and C भवि० ।
६ C adds the sloka याहमित्यादि ।
७ D याहं त्यक्त्वा वपुर्दिव्यं त्वां प्राप्तुं तनुमाश्रिता ।
८ B and C भवि० ।
९ D साहं त्यक्त्वा वपुर्दिव्यं त्वां प्राप्तुं तनुमाश्रिता ।
१० B and C भवि० ।

याहं सुमेरु[१]दौहित्री कन्या हिमगिरेः शिव ।
[२]साहं कथं गमिष्यामि[३] पातालतलगामिनी ॥६९॥
त्यक्त्वा याहं ब्रह्मभाण्डं [४]प्राप्ता सत्त्वं हरेः पदम् ।
[५]साहं कथं भविष्यामि पातालतलगामिनी ॥७०॥
साकारापि निराकारा जलाकारं गता यतः ।
अतएव नदी भूत्वा पतिष्याम्यहमच्युत ॥७१॥
अत्युच्चैःशिरसो देव निपात एव नान्यथा ।
अत्रोदाहरणेनाहं नियुज्ये[६] भवतैव हि ॥७२॥
सह्यं मे पृथिवीयानं सह्योऽधःपात एव च[७] ।
सह्यस्त्वोच्चैःपरित्यागो न त्वत्यागो हि सह्यते ॥७३॥
भवतो यदि मूर्द्धानं लप्स्ये[८] याता धरातलम् ।
तदा मे हर्षितलं स्याद्गन्तुं विवरमच्युत ॥७४॥
न मह्यं रोचतेऽत्रापि वैकुण्ठस्य पुरोत्तमः[९] ।
त्वामेव लब्ध्वा सर्व्वत्र तुल्यभावा स्थिता प्रभो ॥७५॥

शुक उवाच ।

एवं करुणवाक्येन क्लिन्नचेता महेश्वरः ।
मधुरस्निग्धगम्भीरं गङ्गां वचनमब्रवीत् ॥७६॥

---

१ D समुद्र० । २ D साहं त्यक्त्वा वपुर्दिव्यं त्वां प्राप्तुं तनुमाश्रिता
३ B and C भवि० । ४ D सब्रह्माण्डं ।
५ D साहं त्यक्त्वा वपुर्दिव्यं त्वां प्राप्तुं तनुमाश्रिता ।
६ B नियोच्ये । ७ C हि । ८ B C D लप्स्ये ।
९ C वैकुण्ठः पुरुषोत्तमः ।

[1]शङ्कर उवाच ।

देवि गङ्गे महाभागे जाने त्वां मत्परायणाम् ।
अहं त्वां शिरसा धास्ये नदीभूताञ्च तत्र हि ॥७७॥
यदा भगीरथो राजा पातालं कथयिष्यति ॥७८॥
तदा त्वं वक्ष्यसि नृपं शिवस्त्वेन्मां धरिष्यति ।
तदाहं पृथिवीवर्त्म यास्यामि विवरं भुवम् ॥७९॥
अनाधारां पतिष्यन्तीं धरा धर्त्तुं न शक्ष्यति ।
मम पीड़ा धरायाश्च तदा पीड़ा भविष्यति ॥८०॥
एवमुक्तो नृपः शैवो मामप्याराधयिष्यति ।
अहञ्च त्वां निजे मौलौ धरिष्यामि न चान्यथा ॥८१॥
कलौ पापवनश्रेणीदावभूता भविष्यसि[2] ।
न पापेभ्यो भयं ते स्यात् पापानां भयदा भवेः[3] ॥८२॥
कलौ पापाश्रये काले कीर्त्तिस्ते पापनाशिका ।
भविष्यति त्रिलोकेषु त्वञ्च व्याप्ता स्थिता भव ॥८३॥
अभिशापोऽपि तेऽस्त्येव मेनकादेः सुदुर्व्वरः ।
अस्मांस्त्यक्त्वा गता यस्मात्तस्मात्त्वं तदृधःपतेः ॥८४॥
अतस्ते भवितव्यं हि नदीत्वं ननु वर्त्तते ।
तस्मादपरिहार्य्येऽर्थे न त्वं शोचितुमर्हसि ॥८५॥
त्वत्प्रवाहस्थलं सर्व्वं शिरो मम भविष्यति ।
सर्व्वत्र सकलान्देवान् सदा चालोकयिष्यसि ॥८६॥

---

१ D शिवः । २ D भविष्यति । ३ D भवेत् ।

प्राणत्यागं करिष्यन्ति त्वयि ये कृतसत्क्रियाः ।
ते मय्येव[1] विलीनाः स्युः सत्यं सत्यं वदाम्यहम् ॥८७॥
त्वया चाधिष्ठितं सर्व्वमूर्द्धञ्चाधः क्षितिस्तथा ।
तुल्यप्रभावं विज्ञेयं मा चिन्तय शिवे क्वचित् ॥८८॥

शुक उवाच ।

इत्युक्त्वा सा समाश्वस्तां[2] शम्भुना गिरिजा सती ।
तथेति हर्षिता भूत्वा राजानं द्रष्टुमैच्छत ॥८९॥

इति श्रीवृहद्धर्मपुराणे मध्यखण्डे गङ्गाराधनं नामोनपञ्चाशत्तमोऽध्यायः ॥०॥

---

१ C मय्येवं । २ B समाश्वस्ता ।

## अथ पञ्चाशत्तमोऽध्यायः ।

शुक उवाच ।

अथ देवी तदा गङ्गा तपस्यन्तं भगीरथम् ।
आत्मानं दर्शयामास श्वेतं चारुचतुर्भुजम्[१] ॥१॥
तां दृष्ट्वा ध्यानमात्रैकलभ्यां दृग्भ्याञ्च भूपतिः ।
अलभ्यलाभबोधेन बहुमेने नृपोत्तमः ॥२॥
हर्षाकुलितसर्व्वाङ्गो[२] रोमाञ्चितसुविग्रहः ।
गद्गदाचरया वाचा गङ्गां तुष्टाव भूपतिः ।
सहस्रनामभिर्दिव्यैः शक्तिं परमदेवताम् ॥३॥

भगीरथ उवाच ।

अहं भगीरथो राजा दिलीपतनयः शिवे ।
प्रणमामि पदद्वन्द्वं भवत्या अतिदुर्लभम् ॥४॥
पूर्व्वजानां हि पुण्येन तपसा परमेण च ।
मच्चक्षुर्गोचरीभूता त्वं गङ्गा करुणामयी ॥५॥
सार्थकं सूर्य्यवंशे[३] मे जन्म प्राप्तं महेश्वरि ।
कृतार्थोऽस्मि कृतार्थोऽस्मि [कृतार्थोऽस्मि][४] न संशयः ॥६॥

---

१ B श्वेतरूपां चतुर्भुजाम् । २ B C D हर्षाद्भुलित० ।
३ B and D ०वंशो ।
४ B omits the portion bracketted.

नमो नमो नमस्तेऽस्तु गङ्गे राजीवलोचने ।
देहोऽयं सार्थको मेऽस्तु सर्व्वाङ्गैः प्रणमाम्यहम् ॥७॥
[१]सहस्रनामभिः स्तुत्वा वाचं सार्थकयाम्यहम् ॥८॥

[२]शुक उवाच ।

गङ्गा सहस्रनाम्नोऽस्य स्तवस्य पुण्यतेजसः ।
ऋषिर्व्यासस्तथानुष्टुप्छन्दो विप्र प्रकीर्त्तितम् ।
सामूलप्रकृतिर्देवी गङ्गा वै देवतेरिता ॥९॥
अश्वमेधसहस्रस्य राजसूयशतस्य च ।
वाजपेयशतस्यापि गयाश्राद्धशतस्य च ॥१०॥
ब्रह्महत्यादिपापानां क्षये च परदुष्करे ।
निर्व्वाणमोक्षलाभे च विनियोगः प्रकीर्त्तितः ॥११॥
ॐकाररूपिणी देवी श्वेता सत्यस्वरूपिणी ।
शान्तिः शान्ता क्षमा शक्तिः परा परमदेवता ॥१२॥
विष्णुर्नारायणी काम्या कमनीया[३] महाकला ।
दुर्गा दुर्गतिसंहन्त्री गङ्गा गगणवासिनी ॥१३॥
शैलेन्द्रवासिनी दुर्गवासिनी दुर्गमप्रिया ।
निरञ्जना च निर्लेशा[४] निष्कला निरहङ्क्रिया ॥१४॥
प्रसन्ना शुक्लदशना परमार्थो पुरातनी ।
निराकारा च शुद्धा च ब्राह्मणी[५] ब्रह्मरूपिणी ॥१५॥

---

१ C omits the line सहस्रनामभिरित्यादि ।
२ A B D omit शुक उवाच । ३ C कामनीया ।
४ C D निर्लेपा । ५ B ब्रह्मणी । D ब्रह्माणी ।

दया दयावती दीर्घा दीर्घवक्त्रा दुरोदरा[1] ।
शैलकन्या शैलराजवासिनी शैलनन्दिनी[2] ॥१६॥
शिवा शैवी शाम्भवी च शङ्करी शङ्करप्रिया ।
मन्दाकिनी महानन्दा स्वर्धुनी स्वर्गवासिनी[3] ॥१७॥
मोक्षाख्या मोक्षसरणिर्मुक्तिर्मुक्तिप्रदायिनी[4] ।
जलरूपा जलमयी जलेशी जलवासिनी ॥१८॥
दीर्घजिह्वा करालाक्षी विश्वाख्या विश्वतोमुखी ।
विश्वकर्णा विश्वदृष्टिर्विश्वेशी[5] विश्ववन्दिता ॥१९॥
वैष्णवी विष्णुपादाब्जसम्भवा विष्णुवासिनी[6] ।
विष्णुस्वरूपिणी वन्द्या बाला वाणी बृहत्तरा ॥२०॥
पीयूषपूर्णा पीयूषवासिनी मधुरद्रवा ।
सरस्वती च यमुना गोदा गोदावरी वरी[7] ॥२१॥
वरेण्या वरदा वीरा वरकन्या वरेश्वरी ।
वल्लवी वल्लवश्रेष्ठा वागीश्वरा वारिरूपिणी[8] ॥२२॥
वाराही वनसंस्था च वृक्षस्था वृक्षसुन्दरी ॥२३॥
वारुणी वरुणज्येष्ठा[9] वरा वरुणवल्लभा ।
वरुणप्रणता दिव्या वरुणानन्दकारिणी ॥२४॥

---

१ B दीर्घवक्त्रा दीर्घदूरोदरा। B D दीर्घवक्त्रा दीर्घादूरोदरा।
२ D ०नन्दनी। ३ C ०स्वर्गवाहिनी।
४ B and D मुक्तिमार्गप्रदायिनी। ५ B ०शा। C विकर्णता।
६ B C D ०वाहिनी। ७ B D तथा।
८ C वल्लवी वल्लवश्रेष्ठा वाग्वीरा विश्वरूपिणी। B D वाग्वीरा वारिरूपिणी। ९ C ०श्रेष्ठा।

वन्द्या[१] वृन्दावनी वृन्दारकेड्या वृषवाहिनी[२] ।
दाक्षायणी दक्षकन्या श्यामा परमसुन्दरी ॥२५॥
शिवप्रिया शिवाराध्या शिवमस्तकवासिनी ।
शिवमस्तकमस्ता च विष्णुपादपदा तथा ॥२६॥
विपत्तिनाशिनी[३] दुर्गतारिणी[४] तारिणीश्वरी ।
गीता पुण्यचरित्रा च पुण्यनाम्नी शुचिश्रवा[५] ॥२७॥
श्रीरामा रामरूपा च रामचन्द्रैकचन्द्रिका ।
राघवी रघुवंशेशी सूर्य्यवंशप्रतिष्ठिता ॥२८॥
सूर्य्या सूर्य्यप्रिया सौरी[६] सूर्य्यमण्डलभेदिनी ॥२९॥
भगिनी भाग्यदा भव्या[७] भाग्यप्राप्या भगेश्वरी ।
भव्योच्चयोपलभ्या च कोटिजन्मतपःफला ॥३०॥
तपस्विनी तापसी च तपन्ती तापनाशिनी ।
तन्त्ररूपा तन्त्रमयी तन्त्रगोप्या महेश्वरी[८] ॥३१॥
[९]विष्णुदेहद्रवाकारा शिवगानामृतोद्भवा ।
आनन्दद्रवरूपा च पूर्णानन्दमयी शिवा[१०] ॥३२॥
कोटिसूर्य्यप्रभा पापध्वान्तसंहारकारिणी ।

---

१ B D वन्दा । २ B वृषवाहना । ३ C ०नाशिनी ।
४ B D दुर्गा । ५ A B D सुचिश्रवा । ६ C शौरी ।
७ B D भव्यदा भव्या ।
८ B मन्दरूपा मन्दमयी मन्दगोप्या मखेश्वरी ।
D मन्त्ररूपा मन्त्रमयी मन्त्रगोप्या मखेश्वरी ।
९ A गेह्र ।
१० B D आनन्दरूपा पर्णा च पूर्णानन्दमयी शुभा ।

पवित्रा परमा पुण्या तेजोधारा[1] शशिप्रभा।
शशिकोटिप्रकाशा[2] च त्रिजगद्दीप्तिकारिणी॥२३॥
सत्या सत्यस्वरूपा च सत्यज्ञा सत्यसम्भवा।
सत्याश्रया सती श्यामा नवीना नरकान्तका॥२४॥
सहस्रशीर्षा देवेशी सहस्राक्षी सहस्रपात्।
लक्षवक्त्रा लक्षपादा लक्षहस्ता विलक्षणा॥२५॥
सदा नूतनरूपा च दुर्लभा सुलभा शुभा।
रक्तवर्णा च रक्ताक्षी त्रिनेत्रा शिवसुन्दरी॥२६॥
भद्रकाली महाकाली लक्ष्मीर्गगणवासिनी।
महाविद्या शुद्धविद्या[3] मन्त्ररूपा सुमन्त्रिता[4]॥२७॥
राजसिंहासनतटा राजराजेश्वरी रमा।
राजकन्या राजपूज्या मन्दमारुतचामरा॥२८॥
वेदवन्दिप्रगीता[5] च वेदवन्दिप्रवन्दिता।
वेदवन्दिस्तुता दिव्या वेदवन्दिसुवर्णिता॥२९॥
सुवर्णा[6] वर्णनीया च सुवर्णगाननन्दिता[7]।
सुवर्णदानलभ्या च गानानन्दप्रियाऽमला॥४०॥
माला मालावती माल्या[8] मालतीकुसुमप्रिया।
दिगम्बरी दुष्टहन्त्री सदा दुर्गमवासिनी॥४१॥
अभया पद्महस्ता च पीयूषकरशोभिता।

---

१ B D वारि। २ B ०प्रकाशाभा। ३ B D सिद्ध।
४ D ०नुमन्त्रिता। ५ B देव। ६ C सुराणां।
७ D ०वन्दिता। ८ C D मान्या।

खड्गहस्ता भीमरूपा श्येनी मकरवाहिनी ॥४२॥
गुड्डुस्रोता वेगवती महापाषाणभेदिनी ।
पापाली रोदनकरी पापसंहारकारिणी ॥४३॥
[1]यातनाचयवैधव्यदायिनी पुण्यवर्द्धिनी ।
गभीराऽलकनन्दा च मेरुशृङ्गविभेदिनी ॥४४॥
स्वर्गलोककृतावासा स्वर्गसोपानरूपिणी ।
स्वर्गङ्गा पृथिवीगङ्गा नरसेव्या नरेश्वरी ॥४५॥
सुबुद्धिश्च कुबुद्धिश्च श्रीर्लक्ष्मीः कमलालया ॥४६॥
पार्व्वती मेरुदौहित्री मेनकागर्भसम्भवा ।
अयोनिसम्भवा सूक्ष्मा परमात्मा परत्वदा ॥४७॥
विष्णुजा विष्णुजनिका शिवमस्तकवासिनी[2] ।
देवी विष्णुपदी पद्मा जाह्नवी पद्मवासिनी ॥४८॥
पद्मा पद्मावती पद्मधारिणी पद्मलोचना ।
पद्मपादा पद्ममुखी पद्मनाभा च पद्मिनी ॥४९॥
पद्मगर्भा पद्मश्रया महापद्मगुणाधिका ।
पद्माक्षी पद्मललिता पद्मवर्णा सुपद्मिनी ॥५०॥
सहस्रदलपद्मस्था पद्माकरनिवासिनी ।
[3][महापद्मपुरस्था च पुरेशी परमेश्वरी ॥५१॥
हंसी हंसविभूषा च हंसराजविभूषणा ।
हंसराजसुवर्णा च हंसारूढा च हंसिनी ॥५२॥]

---

१ D यातनाय च ।    २ C विष्णुपादनिवासिनी ।
३ B omits the portion bracketted.

हंसाचरस्वरूपा च[1] ह्यचरा मन्त्ररूपिणी ।
आनन्दजलसंपूर्णा श्वेतवारिप्रपूरिका ॥५३॥
अनयाससदामुक्ति र्योग्यायोग्यविचारिणी ॥५४॥
तेजोरूपजलापूर्णा तेजसी दीप्तिरूपिणी ।
प्रदीपकलिकाकारा प्राणायामस्वरूपिणी ॥५५॥
प्राणदा प्राणनीया च महौषधस्वरूपिणी[2] ।
महौषधजला चैव पापरोगचिकित्सिका[3] ॥५६॥
कोटिजन्मतपोलभ्या प्राणत्यागोत्तरामृता ।
निःसन्देहा निर्महिमा निर्मला मलनाशिनी[4] ॥५७॥
शवारूढा शवस्थानवासिनी शववत्तटी ।
श्मशानवासिनी केशकीकसाचिततीरिणी ॥५८॥
भैरवी भैरवश्रेष्ठ[5]सेविता भैरवप्रिया ।
भैरवप्राणरूपा च वीरसाधनवासिनी ॥५९॥
वीरप्रिया वीरपत्नी कुलीना कुलपण्डिता ।
कुलवृक्षस्थिता कौली कुलकोमलवासिनी ॥६०॥
कुलद्रवप्रिया कुल्या कुल्यमालाजपप्रिया[6] ।
कौलदा कुलरचित्री कुलवारिस्वरूपिणी ॥६१॥
रणश्रीः रणभू रम्या रणोत्साहप्रिया रणे[7] ।
नृमुण्डमालाधरणा[8] नृमुण्डकरधारिणी ॥६२॥

---

१ B D सुरूपा च । २ C महौषधि० । ३ C ०चिकित्सका ।
४ B D ०वासिनी । ५ B D ०श्रेष्ठा । ६ B कुलमाला० ।
७ B D बलिः । ८ C D ०भरणा ।

विवस्त्रा च सवस्त्रा च सूक्ष्मवस्त्रा च योगिनी।
रसिका रसरूपा च जिताहारा जितेन्द्रिया ॥६३॥
यामिनी चार्द्धरात्रस्था कूर्च्चबीजस्वरूपिणी।
लज्जाशक्तिश्च[1] वाग्रूपा नारी नरकहारिणी[2] ॥६४॥
तारा तारस्वराढ्या च[3] तारिणीताररूपिणी।
अनन्ता चादिरहिता मध्यशून्या स्वरूपिणी[4] ॥६५॥
नक्षत्रमालिनी क्षीणा नक्षत्रस्थलवासिनी।
तरुणादित्यसंकाशा मातङ्गी मृत्युवर्जिता ॥६६॥
अमरामरसंसेव्या उपास्या शक्तिरूपिणी।
धूमाकाराग्निसंभूता धूमा धूमावती रतिः ॥६७॥
कामाख्या कामरूपा च काशी काशीपुरस्थिता।
वाराणसी वारयोषित् काशीनाथशिरःस्थिता ॥६८॥
अयोध्या मथुरा माया काशी काञ्ची अवन्तिका[5]।
द्वारका ज्वलदग्निश्च केवला केवलप्रदा[6] ॥६९॥
करवीरपुरस्था च कावेरी कवरी शिवा।
रक्षिणी च करालाक्षी कङ्काला शङ्करप्रिया ॥७०॥
ज्वालामुखी क्षीरिणी च क्षीरग्रामनिवासिनी।
रत्नाकरी दीर्घकर्णा सुदन्तदन्तवर्जिता[7] ॥७१॥
दैत्यदानवसंहन्त्री दुष्टहन्त्री बलिप्रिया।

---

१ B D शान्तिश्च। २ B ०वाहिनी। ३ B D ०रतारस्वराढ्या च। ४ B स्वरूपिणी। ५ D ह्यवन्तिका। ६ D केरला केरलप्रदा। ७ B C सुदन्ता।

बलिमांसप्रिया श्यामा व्याघ्रचर्म्मपिधायिनी ॥७२॥
जवाकुसुमसङ्काशा सात्विकी राजसी तथा ।
तामसी तरुणी वृद्धा युवती बालिका तथा ॥७३॥
यक्षराजसुता [१]जाम्बूमालिनी जम्बुवासिनी ।
जाम्बूनदविभूषा च ज्वलज्जाम्बूनदप्रभा ॥७४॥
रुद्राणी रुद्रदेहस्था रुद्रा[२] रुद्राक्षधारिणी ।
अणुश्च परमाणुश्च ह्रस्वा दीर्घा चकोरिणी ॥७५॥
रुद्रगीता विष्णुगीता महाकाव्यस्वरूपिणी ।
आदिकाव्यस्वरूपा च महाभारतरूपिणी ॥७६॥
अष्टादशपुराणस्था धर्म्ममाता च धर्म्मिणी ।
माता मान्या स्वसा चैव श्वश्रूश्चैव पितामही ॥७७॥
गुरुश्च गुरुपत्नी च कालसर्पभयप्रदा ।
पितामहसुता सीता शिवसीमन्तिनी शिवा ॥७८॥
रुक्मिणी रुक्मवर्णा च भैश्मी भैमी सुरूपिणी[३] ।
सत्यभामा महालक्ष्मी भद्रा जाम्बवती सती ॥७९॥
नन्दा भद्रमुखी रिक्ता जया विजयदा जया ।
जयित्री पूर्णिमा पूर्णा पूर्णचन्द्रनिभानना ॥८०॥
गुरुपूर्णा सौम्यभद्रा विष्टिः संवेशकारिणी ।
शनिरिक्ता कुजजया सिद्धिदा सिद्धिरूपिणी ॥८१॥
अमृताऽमृतरूपा च श्रीमती च जलामृता ॥८२॥

---

१ B C D जम्बू । २ B रुद्र ।
३ C भैमी स्वरूपिणी । B omits भैश्मी भैमी ।

निरातङ्का निरालम्बा निष्प्रपञ्चा विशेषिणी।
निषेधशेषरूपा च वरिष्ठा योषितांवरा॥८३॥
यशस्विनी कीर्त्तिमती महाशैलाग्रवासिनी।
धरा धरित्री धरणी सिन्धुर्बन्धुः सबान्धवा॥८४॥
सम्पत्तिः सम्पदीशा च विपत्तिपरिमोचिनी[1]।
जन्मप्रवाहहरणी जन्मशून्या निरञ्जनी॥८५॥
नागालयालया नीला जटामण्डलधारिणी।
सुतरङ्गजटाजूटा जटाधरशिरःस्थिता॥८६॥
पट्टाम्बरधरा धीरा कविः काव्यरसप्रिया।
पुण्यक्षेत्रा पापहरा हरिणी हारिणी हरिः॥८७॥
हरिद्रानगरस्था च वैद्यनाथप्रिया बलिः।
वक्रेश्वरी वक्रधारा वक्रेश्वरपुरःस्थिता॥८८॥
श्वेतगङ्गा शीतला च [2]उष्णोदकमयी रुचिः।
चोलराजप्रियकरी चन्द्रमण्डलवर्त्तिनी॥८९॥
आदित्यमण्डलगता सदादित्या च[3] काश्यपी।
दहनार्च्ची भयहरा विषज्वालानिवारिणी॥९०॥
हरा दशहरा स्नेहदायिनी कलुषाशनिः।
कपालमालिनी काली कला[4] कालस्वरूपिणी॥९१॥
इन्द्राणी वारुणी वाणी बलाका बालशङ्करी।
[5]गोगौर्ह्रीर्धर्मरूपा च धीः श्रीर्धन्या धनञ्जया॥९२॥

---

१ B D विमुक्तिः। २ D उष्णोदक०। ३ B D सदा नित्या च।
४ C काली। D कालाकालस्वरूपिणी। ५ D गौः।

वित् संवित् क्रुः कुवेरी भूर्भूतिर्भूमिधरा धरा[1] ।
ईश्वरी ह्रीमती क्रीड़ा[2] क्रीड़ाशाया जयप्रदा ॥९३॥
जीवन्ती जीवनी जीवा जयाकारा जयेश्वरी ।
सर्व्वोपद्रवसंशून्या सर्व्वपापविवर्जिता ॥९४॥
सावित्री चैव गायत्री मणेशी मणवन्दिता ।
दुष्प्रेक्षा दुष्प्रवेशा च दुर्द्दर्शा च सुयोगिणी ॥९५॥
दुःखहन्त्री दुःखहरा दुर्दान्ता यमदेवता ।
गृहदेवी भूमिदेवी वनेशी वनदेवता ॥९६॥
[3]गुहालया घोररूपा महाघोरनितम्बिनी ।
स्वीचम्बला चारुमुखी चारुनेत्रा लयात्मिका ॥९७॥
कान्तिः काम्या[4] निर्गुणा च रजःसत्त्वतमोमयी ।
कालरात्रिर्महारात्रिर्जीवरूपा सनातनी ॥९८॥
सुखदुःखादिभोक्त्री च सुखदुःखादिवर्जिता ।
महावृजिनसंहारा वृजिनध्वान्तमोचनी ॥९९॥
हलिनी खलहन्त्री च वारुणीपानकारिणी[5] ।
निद्रायोग्या महानिद्रा योगनिद्रा युगेश्वरी ॥१००॥
उद्धारयित्री स्वर्गङ्गा उद्धारणपुरःस्थिता ।
उद्धृता उद्धृताहारा लोकोद्धारणकारिणी ॥१०१॥
शङ्खिनी शङ्खधात्री च[6] शङ्खवाद्नकारिणी ।
शङ्खेश्वरी शङ्खहस्ता शङ्खराजविदारिणी ॥१०२॥

---

१ D भूमिर्धराधरा । २ B C D क्रीना । ३ B गृहालया ।
४ B कान्तिकाम्या । ५ B पापकारिणी । ६ C ०धारी च ।

पश्चिमास्या महास्रोता पूर्व्वदक्षिणवाहिनी ।
सार्द्धयोजनविस्तीर्णा पावन्युत्तरवाहिनी ॥१०३॥
पतितोद्धारिणी दोषक्षमिणी दोषवर्जिता ।
शरण्या शरणा श्रेष्ठा श्रीयुता श्राद्धदेवता ॥१०४॥
स्वाहा स्वधा स्वरूपाक्षी[1] सुरूपाक्षी[2] शुभानना ।
कौमुदी कुमुदाकारा कुमुदाम्बरभूषणा ॥१०५॥
सौम्या भवानी भूतिस्था भीमरूपा वरानना ।
वराहकर्णा[3] बर्हिष्ठा बृहच्छ्रोणी बलाहका ॥१०६॥
वेशिनी केशपाशाढ्या नभोमण्डलवासिनी ।
मल्लिका मल्लिकापुष्पवर्णा लाङ्गलधारिणी ॥१०७॥
तुलसीदलगन्धाढ्या तुलसीदामभूषणा ।
तुलसीतरुसंस्था च तुलसीरसलेहिनी[4] ।
तुलसीरससुस्वादुसलिला विल्ववासिनी ॥१०८॥
विल्ववृक्षनिवासा च विल्वपत्ररसद्रवा ।
मालूरपत्रमालाढ्या वैल्वी शैवार्द्धदेहिनी[5] ॥१०९॥
अशोका शोकरहिता शोकदावाग्निशृङ्खला ।
अशोकवृक्षनिलया रम्भा शिवकरस्थिता ॥११०॥
दाडिमी दाडिमीवर्णा दाडिमस्तनशोभिता ।
रक्ताक्षी वीरवृक्षस्था रङ्गिनी रक्तदन्तिका ॥१११॥

---

१ B C D विरूपाक्षी । २ C स्वरूपाक्षी । ३ B वराहवर्णा ।
४ C ०लेहनी । ५ D ०गेहिनी ।

रागिणी रागभार्य्या च सदा रागविवर्जिता।
[1]विरागरागसम्मोदा सर्व्वरागस्वरूपिणी ॥११२॥
[2]तानस्वरूपिणी तालरूपिणी तारकेश्वरी ॥११३॥
वाल्मीकिश्लोकिताश्लेषा[3] ह्यनन्तमहिमादिमा।
माता उमा सपत्नी च धराहारावलिः[4] शुचिः ॥११४॥
स्वर्गारोहपताका च दृष्टा भागीरथी द्रुता।
स्वर्गभीरामृतजला चारुवीचिस्तरङ्गिणी ॥११५॥
ब्रह्मतीरा ब्रह्मजला गिरिदारणकारिणी।
[5]गुहाविदारिणी दीर्घा दरीदारणकारिणी।
ब्रह्माण्डभेदिनी घोरनादिनी घोरवेगिनी ॥११६॥
ब्रह्मभाण्डवासिनी[6] च स्थिरवायुप्रभेदिनी।
[7]शुक्लधारामयी दिव्यशङ्खवाद्यानुसारिणी ॥११७॥
ऋषिस्तुता[8] शिवस्तुत्या ग्रहवर्गप्रपूजिता।
सुमेरुशीर्षनिलया भद्रा सीता महेश्वरी ॥११८॥
वङ्क्ष्वालकनन्दा च शैलसोपानचारिणी।
लोकाशापूरणकरी सर्व्वमानसदोहनी ॥११९॥
त्रैलोक्यपावनी धन्या पृथ्वीरचणकारिणी।

---

१ B C D विरागा। २ D तालस्वरूपिणी तालरूपिणी तालकेश्वरी।
३ C ०श्लोकिताश्लोघा। ४ B C ०वली।
५ A omits this line. ६ B ब्रह्माण्डवासिनी। ७ B शुक्ला०।
८ B D ऋषिस्तुता सुरस्तुत्या। C ऋषिस्तुत्या सुरस्तुत्या।

धरणी पार्थिवी पृथ्वी पृथुकीर्त्तिर्निरामया ॥१२०॥
ब्रह्मपुत्री ब्रह्मकन्या[१] ब्रह्ममान्या वनाश्रया ।
ब्रह्मरूपा विष्णुरूपा शिवरूपा हिरण्मयी ॥१२१॥
ब्रह्मविष्णुशिवत्वाढ्या ब्रह्मविष्णुशिवत्वदा ।
मज्जज्जनोद्धारिणी च स्मरणार्त्तिविनाशिनी ॥१२२॥
[२]स्वर्गदायिसुखस्पर्शा मोक्षदर्शनदर्पणा ।
आरोग्यदायिनी नीरुक् नानातापविनाशिनी ॥१२३॥
तापोत्सारणशीला च तपोधामा[३] श्रमापहा ।
सर्व्वदुःखप्रशमनी सर्व्वशोकविमोचनी ॥१२४॥
सर्व्वश्रमहरा सर्व्वसुखदा सुखसेविता ।
सर्व्वप्रायश्चित्तमयी वासमात्रमहातपाः ॥१२५॥
अतनुर्निस्तनुस्तन्वी तनुधारणवारिणी ।
महापातकदावाग्निः शीतला शशधारिणी ॥१२६॥
गेया जप्या चिन्तनीया ध्येया स्मरणलाञ्चिता ।
चिदानन्दस्वरूपा च ज्ञानरूपागमेश्वरी ॥१२७॥
आगम्या आगमस्था च सर्व्वागमनिरूपिता ।
इष्टदेवी महादेवी देवनीया दिविस्थिता ॥१२८॥
दन्तावलग्टही स्थात्री[४] शङ्कराचार्य्यरूपिणी ।
शङ्कराचार्य्यप्रणता शङ्कराचार्य्यसंस्तुता ॥१२९॥
शङ्कराभरणोपेता सदा शङ्करभूषणा ।

---

१ C ब्रह्मपुत्री च ब्रह्मण्या । २ B स्वर्गदात्री । ३ B तपोधाना ।
४ B दन्तीवलग्टहस्थात्री C ०ग्टहस्थात्री ।

शङ्कराचारशीला च शङ्करा च शङ्करेश्वरी ॥१२०॥
शिवस्रोताः शम्भुमुखी गौरी गगणगेहिनी[१] ।
दुर्गमा सुगमा शोप्या गोपिनी[२] गोपवल्लभा ॥१२१॥
[३]गोमती गोपकन्या च यशोदानन्दनन्दिनी ।
कृष्णानुजा कंसहन्त्री ब्रह्मराक्षसमोचनी ।
शापसंमोचनी लङ्का लङ्केशी च विभीषणा ॥१२२॥
विभीषाभरणी[४]भूषा हारावलिरनुत्तमा ।
तीर्थस्तुता तीर्थवन्द्या महातीर्थश्च[५] तीर्थसूः ॥१२३॥
कन्या कल्पलता केलीः कल्याणी कल्पवासिनी ।
[६]कलिकल्मषसंहन्त्री कालकाननवासिनी ।
कालसेव्या कालमयी कालिका कामुकोत्तमा ।
कामदा कारणाख्या च कामिनी कीर्त्तिधारिणी ॥१२४॥
कोकामुखी कोरकाक्षी[७] कुरङ्गनयनी करिः ।
कज्जलाक्षी कान्तिरूपा कामाख्या केशरिस्थिता ॥१२५॥
खगा खलप्राणहरा [८][खलदूरकरा खला ।
खेलन्ती खरवेगा च खकारवर्णवासिनी ॥१२६॥
गङ्गा गगणरूपा च गगणाध्वप्रसारिणी ।
गरिष्ठा गणनीया च गोपाली गोगणस्थिता ॥१२७॥
गोपृष्ठवासिनी गम्या गभीरा गुरुपुष्करा ।

---

१ C देहिनी । २ D गोपनी । ३ A and B omit this line.
४ C भूषणी । ५ C महातीर्था च । ६ A and B omit this sloka.
७ D कोटराक्षी । ८ C omits the portion bracketted.

गोविन्दा गोस्वरूपा च गोनाम्नी गतिदायिनी ॥१३८॥
घूर्णमाना [1]घर्म्महरा] घूर्णत्स्रोता घनोपमा ।
[2]घूर्णाख्यदोषहरणी घूर्णयन्ती जगत्त्रयं ॥१३९॥
घोरा घृतोपमजला घर्घरारवघोषिणी[3] ।
घोराङ्गोघातिनी घुष्या घोषा घोराघहारिणी[4] ॥१४०॥
घोषराजी घोषकन्या घोषनीया घनालया ।
घण्टाटङ्कारघटिता घाङ्कारी घङ्गचारिणी ॥१४१॥
ङान्ता ङकारिणी[5] ङेशी ङकारवर्णसंश्रया ।
चकोरनयनी[6] चारुमुखी चामरधारिणी ॥१४२॥
चन्द्रिका शुक्लसलिला चन्द्रमण्डलवासिनी ।
चौकारवासिनी चर्च्या[7] चमरी चर्म्मवासिनी ॥१४३॥
चर्म्महस्ता[8] चन्द्रमुखी चुचुकद्वयशोभिनी[9] ।
छचिला छचिताघावि[10]श्छत्रचामरशोभिता ॥१४४॥
छचिता छद्मसंहन्त्री दुरित[11] ब्रह्मरूपिणी ।
छाया च स्थलशून्या च[12] छलयन्ती छलान्विता ॥१४५॥

---

१ D घूर्णहरा । २ C घूर्णाघ्नी ।
३ C and D घोषणी । ४ A घोराघघारिणी ।
५ D ङान्ताङ्काकारिणी A ङान्ताकारिणी ।
६ D नयना । ७ C चौङ्कारवासिनी चर्य्या । ८ D चन्द्रहस्ता ।
९ C ०सेविता । १० C छचिताछचिता घारि D छचिनी छचिता घारि ।
११ C छुरितुर्ब्रह्मरूपिनी । १२ D छलशून्या च ।

छिन्नमस्ता छलधरा छवर्णा छुरिता[1] छविः।
जीमूतवासिनी जिह्वा जवाकुसुमसुन्दरी ॥१४६॥
जराशून्या जया ज्वाला जविनी जीवनेश्वरी।
ज्योतीरूपा जन्महरा जनार्दनमनोहरा ॥१४७॥
झङ्कारकारिणी झञ्झा झर्झरीवाद्यवादिनी[2]।
झणन्नूपुरसंशब्दा झरा ब्रह्मझरा झरा[3] ॥१४८॥
ञकारेशी ञकारस्था ञवर्णमध्यनामिका।
टङ्कारकारिणी टङ्कधारिणी टुण्टुकाटला[4] ॥१४९॥
ठक्कुराणी ठद्वयेशी ठङ्कारी ठक्कुरप्रिया।
डामरी डामराधीशा डामरेशशिरःस्थिता ॥१५०॥
डमरुध्वनिनृत्यन्ती डाकिनीभयहारिणी।
डीना डयित्री डिण्डी च डिण्डीध्वनिसदास्पृहा ॥१५१॥
ढक्कारवा च ढक्कारी ढक्कावादनभूषणा[5]।
णकारवर्णधवला[6] णकारी यान[7]भाविनी ॥१५२॥
तृतीया तीव्रपापघ्नी तीव्रा तरणिमण्डला।
तुषारकतुलास्था[8] च तुषारकरवासिनी ॥१५३॥
थकाराची[9] थवर्णस्था दन्दशूकविभूषणा।
दीर्घचञ्चुर्दीर्घधारा धनरूपा धनेश्वरी ॥१५४॥

---

१ A छवर्णा छुविता, B D छवर्णाछुरिता। २ D ०रूपिणी।
३ B D वरा। ४ B टङ्कारधारिणी टुण्टुकाटका।
५ B ढक्कावनादभूषणा। ६ C ०प्रवणा। ७ A C याण०।
८ C तुषारिकरतुल्या स्यात्। ९ B मकाराची।

दूरदृष्टिर्दूरगमा द्रुतगन्त्री द्रवाश्रया[१]।
नारीरूपा नीरजाक्षी नीररूपा नरोत्तमा[२] ॥१५५॥
निरञ्जना च निर्लेपा निष्कला निरहंक्रिया[३]।
[४]पारा परायणा पद्मा पारायणपरायणा।
पारयित्री[५] पण्डिता च पण्डा पण्डितसेविता ॥१५६॥
परा पवित्रा पुण्याख्या पालिका[६] पीतवासिनी।
फुत्कारदूरदुरिता[७] फालयन्ती फणाश्रया ॥१५७॥
[८][फेनिला फेनदशना फेना फेनवती फणा।
फेत्कारिणी फणिधरा फणिलोकनिवासिनी ॥१५८॥
फाण्टाकृतालया फुल्ला फुल्लारविन्दलोचना।
वेणीधरा बलवती वेगवारिधरावहा ॥१५९॥
वन्दारुवन्द्या वृन्देशी वनवासा वनाशया[९]।]
भीमराजी भीमपत्नी भवशीर्षकृतालया ॥१६०॥
भास्करा भास्करधरा भूषा भास्करवादिनी[१०]।
भयङ्करी भयहरा भीषणा भूमिभेदिनी ॥१६१॥
भगभाग्यवती भव्या भवदुःखनिवारिणी।
भेरुण्डा [११]भीमसुगमा भद्रकाली भवस्थिता ॥१६२॥

---

१ C द्रुतयन्त्री द्रवस्रवा। २ D अमरोत्तमा।
३ A B D omit this line. ४ B परा।
५ B पारयन्त्री, C पारकर्त्री। ६ B पाशिका।
७ A C ०दूरिता। ८ B omits the portion bracketted.
९ C D वनाश्रया। १० A C भाङ्कारवादिनी। ११ C भेरु०

मनोरमा मनोज्ञा च मृतमोचा महामतिः[1] ।
मतिदात्री, मतिहरा मठस्था मोचरूपिणी ॥१६३॥
यमपूज्या यज्ञरूपा यजमाना[2] यमस्वसा ।
यमदण्डस्वरूपा च यमदण्डहरा यतिः ॥१६४॥
रचिका राचिरूपा च रमणीया रमा रतिः ।
लवङ्गी लेशरूपा च लेशनीया लयप्रदा ॥१६५॥
विबुद्धा[3] विषहस्ता च विशिष्टा वेशधारिणी ।
श्यामरूपा शरत्कन्या शारदी शवला[4] श्रुता ॥१६६॥
श्रुतिगम्या श्रुतिस्तुत्या श्रीमुखी शरणप्रदा[5] ।
षष्ठी षट्कोणनिलया षट्कर्मपरिसेविता ॥१६७॥
सात्त्विकी सत्व[6]सरणिः सानन्दा सुखरूपिणी ।
हरिकन्या हरिजला[7] हरिद्वर्णा हरीश्वरी[8] ॥१६८॥
क्षेमङ्करी क्षेमरूपा क्षुरधाराम्बुलेशिनी ।
अनन्ता[9] इन्दिरा ईशा उमा ऊषा ऋवर्णिका ॥१६९॥
लृस्वरूपा लृकारस्था लॄकारी एषिता[10] तथा ।
ऐश्वर्य्यदायिनी ओंकारिणी औमककारिणी ॥१७०॥
अन्तशून्या अङ्कधरा अस्पर्शा अस्त्रधारिणी ।

---

१ C मृतामोक्षमहामतिः । २ B C D यजमानी । ३ विबुद्धा ।
४ B शरणा, C D शरला । ५ D ०प्रिया । ६ C सत्य० ।
७ B omits हरिजला । ८ C हरेश्वरी । ९ A D अनन्त ।
१० B एधिता, D एषिका ।

सर्व्ववर्णमयी वर्णब्रह्मरूपाखिलात्मिका[१] ॥१७१॥

[२]शुक उवाच ।

इमं सहस्रनामाख्यं भगीरथकृतं पुरा[३] ।
भगवत्या हि गङ्गाया महापुण्यं जयप्रदम् ॥१७२॥
यः पठेच्छृणुयाद्वापि[४] भक्त्या परमया युतः ।
तस्य सर्व्वं सुसिद्धं स्यादिनियुक्तं फलं द्विज ॥१७३॥
गङ्गैव वरदा तस्य भवेत् सर्व्वार्थदायिनी ।
ज्यैष्ठे दशहरातिथ्यां पूजयित्वा सदाशिवाम् ॥१७४॥
दुर्गोत्सवविधानेन विधिनागमिकेन वा ।
गङ्गासहस्रनामाख्यं स्तवमेनमुदाहरेत् ॥१७५॥
तस्य सम्वत्सरं देवी गृहे बद्धेव तिष्ठति ।
पुत्रोत्सवे विवाहादौ श्राद्धाहे जन्मवासरे ॥१७६॥
पठेद्वा शृणुयाद्वापि तत्तत्कर्म्माक्षयं भवेत् ।
धनार्थी धनमाप्नोति लभेद्भार्य्यामभार्य्यकः ॥१७७॥
अपुत्रो लभते पुत्रं[५] चातुर्वर्ग्यार्थसाधकम्[६] ।
युगाद्यासु पूर्णिमासु रविसंक्रमणे तथा ॥१७८॥
दिनक्षये व्यतीपाते पुष्यायां हरिवासरे ।
अमावास्यासु सर्व्वासु अतिथौ च समागते ॥१७९॥

---

१ A °ब्रह्मरूपात्मिका । C adds the following line here प्रसन्ना शुक्लदशना परमार्था पुरातनी । २ A B add ॐ ।
३ C भगीरथपुराकृतं । ४ C पठेद्वा पाठयेद्वापि ।
५ C पुत्रान् । ६ B °साधिकं ।

शुश्रूषौ सति सत्सङ्गे[1] गवां स्थानगतोऽपि वा।
मण्डले ब्राह्मणानाञ्च पठेद्वा शृणुयात् स्तवम् ॥१८०॥
स्तवेनानेन सा गङ्गा महाराजे भगीरथे।
बभूव परमप्रीता[2] तपोभिः पूर्व्वजैर्यथा ॥१८१॥
तस्माद्यो भक्तिभावेन स्तवेनानेन स्तौति च।
तस्यापि तादृशी प्रीता सगरादितपो यथा।
स्तवेनानेन सन्तुष्टा देवी राज्ञे वरं ददौ ॥१८२॥

देव्युवाच।

वरम्बरय भूपाल वरदास्मि तवागता।
जाने तव हृदिस्थञ्च तथापि वद कथ्यते ॥१८३॥

राजोवाच।

देवि विष्णोः पदं त्यक्त्वा गत्वापि[3] विवरस्थलम्।
उद्धारय पितॄण् पूर्व्वान्[4] धरामण्डलवर्त्मना ॥१८४॥
अस्तौषं[5] भवतीं यच्च तेन यः स्तौति मानवः।
न त्याज्यः स्यात्त्वया सोऽपि वर एष द्वितीयकः ॥१८५॥

देव्युवाच।

एवमस्तु महाराज कन्यास्मि तव विश्रुता।
भागीरथीति गेया स्यां[6] वर एषोऽधिकस्तव ॥१८६॥
मां स्तोष्यति जनो यस्तु त्वत्कृतेन स्तवेन हि।

---

१ B D सद्भक्तेः। २ B परमाप्रीता। ३ B D गतापि।
४ B D सर्व्वान्। ५ B अस्तोषीं, D अस्तौषीत्।
६ B D॰गेयां मां।

तस्याहं वशगा भूयां निर्व्वाणमुक्तिदा नृप[१] ।
शिव आराध्यतां राजन् शिरसा मां दधातु सः ॥१८७॥
अन्यथाहं निरालम्बा धरां भित्वान्यथा व्रजे[२] ।
पृथिवी च न मे वेगं सहिष्यति कदाचन ॥१८८॥
सुमेरुशिर आरुह्य शङ्खध्मानं करिष्यसि ।
तेन त्वामनुयास्यामि ब्रह्माण्डकोटिभेदिनी ॥१८९॥

शुक उवाच ।

इत्युक्त्वा सा तदा देवी तत्रैवान्तरधीयत ॥१९०॥
भगीरथोऽपि राजर्षिरात्मानं बह्वमन्यत[१] ॥१९१॥

इति श्रीबृहद्धर्मपुराणे मध्यखण्डे गङ्गास्तवसहस्रनामवर्णने पञ्चाशत्तमोऽध्यायः ॥०॥

---

१ A omits this line. २ C व्रजेः ।

१ C भगीरथोऽपि राजर्षिरात्मानं बह्वमन्यत ।
इत्युक्त्वा सा तदा देवी तत्रैवान्तरधीयत ॥

# एकपञ्चाशत्तमोऽध्यायः ।

शुक उवाच ।

शृणु विप्र महाश्चर्य्यं गङ्गावतरणं क्षितौ ।
श्रवणं कीर्त्तनं यस्य महापातकनाशनम्[१] ॥१॥
राजा लब्धवरो दिव्यं रथमारुह्य कानकम् ।
महाजवं महारूपं चतुर्भिर्वाजिभिर्युतम् ॥२॥
रराज शङ्खहस्तः स ज्वलत्कनकरूपवान् ।
नानाभरणभूषाढ्यो मुकुटोज्ज्वलमस्तकः ॥३॥
दीर्घबाहुर्दीर्घदृष्टिर्दीर्घदर्शी महातपाः ।
ललाटफलके दीर्घे सुदीर्घतिलकोज्ज्वलः ॥४॥
उत्तुङ्गवक्षा रक्ताक्षः पीतवासा लसत्तरः ।
हस्ते तस्य शुभः शुक्लो रराज शङ्ख उत्तमः ॥५॥
सुमेरुशृङ्गे विपुले [२]सकलश्चन्द्रमा इव ।
संस्तूयमानो लोकैः स ऋषिभिर्जयवादिभिः[३] ॥६॥
उवाच सारथिं राजा किञ्चित्काव्यमुत्तमम् ।
स तेनोक्तो नृपेणैव चालयामास घोटकान् ॥७॥
उत्पेतुर्घोटकास्ते च नभश्चचार एव च ।
निस्वनः पवनस्यैव मानसस्तारकस्तथा ॥८॥

---

१ A नाशकम् । २ C शकलः ।
३ C संस्तूयमानो लोकेशो ऋषिभिर्ज्जयवादिभिः ।

देव्युवाच ।

भव त्वं चतुर्धा भूप शिरस्त्वार एव च[१] ।
तदाहञ्च चतुर्धा त्वां गमिष्यामि चतुर्दिशः ॥२५॥

राजोवाच ।

त्वमीशा सर्व्वलोकानां[२] सर्व्वलोकशुभङ्करी ।
तव सा विद्यते शक्तिर्मनुष्यस्य कथं मम ॥२६॥
त्वदग्रे सा न शम्भोश्च नरान् शम्भून् करिष्यसि[३] ।
उपायज्ञा स्वयं देवि सृष्ट्वोपायं[४] दिशो व्रज ॥२७॥

शुक उवाच ।

इत्युक्ता सा नरेन्द्रेण देवेन्द्रपरिषेविता ।
स्वयं गङ्गा चतुर्धाऽभूत् शङ्करप्रियंकरा शुभा[५] ॥२८॥
वेगेनाल्पेन तास्तिस्रो धाराभूताः समुज्ज्वलाः ।
ध्वनयित्वा च ताः[६] शङ्कान् मूर्त्तिमत्यः पुरःसराः ॥२९॥
सीता पूर्व्वां दिशं[७] याता भद्राख्या चोत्तरां ययौ ।
वङ्क्षुश्च पश्चिमां याता गिरिसोपानसङ्क्रमाः ॥३०॥
भद्राश्वे केतुमाले च कुरौ वर्षे च ता द्विज ।
त्यक्त्वा शङ्कान् वेगवत्यो विविशुर्जलधीन् पृथक् ॥३१॥
दक्षिणेऽलकनन्दाख्या मेरौ मन्दाकिनी तु या ।

---

१ B भवत्वं हि चतुर्धाभूः शिरास्त्वार एव च । C D शिरास्त्वारएव च ।
२ D सर्व्वसत्वानाम् ।
३ B नरान् शम्भूकरिष्यति ।
४ C D सृष्ट्वोपायं ।
५ A C ०कराः शुभाः ।
६ B C तान् ।
७ B सीतां पूर्व्वदिशम् ।

सा धारा विपुला चारुर्महावेगा महाबला ।
दक्षिणाभिमुखी प्रागाद्भगीरथरथानुगा ॥२२॥
मेरोश्च[1] दक्षिणे शृङ्गे गुहां दृष्ट्वा भगीरथः ।
शङ्खध्वनिं परित्यज्य गङ्गां वचनमब्रवीत् ॥२३॥
राजोवाच ।
देवि गङ्गे गुहा ह्येषा दुष्प्रवेशविनिर्गमा ।
तमोमयी महाघोरा कथमेतां तराम्यहम् ॥२४॥
देव्युवाच ।
सत्यमेषा दरी घोरा दुष्प्रवेश[2]विनिर्गमा ॥२५॥
ऐरावतः[3] शक्रहस्ती गुहामेतां विदारयेत् ।
तमानय महाभाग यदि त्वं गन्तुमिच्छसि ॥२६॥
शुक उवाच ।
श्रुत्वेवं वचनं तस्या ययावैरावतं नृपः ।
ऐरावत महाभाग नमस्ते शुक्लभास्वर ॥२७॥
ऐरावत उवाच ।
किं करिष्यामि ते कार्य्यं कथं मां त्वं नमस्यसि ।
महाध्यं किन्नु ते कर्म्म न निष्पन्नं मया विना ॥२८॥
राजोवाच ।
अहं भगीरथो राजा दिलीपतनयः सुतः ।
गङ्गां नीत्वा व्रजाम्येष उद्दिधीर्षुः पितामहान् ॥२९॥

---

१ C मेरोस्तु । २ B दुष्प्रवेशा । ३ A ऐरावणः ।

गच्छन्ती[१] तत्र गङ्गेह मेरोर्दक्षिणशृङ्गतः ।
दृष्टा दरी[२] महाघोरा[३] दुष्प्रवेशविनिर्गमा ॥४०॥
त्वया विदीर्णा सा चेत् स्यात्तदा गङ्गा विनिर्व्रजेत् ।
त्वया विना दरी सा तु न स्याद्द्वारप्रदा गज ॥४१॥

[४][ऐरावत उवाच ।

एवमेव करिष्यामि प्रविशामि गुहामहम् ।
तत्र गङ्गा मया सार्द्धं निशामेकां वसेद्यदि ॥४२॥

राजोवाच ।

त्वया सार्द्धं वसेद्गङ्गा सहेथास्त्वं जवं परम् ।
एवं श्रुत्वा च राजानं सुरगजोऽभ्यभाषत] ॥४३॥

ऐरावत उवाच ।

यदि तस्या अहं वेगं न सहिष्ये भगीरथ ।
[५]तदसाध्यं कथं कर्म्म करिष्ये[६] ते तदा वद ॥४४॥

राजोवाच ।

यदि तस्या भवान् सोढुं शक्नोति भवता[७] तदा ।
सङ्गमिष्यति सा सत्यं नात्र कार्य्या विचारणा ॥४५॥
दरी[८] विदारं कर्त्तुं सा समर्थेति कियद्वचः ।
मेरुमेव विदार्य्यैषा गन्तुं शक्नोति शाङ्करी ॥४६॥

---

१ A गच्छती B गच्छेति । २ B D C दृष्टा देवी ।
३ B तदा घोरा । ४ B omits the portion bracketted.
५ C तदा । ६ A करिष्यते । ० C करिष्यामि । ७ B भवते ।
८ C देवी ।

इन्द्रस्य देवराजस्य देवी सम्मानकारिणी।
त्वामाकर्षयति तत्कार्य्यं यथोचितमथो कुरु ॥४७॥

ऐरावत उवाच।

भद्रं तस्या अहं वेगं सहिष्ये प्रविशे गुहाम्।
वसेत् सा च मया सार्द्धं निशामेकामसंशयम् ॥४८॥

शुक उवाच।

इत्युक्त्वा शक्रमातङ्ग आगत्य प्राविशद्दरीम्[१]।
शङ्खं सस्वान राजापि गङ्गा वेगवती बभौ ॥४९॥
दृष्ट्वा वेगवतीं गङ्गां श्रुत्वा घोरं यवस्वनम्।
भयविभ्रान्तनयनो[२] गजराजोऽभवत्तदा ॥५०॥
प्रतिगन्तुं न चाशक्नोत्प्रवेश[३]द्वारदेशतः।
दक्षिणाभिमुखो भूत्वा मेरुशृङ्गं विदार्य्य सः ॥५१॥
हुंकारं घोषमुन्नाद्य दुद्राव[४] प्रपलायितः।
एतेनैव ह्युपायेन प्राप्य निःसरणं शिवा ॥५२॥
भगीरथरथं चानुगताऽगाद्वेगशालिनी।
ततोऽतीत्य महादुर्गान् गिरीन् गङ्गा गरीयसी ॥५३॥
निषधं हेमकूटञ्च व्यतीयाय महेश्वरी।
विलसन्ती तरङ्गैश्च नृत्यन्तीव ततस्ततः ॥५४॥
क्वचिदावर्त्तनटना दीर्घस्रोताः[५] क्वचित् क्वचित्।

---

१ B गिरिसदरीं। C गिरिं। २ B D भयाद्विभ्रान्तनयनो।
३ C प्रविशत्। ४ B हुङ्कारघोषमुन्नादमुद्राव। ५ A दीर्घस्रोता।

करिकेशरिसंघातैः पार्व्वतैः प्रविलोड़िता[1] ॥५५॥
विचित्रान् देवदेवीभिर्वहन्ती पुष्पसञ्चयान्।
महेश्वरशिरः[2] प्राप्तुं महावेगवती बभौ ॥५६॥
कथं सहेत मे वेगं शिरसा शिव इत्युत।
आकूतं मानसं कृत्वा ययौ शङ्खध्वनानुगा ॥५७॥
शिवोऽपि गङ्गां तां धर्त्तुं मौलिं विस्तीर्य्य धूर्जटिः।
हिमालयचतुर्भागमारुह्य स तथा स्थितः ॥५८॥
गङ्गायाः कीदृशो वेगो मया ज्ञेय इतीर्य्यया।
ततो गङ्गा देवनदी वेगफेणवती सती ॥५९॥
[3]यथाविशच्छम्भुशीर्षं सहस्राणि हिमालयात्।
योजनानि चिपञ्चाशल्लङ्घयित्वा महाबला ॥६०॥
एकदेवापतच्छम्भोर्मौलिं बहुजटावनम्।
यथेच्छेनैव वेगेन पपात शिर ऐश्वरम् ॥६१॥
बभ्राम शम्भुशिरसि ईहमाना विनिर्गमम्।
यत्र यत्र व्रजत्येषा शिवशीर्षे जटावने ॥६२॥
तत्रैव नूतनं स्थानं ददर्श सुरनिम्नगा।
एवं बभ्राम शिरसि शिवस्यानन्ततेजसः ॥६३॥
श्रान्ता बभूव परमा शङ्खध्वन्युपकर्षिता।
आविर्भूय वत्सरान्ते गङ्गा शिवमथाब्रवीत् ॥६४॥

---

१ B प्राविलोड़िता। D पार्व्वतैस्वप्रलोड़िता। २ B महेश्वरि शिर।
३ A यथा ह्यपच्छम्भुशीर्षं। B यथाविंशच्छिर्णशीर्षसहस्राणि।
D तथाविशच्छीर्णशीर्षं।

देव्युवाच ॥

अनन्तशक्ते भगवन् देहि निःसरणं मम ।
शङ्खध्वानाकृष्टेनैष[1] मामाकर्षति भूपतिः ॥६५॥
तेनाहं पीड़िता भूता भ्रान्ता तव[2] जटावने ।
द्वारमप्राप्य निर्वेगा त्वामहं शरणं गता ॥६६॥
त्वमनन्तजटारण्ये द्वारं देहि महेश्वर ।
भूयात्[3] सगरपुत्राणां ब्रह्मदण्डविमोचनम् ॥६७॥
कृतापराधां मां देव क्षमस्व परमेश्वर ॥६८॥

भगवानुवाच ।

मास्त्वापि त्वं तत्त्वं नेतुमैच्छो वेगेन भूयसा ।
स ते वेगः कुतो यातः[4] कथमीदृक् प्रभाषसे ।
गता मां शरणं यस्मादतो व्रज यथेच्छया ॥६९॥
इत्युक्त्वा स महादेवो जटामेकान्तु दक्षिणे ।
स्फारयामास सव्येन पाणिना प्रहसन्मुखः[5] ॥७०॥
ततः प्राप्य वरं द्वारं निःससारामरापगा ।
पक्षिणी लोकवशगा मुक्तद्वारेव[6] पञ्जरात् ॥७१॥
अथ ज्यैष्ठे महाभागा दशम्यां शुक्लपक्षतः ।
हस्तानक्षत्रयोगेन भौमे[7] वारे महामुने ॥७२॥
हिमालयं परित्यज्य पपात धरणीतलम् ।

---

१ B एव । २ C भव । ३ C भूयां । ४ A D जातः ।
५ B प्रहरन्मुखं । ६ D मुक्तद्वारैव । ७ D भौमवारे ।

तदा जयजयध्वानो बभूव भुवि सर्व्वतः ॥७४॥
धरा क्षुब्धापि न क्षोभं गङ्गालाभादुपालभत्[1] ।
गङ्गापि च धरां प्राप्य परमामाप निर्वृतिम् ॥
ज्वलदग्निशिखाकोटिरिव जज्वाल तेजसा ।
पापसङ्घास्तदा भीतास्तदैव परितत्यजुः ॥७५॥

इति खलु धरणीतलं महेशी
समगमदिन्दुसहस्रशुक्लवर्णा ।
अरुणकरसहस्रदीप्तियुक्ता[2]
व्यजयत[3] सुष्ठु सुरैः समीक्ष्या ॥७६॥

इति श्रीवृहद्धर्म्मपुराणे मध्यखण्डे गङ्गावतरणं
नाम एकपञ्चाशत्तमोऽध्यायः ॥

---

१ B गङ्गालाभान्तरालभत् । २ B D अरुणकरदीप्तिसहस्रयुक्ता ।
३ B अजयत ।

# अथ द्विपंचाशत्तमोऽध्यायः ।

शुक उवाच ।

अथ गङ्गा तदा देवी दक्षिणाख्या[१] धरातलम् ।
आनन्दसम्पदा चाढ्या [ययौ विपुलधारया ।
तरङ्गचारुपक्षाढ्या][२] फेणपुष्पविराजिता ॥१॥
गङ्गाख्या मुक्तिलतिका ररराज धरणीं गता ॥२॥
धारासुवलिता चारु[३] शुक्ला परमशोभना ।
करिसिंहमहानागमहापक्षि[४]गणाकुला ॥३॥
अग्रे भगीरथो राजा[५] शङ्खहस्तो रथोपरि ।
प्रगच्छन् बाणवेगेन गङ्गा शब्दानुगामिनी ॥४॥
वनानि पर्वतानुच्चान् ग्रामांश्च नगराणि च ।
सरांसि च सुरम्याणि प्लावयित्वा महाजवा[६] ॥५॥
देवर्षिभिः स्तूयमाना रेजे गङ्गा धरातले[७] ।
यत्र यत्र ययौ गङ्गा तत्र तत्र महेश्वरः ॥६॥

---

१ B दक्षिणास्याः । D दक्षिणास्यां ।
२ A omits the portion bracketted.   ३ A चारुः ।
४ B ०महाकुक्षि० ।   ५ B याता, D यातः ।
६ C D सुंररम्याणि प्राययित्वा महज्जवा ।   ७ C ०तलं ।

भूमि[1]भागं शिव[2]मूर्क्के अष्टहस्ताधिके तटे ।
सार्द्धयोजनविस्तीर्णां धारां चक्रे महेश्वरी[3] ॥७॥
[4]दीर्घं चक्रे शिवः[5] शम्भुर्मितं[6] द्विशतयोजनम् ।
अब्धेः प्रतीरपर्य्यन्तं किञ्चिन्न्यूनं मुकुन्द तत् ॥८॥
व्यतीते योजने सप्तद्वये गङ्गा जवान्विता ।
हरिद्वार[7]समीपे तु ददर्श सप्त वै मुनीन् ॥९॥
ते तु सप्तैव मुनयः सप्तशङ्खध्वनिं[8] दधुः ।
सप्तधारा तदा भूता सप्तर्षीणां सुखाय ह[9] ॥१०॥
[10]ततः प्राप्य हरिद्वारं धारां संकोच्य वैष्णवी ।
अभूत् पूर्वमुखी[11] देवी महापाषाणभेदिनी ॥११॥
अतः[12] परमशुद्धाभि[र्नदीभिः[13]] सङ्गताभवत् ।
सखीभिरिव[14] संयाता साववर्द्ध कुतूहलात् ॥१२॥
[15][ततोऽग्निकोणमुखतो ययौ गङ्गा धरातले ।
यमुना च तथा गुप्ता सङ्गताभूत् सरस्वती ॥१३॥
प्रयाग इत्ययं देशः पुण्यः परमतः परम् ।

---

१ A भूमीभागं ।  २ D शिरः ।  ३ B महेश्वरा, C महेश्वरीं ।
४ B C add अष्टहस्ताधिकां मौलिं सार्द्धयोजनकं शिवः ।  D adds समकार्षीं तदा मौलिं सार्द्धयोजनकं शिरः ।  ५ C शिरः ।
६ B शम्भुनिर्म्मितं ।  ७ C हिमालय० ।  ८ B ०ध्वनि, A D ध्वनीन् ।
९ B D सुखावह ।  १० B ततो गङ्गाहरिद्वारं । D ततः सप्तहरिद्वारं धारां ।  ११ C सर्वमुखी ।  १२ C ततः ।
१३ B omits the portion bracketted.  १४ A सखीभिरेव ।
१५ B D omit the portion bracketted.

ततः पूर्वमुखी गङ्गा पूर्वस्रोता व्यराजत ॥१४॥
[1]काशीं रामां ततश्चक्रे वामाशक्तिरनुत्तमा।
तत्राभूदुत्तरस्रोता शिवदर्शनकौतुकात्] ॥१५॥
सपादयोजनं तन्तु देशं पृथ्वीवहिष्कृतम्।
ततः [2]पूर्वामुखी भूता तत्र[3] राजा भगीरथः ॥१६॥
श्रान्ताश्वसारथिर्भूतः शङ्खध्मानं व्यरामयत्।
एतस्मिन्नेव काले तु जह्नुर्नाम महामुनिः ॥१७॥
चक्रे शङ्खध्वनिं चारु[4] गङ्गा शुश्राव तं तदा।
तमेव शब्दं चान्वेष्य गन्तुं देवी प्रचक्रमे ॥१८॥
ततो विश्रम्य[5] राजा च शङ्खशब्दं चकार ह।
गङ्गा गत्वा कियद्दूरं श्रुत्वान्यं शङ्खनिस्वनम् ॥१९॥
[6]कोऽयमन्यो ध्वनिः [7]शङ्खस्ततो दध्यौ बुबोध च।
कर्म्म जह्नुमुनेस्तत्र रोषस्फुरितदृद्‌भौ ॥२०॥
मुनेरस्याश्रमं सर्वं[8] प्लावयामीत्यभाषत।
गच्छ राजन् महाभाग यत्र जह्न्वाश्रमो ह्ययम् ॥२१॥
प्लावयिष्याम्यहं तस्य मुनेराश्रममण्डलम्।
स्वाश्रमं नेतुकामो मां योऽन्यं शङ्खमपूरयत्[9] ॥२२॥

शुक उवाच।

इत्युक्तः स नृपो[10]ऽग्योऽभूद्गङ्गाप्यानुययौ जवात्।

---

१ C काशीरामां। २ C D पूर्वमुखी। ३ B यत्र।
४ C चारु। ५ B D विश्राम्य। ६ B योऽयं।
७ C शङ्खे दध्यौ ततो बुबोध च। ८ B गत्वा, D तत्र। ९ D अपूरयः।
१० B नृपोऽग्रतो। C इत्युक्तश्च नृपोग्रोऽभूत्। D अग्रो।

तद्विज्ञाय मुनिर्जह्नुर्ब्रह्मतेजः समस्मरत् ॥२३॥
उषित्वा स मुनिवरो भूमौ वै दक्षिणं करम् ।
अर्पयामास तत्राभूद्गङ्गा क्षीणाप्यलक्षिता ॥२४॥
प्राप्तं गङ्गाजलं सर्वं पाणौ ब्रह्मकरोपमे ।
गण्डूषीकृत्य तां गङ्गां पपौ जह्नुर्महामुनिः ॥२५॥
हाहाकारस्तदा जातो भुवि खे दिक्षु सर्वतः ।
गङ्गा च मूर्त्तिमासाद्य जगाद मुनिपुङ्गवम् ॥२६॥

देव्युवाच ।

मुने ब्रह्मन् महाभाग जाने त्वां ब्रह्मतेजसम्[1] ।
क्षमस्व मम दौरात्म्यं चिकीर्षो[2]र्लोकमङ्गलम् ॥२७॥
तव पुत्रीत्वमापन्ना त्यज मां जठरात् स्वकात् ।
प्राप्नुवन्तु गतिं दिव्यां तनयाः सगरस्य वै ॥२८॥
भगीरथस्य भूपस्य कुरुष्व सार्थकं तपः ।
जाह्नवीत्येव मे नाम लोका गास्यन्ति पावनम् ॥२९॥
तवैषा परमा कीर्त्तिर्लोकेषु विमला स्थिता ।
ब्राह्मणास्तु महात्मानो देवैरपि दुरासदाः ॥३०॥
इति जाने क्षमस्व त्वं त्यज[3] मां कार्य्यसिद्धये ।

शुक उवाच ।

तस्यास्तु व्याकुलं वाक्यं श्रुत्वा जह्नुर्महातपाः ॥३१॥
जानु व्यापादयामास निःससार ततः शिवा ।

---

१ D ०तेजसां । २ B चिकीर्षो लोक० । ३ C त्यक्त्वा ।

जाह्नवी जयतीत्येवं बभौ पुण्यतरध्वनिः ॥३२॥
ततः कियद्गतो दूरं राजासीच्छ्रान्तवाहनः।
एतस्मिन्नेव काले तु समयं प्राप्य काचन ॥३३॥
नाम्ना पद्मावती कन्या मुनेर्जह्नोर्महात्मनः।
शङ्खं सा ध्वानयामास[1] दिदृक्षुर्भगिनीमिति ॥३४॥
तमेवानुगता शब्दं ययौ पर्वतनन्दिनी।
अग्निकोणमुखी किञ्चिद्दूरं प्राप्ता तथाविधा ॥३५॥
दृष्ट्वा भगीरथो राजा अन्यथा[2] व्रजतीं शिवाम्।
उत्तिष्ठ सारथे गच्छ गङ्गा याति पथा[3]न्तरम् ॥३६॥
इत्युक्त्वा ध्वानयामास राजा शङ्खं महावरम्[4]।
तं श्रुत्वा शङ्खनिनदं जलादुत्थाय वेगिता ॥३७॥
ददर्श दूरे राजानं कुर्वन्तं शङ्खनिस्वनम्।
चुक्रोध पद्मावत्यै सा[5] सा तत् क्रोधान्नदी बभौ ॥३८॥
सा च पद्मावती देवी विस्तीर्णसलिला पुनः।
पूर्वामुखं ययौ पूर्व[6]समुद्रमपि सङ्गता ॥३९॥
गङ्गा तु वेलां संचिप्य गन्तुं समुपचक्रमे।
बभूव दक्षिणस्रोता[7] बुद्धाब्धिं निकटादिव ॥४०॥
गङ्गायमुनयोः सङ्गं परित्यज्य सुरापगा।
राजानं दक्षिणं कृत्वा संविभेद सरित्पतिम् ॥४१॥

---

१ B D ध्वनयामास। २ D अन्यथां। ३ C तथान्तरं।
४ D महारवं। ५ B C D पद्मावत्यैषा। ६ C D पूर्व्वं।
७ C D ०स्रोता।

समुद्रस्तत[1] उत्थाय पुष्पचन्दनसंयुतः ।
अर्च्चयामास तां गङ्गां वेलया सह भार्य्यया ॥४२॥
ततः सा[2] सागरं भित्वा व्यतीत्य विवरानपि ।
महातले च कपिलं ददर्श सुमहाप्रभम् ॥४३॥
तस्मिन् भगीरथो राजा गङ्गां भागीरथीं द्विज ।
पूजयामास विविधैर्बलिभिर्धूपदीपकैः ॥४४॥

कपिल उवाच ।

मातर्गङ्गे महेशानि स्वागतं ते महेश्वरि ।
अतीत्य [3]सुबहून् देशानायातासि महातलम् ॥४५॥
इमे सागरयः षष्टि[4]सहस्राणि महाबलाः ।
मत्क्रोधवह्निना दग्धा दुर्गतिं परमां गताः[5] ॥४६॥
एतान् [6][पारय[7] हेमातरनन्या त्वं गतिर्नृणाम् ।
यान्तु दिव्यां गतिं देवि उत्तीर्णा दुर्गतेरपि ॥४७॥
अहञ्च त्वां स्पृशाम्येव कृतार्थः [8]स्यामसंशयम् ।

शुक उवाच ।

[9]इत्युक्ता कपिलेनैषा[10] देवी नागैः सुसेविता ।
अप्ला]वयत् सागरीणां[11] भस्मानि द्विजनन्दन ॥४८॥
तस्याः संस्पर्शमात्रेण तनयाः सगरस्य ते[12] ।

---

१ B C D तत्र । २ B सः । ३ D सबहून् । ४ D षष्ठि० । ५ C दुर्गतीः परमा गताः । ६ B omits the portion bracketted. ७ D पावय । ८ C स्यां न संशयं । ९ D इत्युक्ते १० C नैव । ११ B D सागरीनां, C आप्लावयत् सागरायां । १२ B सागरस्य ते । C सगरस्य च ।

यमलोके चारुरूपा बभूवुरमितौजसः ॥४९॥
पश्यतां यमदूतानां ते वै दिव्यवपुर्धराः।
वियत्पथे[१] विमानस्था अप्सरोगणसेविता ॥५०॥
गीयमानगुणा देवैर्ययुः स्वर्गं त एकदा[२]।
विमुक्तबन्धना देवादिव पक्षिगणाः क्वचित् ॥५१॥
राजा भगीरथश्चापि पुरे चक्रे महोत्सवान्[३]।
ततो नागालये देवी ख्याता भोगवतीति सा ॥५२॥
महातलमतीत्यापि ययौ पातालमेव च।
तत्रा[४]नन्तं समासाद्य सहस्रशिरसं प्रभुम् ॥५३॥
लीनाभूत् सलिले गङ्गा ब्रह्माण्डं यत्र भासते।
इत्येवं कथितं तुभ्यं यत् पृष्टं भवता मम ॥५४॥
गङ्गा सुरनदी पुण्या यथायाता धरातलम्।
[५][इदमाख्यानमायुष्यं यशस्यं वंशवर्द्धनम् ॥५५॥
धन्यं धर्म्यं शोकहरं दुःखसागरशोषकम्।
मङ्गलं परमं दिव्यं गङ्गावतरणं द्विज ॥५६॥
ब्राह्मणः क्षत्रियो वैश्यः इदमाख्यानमुत्तमम्]।
पठेयुः श्रवणं कुर्य्युर्लभेरन् परमाङ्गतिम् ॥५७॥
स्त्रियः शूद्राश्च शृणुयुर्लभेयुर्गतिमुत्तमाम्।
कूपारामतड़ागादिवृक्षमन्दिरकर्म्मसु ॥५८॥

---

१ C ०पथे। २ C तयेकदा। ३ D चक्रे कृत्वा महोत्सवान्।
४ C तदा। ५ B omits the portion bracketted.

अशौचान्ताद्द्वितीयेऽह्नि सर्व्वेषु शुभकर्म्मसु ।
पठेच्च शृणुयाच्चैतदाख्यानं पुण्यमुत्तमम्[१] ॥५९॥
[२][प्रायश्चित्तानि पापेषु विपत्तौ अनबन्धवः।
सम्पत्तौ धर्म्मरूपश्च आख्यानमिदमुत्तमम् ॥६०॥
तृतीयायान्तु वैशाखे शुक्लायामक्षये दिने ॥६१॥
ज्यैष्ठे दशहरातिथ्यां गङ्गां संपूज्य यत्नतः ।
पठेद्वा शृणुयाद्वापि आख्यानमिदमब्रवीत्[३]] ॥६२॥
[४]ग्रहपीड़ासु घोरासु जलाग्निपीड़नेषु च ।
पठेद्वा शृणुयाद्वापि इदमाख्यानमुत्तमम् ॥६३॥
[५][इमे एकादशाध्याया द्वाविंशतिरथापि वा ।
अगङ्गदेशे विज्ञाय निकटं मरणं जनः ॥६४॥
[६]पठेद्वा शृणुयाद्वापि इदमाख्यानमुत्तमम्] ।
आजन्मगङ्गास्नानस्य फलमाप्य[७] स वै जनः ॥६५॥
गङ्गान्तर्जलमृत्योस्तु फलमाप्नोति मानवः ।
श्रुतं त्वया शुचितरचेतसा मुने
[८][सुरापगा चरितमपूर्व्वमुत्तमम् ।
सुरासुरैर्दिवि भुवि गेयमर्थदम् ·

---

१ B शृणुयाद्वापि आख्यानमिदमुत्तमं । २ B omits the portion bracketted. ३ D C आख्यानमिदमुत्तमं । ४ A omits this line. ५ B omits the portion bracketted. ६ C D add महापातकयुक्तोऽपि युक्तो वा सर्वपातकैः । ७ D फलं प्राप्य । ८ B omits the portion bracketted.

मयोदितं मतिपठनानुरूपतः ॥६६॥
कृते युगे शुभमति[1]भिर्यदर्च्यते
द्वितीयके किल यजता यदर्च्यते ।
तृतीयके जलकुसुमैर्यदर्च्चनात्]
सुरापगाजलकणतः कलौ तु तत्[2] ॥६७॥
यदोच्यते गिरिवरकन्यकेत्यसौ
शिवं पतिं समगमदित्यसौ तदा ।
यदा पुनर्दिवि सुरसंघकन्यका
तदोच्यतेऽनलवनिता गुहप्रसूः ॥६८॥
यदा पुनर्हरिपदसम्भवा शिवा
तदा पतिं खमुपगता व्यराजत ।
यदा पुनर्मुनितनयेति कथ्यते
तदाऽभवन्नृपवनितेव भीष्मसूः ॥६९॥
यदा पुनारविकुलराजकन्यका
तदा गता जलनिधिमेव सत्पतिम् ।
इतीदृशीह्य[3]नियतरूपिणी शिवा
शिवं गता बहुतररूपवल्लभम् ॥७०॥

इति श्रीबृहद्धर्म्मपुराणे मध्यखण्डे सगरपुत्रोद्धारो
नाम द्विपञ्चाशत्तमोऽध्यायः ॥०॥

---

१ D यतिभिः । २ A कलौ तत्तत् । ३ B ०ह । 

# त्रिपञ्चाशत्तमोऽध्यायः ।



जैमिनिरुवाच ।

उक्ता त्वया शिवं प्राप्ता गङ्गा सत्यर्द्धरूपिणी ।
उमायाश्च शिवप्राप्तिं वद ब्रह्मन् महामते ॥१॥

ऋषिरुवाच ।

सत्यां गतायां त्रिदिवं सुषुवे मेनका पुनः ।
अन्यां दुहितरं चारुगुणशीलसमन्विताम् ॥२॥
ज्वलत्कनकगौराङ्गीं द्विभुजां चारुलोचनाम् ।
तस्यां भवन्त्यां मेनाद्याः सर्व्वा[१] गङ्गाशुचं जहुः ॥३॥
हिमालयगृहे[२] सा तु रराज किल जैमिने ।
कलेव शशिनः शुक्ले वर्द्धमाना दिने दिने ॥४॥
कदाचिन्नारदो देव स्तत्रान्तःपुरमागतः ।
निर्ज्जने जगदे सर्व्वां मेनकायै सतीकथाम्[३] ॥५॥
तच्छ्रुत्वा मेनका देवी मुनेर्वचनमर्थवत् ।
मेने शिवां मूलरूपामजां शिवशिवामिति ॥६॥
नारदश्च ततो गत्वा शैलराजमथाब्रवीत् ।

---

१ C सर्व्वे । २ B गता । ३ B सतीं कथाम् । C सतीकथाः ।

नारद उवाच।

कन्या ते शैलराजेन्द्र जाता कमललोचना।
दानयोग्यापि भूतैव कस्मै देयेयमिष्यते[1] ॥७॥

हिमालय उवाच।

इयं मम सुता देव तपस्यति वनान्तरे।
योग्यं पतिं परिप्राप्तुं स्वयमेव गुणान्विता ॥८॥
पूर्व्वलब्ध[2]पतिर्याऽस्याः स एवेह भविष्यति।
किन्नस्तत्रास्ति कर्त्तव्यं कन्यावरसमागमे ॥९॥

नारद उवाच।

यदुक्तं तत्सत्यमेव तत्रोद्योगी भवेत् पुमान्[3]।
अनुद्योगन्तु पुरुषं ग्रसते कार्य्यराक्षसः ॥१०॥
भवान् पिता सुता सा ते सत्पतिं[4] लभते यथा।
कन्यादानफलं प्राप्तुं तत्रोद्योगी तथा भव ॥११॥
यस्तु लब्धव्यलाभेन नोद्युङ्क्ते गृहिणां कुधीः।
तस्य किञ्चित् फलं नास्ति स गृही नापि कथ्यते ॥१२॥
अतएव भवान् स्वस्या दुहितुर्वरमेषयः[5]।
ब्राह्मणैर्मन्त्रिभिश्चैव तत्परामर्शनं कुरु ॥१३॥

हिमालय उवाच।

प्रभो त्वमेव तत्वज्ञो दुहितुर्मे वरं वद।
कस्मै देया च मे कन्या कं प्राप्ता सुखिनी भवेत् ॥१४॥

---

१ B देयैवमिष्यते। २ D ०लब्धः। ३ C पुनः।
४ C तत्पतिं। ५ C वरमेधयः।

नारद उवाच।

अस्ति योग्यः पतिः[१] शैल दुहितुस्तव नान्यथा।
यं प्राप्तुं यतते पुत्री तव जानाम्यहन्तु तम्॥१५॥
कैलासे[२] वसतिस्तस्य त्वय्यप्येष च तिष्ठति।
स महात्मा महाबाहुः कुवेरो यस्य किङ्करः॥१६॥
तस्मै[३] देहि सुतां कन्यामर्च्चनीयाय दैवतैः।

हिमालय उवाच।

तस्मै देया मया कन्या यं त्वं वदसि नान्यथा[४]।
तमानय महाबाहो शिवं मे कन्ययेप्सितम्॥१७॥

शुक उवाच।

तथेत्युक्त्वा[५] ययौ[६] देवो यत्र देवो महेश्वरः।
कैलासे[७] तं शिवं नत्वा वचनञ्चेदमब्रवीत्॥१८॥

नारद उवाच।

शम्भो तव सती प्राप्ता पूर्णस्तेऽभून्मनोरथः।
यत्र गङ्गा सुरैः प्राप्ता तत्रैवेयमुपस्थिता॥१९॥
त्वां प्राप्तुं सा हेमगौरी तपस्यति महावने[८]।
तव वार्त्तां महादेव दम्पतीभ्यां न्यवेदयम्[९]॥२०॥
त्वं तत्र कुरु वै वासं गिरिराजे हिमालये।

---

१ B योग्यपतिः। २ B कैलाशे। ३ C तस्यां।
४ B नारद। ५ B अथेत्युक्त्वा। ६ A मयो।
७ B कैलाशे। ८ B हिमालये। ९ B न्यवेदयत्।

[[१]त्वान्तु सेविष्यते गौरी तां त्वञ्च लप्स्यसि नान्यथा॥२१॥

शिव उवाच।

गङ्गारूपा सती लब्धा कामन्यां त्वं वदस्युत।
यामहं शिरसा धृत्वा बहुमन्ये स्वमेव हि॥२२॥

नारद उवाच।

सती ते द्विविधा भूता गङ्गोमा च हिमालये।]
एका धृता त्वया शीर्षे वामाङ्गेऽमूं धरिष्यसि॥२३॥
पूर्व्वं वामाङ्गगां भार्य्यां वामाङ्गेऽद्यापि लभ्यताम्।
एवमुक्त्वा ययौ देवो मुनिर्नारदसंज्ञकः॥२४॥
हिमालयं ययौ शम्भुस्तपस्यासक्तमानसः।
तपस्यन्तीं सतीं प्राह विप्ररूपेण जैमिने॥२५॥

शिव उवाच।

कासि कस्यासि रम्भोरु किमर्थं वा तपस्यसि[२]।
नायं तपस्याकालस्ते सुकुमार्य्याः सुशोभने॥२६॥

देव्युवाच।

अहं[३] हिमालयसुता शिवमीप्सुस्तपस्वरे।
अहं दाक्षायणी पूर्व्वं त्यक्तदेहा द्विजोत्तम॥२७॥

शिव उवाच।

कथं शिवं श्मशानस्थं कुरूपं पतिमीहसे[४]।

---

१ B तान्तु......लप्स्यति। A omits the portion bracketted.
२ A भविष्यसि। ३ B अयं। ४ D ईहते।

इन्द्रादिं वा वर्जयसि[१] गुणसम्पत्समन्विता ॥२८॥
कथमेतत्तपस्ते वा शिवं प्राप्तुं पतिं सती ।
रूपस्वभाववशगः शिवस्तेऽस्तु पदानतः[२] ॥२९॥

देव्युवाच ।

मैवं मैवं ब्रह्मचारिन् वद मां शिवनिन्दनम् ।
[३]तच्छ्रुत्वाहं पुरा देहं जहौ कस्माद् ब्रवीषि तत् ॥३०॥
स्तुहि शम्भुं महेशानं प्रायश्चित्तं तदस्तु नौ ।
शरीरं न त्यजे येन श्रुतया शिवनिन्दया ॥३१॥

शिवरूपब्राह्मण उवाच ।

शिव हर गिरिशेश त्र्यक्ष विश्वेश देव
प्रमथगणविहारिन् सर्व्वदानन्दरूप[४] ।
सकलभुवनगोप्ता त्वं भवान् कालरूपी
निखिलवृजिनहारिन्[५] देवदेव प्रसीद ॥३२॥

देव्युवाच ।

ब्रह्मचारिन्नमस्तेऽस्तु शिवज्ञाय शिवाय ते ।
ब्रह्मचारिस्वरूपेण भवानेव शिवो मतः ॥३३॥
प्रसीद देवदेवेश त्वां नमस्यामि भक्तितः ॥३४॥

शुक उवाच ।

इत्थं प्रणामयुक्तायास्तुमायां स महेश्वरः ।
स्वरूपं जगृहे सद्यो वृषराज[६]विराजितः ॥३५॥

---

१ D वर्ज्जयित्वा । २ B प्रदानतः । ३ C यत् श्रुत्वाहं ।
४ C ०रूपः । ५ C व्यजनहारिन् । ६ B वृषराजो ।

मां त्वं प्राप्स्यसि नास्त्यत्र सन्देहस्तु कदाचन।
इत्युक्त्वान्तर्दधे शम्भुरुमा पित्रालयं ययौ ॥३६॥
शिवोप्यथ महायोगी गङ्गां प्राप्य शिरःस्थिताम्[१]।
भार्य्यार्थे निःस्पृहस्तत्र गिरिसानौ समादधे ॥३७॥
तदा नारदवाक्येन ज्ञात्वा शैलेश्वरः शिवम्।
शिवस्य परिचर्य्यायै उमां पुत्रीं[२] दिदेश ह ॥३८॥
पित्राज्ञया स्वाभिमतं सिषेवे यत्नतः शिवम्।
न च तां कामयाञ्चक्रे महायोगरतः शिवः ॥३९॥
पूर्व्वं ब्रह्मा स्वां तनुजां सन्ध्याख्यामुपगम्य ह[३]।
तदा शिवेन हसितस्तत एव ह्यसूयया ॥४०॥
कन्दर्पं प्रेषयामास शम्भोर्योगविघातकम्।
कन्दर्पस्तु समागत्य पुष्पधन्वा स्त्रियान्वितः ॥४१॥
सन्दधे पुष्पधनुषि मोहनादीनिषून्मुने[४]।
मूर्त्तस्तत्र वसन्तोभूद्विलसत्पुष्पसञ्चयः ॥४२॥
तद्दृष्ट्वा तु महादेवस्त्वाश्चर्य्यारम्भमात्मनि।
तत्कारणं मृगयमानो मण्डलीकृतकार्म्मुकम्[५] ॥४३॥
कामं ददर्श पार्श्वस्थं दृक्पाताद्भस्म चाकरोत्।
कन्दर्पे भस्मसाद्भूते देव्या अङ्गेषु गच्छति ॥४४॥
अनङ्ग[६] इति विख्यातिं जगाम पञ्चमार्गणः।

---

१ B स्थिरस्थितां। २ C° उमापुत्रीं। ३ C हि।
४ B मोहनादीनि यन्मुने। ५ D कार्म्मुकः। ६ C आनन्द।

कामदेहस्य[1] भस्मानि लिलेपाङ्गे महेश्वरः ॥४५॥
देव्या सकामया दृष्टो बभूव कामभाववान् ।
सकामं वीच्य गिरीशं ब्रह्माद्या जहृषुस्तदा[2] ॥४६॥
हिमालयः सुतां तस्मै दातुं समुपचक्रमे ।
ब्रह्मविष्ण्वादिदेवानां पुरतः स महेश्वरः ॥४७॥
उपयेमे उमां देवीं विधियुक्तेन कर्म्मणा ।
शिवः प्राप्य स्त्रियं[3] स्फीतां पार्व्वतीं स्वस्थलं ययौ ॥४८॥
तारकोपद्रुता देवा योद्धुकामा महेश्वरम् ।
शिवतेजःसमुद्भूतं सेनापतिमयाचत ॥४९॥
स तेषां कार्य्यसिद्ध्यर्थं मेरुमूले इलावृते ।
उमा[4]मुपजगामाथ दिव्यं वर्षशतं ययौ ॥५०॥
तद्दृष्ट्वा दुःसहं कर्म्म भीता ब्रह्मादिदेवताः ।
अनर्थं चिन्तयामासु स्तयोर्मैथुनकर्म्मणि ॥५१॥
यस्य[5] मैथुनकार्य्येषु दिव्यं वर्षशतं[6] गतम् ।
तस्माज्जातः सुतः कुत्र धारणीयो भविष्यति ॥५२॥
इति सञ्चिन्त्य वै देवा तयोस्तां मैथुनक्रियाम् ।
दर्शयित्वा द्विजान् कांश्चित् त्याजयामासुरोजसा ॥५३॥
विप्रान्दृष्ट्वा तदा देवी व्रीड़िता पिदधेंऽशुकम्[7] ।
देवीप्रीत्यै स्थलं तत्तु शिवशप्तं ततोवधि ॥५४॥

---

१ D ०देवस्य । २ B जग्मुषुस्तदा । ३ B स्त्रियां ।
४ C इमाम् । ५ D तस्य । ६ B वर्षं । ७ B D पिदधेऽंशुके ।

पुंसामगम्यं समभूत् पुंसां स्त्रीत्वकरं द्विज।
स्थानभ्रष्टं शिवस्तेजस्तत्याज पृथिवीतले॥५५॥
तत्सर्व्वव्यापकं भूतमग्निः संजग्टहे च तत्।
अग्निस्तु सर्व्वदेवानां सम्मतेन च तत्क्रियत्॥५६॥
गङ्गायै धारयामास सा च गङ्गा सुदुर्द्धरम्।
शैवं तेजस्तु तत्याज [१][कैलासे शरकानने[२]॥५७॥
तस्मात् प्राणी समुत्तस्थौ सेनानीर्दीर्घलोचनः।
महाबलो महासत्त्वः शिवपुत्रो महाभुजः॥५८॥
ज्वलत्कनकगौराङ्गो नानाभरणभूषणः।
सेनापतित्वे देवैः स ह्यभिषिक्तो वभूव ह॥५९॥
कृत्तिकादिगवां षसां मातॄणां स पयः पपौ।
तेनासौ कार्त्तिकेयादिनामको गूहनाद्गूहः[३]॥६०॥
षड्भिर्वक्त्रैः पपौ दुग्धं तेन षड्वक्त्र उच्यते।
ददुः शिवाद्यस्तस्मै शस्त्रकास्त्रादिवाहनम्॥६१॥
तेन तेषां हतः शत्रुस्तारकाख्यो महाबलः।
उमया सह देवोसौ] कैलासशिखरेऽवसत्॥६२॥
तत्र देहार्द्धकं शम्भोर्जहार खलु पार्व्वती।
शिवविच्छेदलेशस्याप्यसहन्ती द्विजर्षभ॥६३॥
तत्रस्थां पार्व्वतीं देवीं पृच्छती[४] स महेश्वरः।

---

१ B omits the portion bracketted.

२ D कैलास शरकानने। ३ D गुहः। ४ B पृच्छन्तीम्।

जगाद मन्त्रतन्त्राणि सर्व्वदैवतकानि च ॥ ६४ ॥
इत्येवं भवते प्रोक्तं यत् पृष्टोऽहमिह त्वया ।
येन लेभ उमां देवीं सतीं पूर्व्वप्रियां शिवः ॥ ६५ ॥
इदमाख्यानमिष्टार्थप्रापकं पुण्यदं शुचि ।
पाठ्यं श्राव्यञ्च जप्यञ्च किमन्यत् कथ्यते तव ॥ ६६ ॥

इति श्रीबृहद्धर्मपुराणे मध्यखण्डे उमालाभ-
स्त्रिपञ्चाशत्तमोऽध्यायः ॥ ० ॥

---

# चतुःपञ्चाशत्तमोऽध्यायः ।

जैमिनिरुवाच ।

उक्ता त्वया महापुण्या गङ्गा त्रिपथगामिनी ।
गङ्गायां यत्तु कर्त्तव्यमकर्त्तव्यं वदस्व तत् ॥१॥
त्वद्गवाक्यपीयूषविरतिर्नोपलभ्यते[१] ।
सदैव भवतो वाक्यमुद्गिरत्यर्थमच्युतम् ॥२॥

व्यास उवाच ।

एवं पृष्टो जैमिनिना महाभागवतो मुनिः ।
हर्षितेनात्मना प्रोचे जैमिनिं शिष्यमात्मनः ॥३॥

शुक उवाच ।

शृणु ब्रह्मन्[२] महापुण्यान् गङ्गाधर्म्मान्मनोरमान् ।
गङ्गास्नानं फलं येषां श्रवणेनोपजायते ॥४॥
हिमालयाच्छैलराजाद्गङ्गासागरसङ्गमः ।
देशः परमपुण्योऽसौ यत्परो नैव वर्त्तते ॥५॥
अयोध्या मथुरा माया काशी काञ्ची अवन्तिका ।
पुरी द्वारा[३]वतीचैव सप्तैता मोक्षदायिकाः ॥६॥
अयोध्या रामनगरी मथुरा कृष्णपालिता[४] ।

---

१ B तद्गवाक्यपीयूषपिवतिर्नोपपद्यते ।   २ A C राजन् ।
३ B द्वारवती ।   ४ B C ०पालिका ।

माया च कामरूपाख्या काशी शिवपुरी न भूः ॥७॥
शिवकाञ्ची विष्णुकाञ्ची काञ्चीयुग्मञ्च सत्तमम् ।
अवन्ती च समुद्रस्य तीरे श्रीपुरुषोत्तमः[१] ॥८॥
द्वारावती[२] समुद्रस्य मध्ये कृष्णकृता पुरी ।
एतास्तु पृथिवीमध्ये न गण्यन्ते कदाचन ॥९॥
श्रीरामधनुरग्रस्था अयोध्या[३] सा महापुरी ।
मथुरा केशवप्रेष्ठा[४] सुदर्शनविधारिता ॥१०॥
माया च शिवलिङ्गस्था ब्रह्मविष्ण्वादिसेविता ।
काशी [५][शिव]त्रिशूलस्था काञ्ची[६] हरिहरात्मकः ॥११॥
वामदक्षिणहस्ताभ्यां दधार द्विजपुङ्गव ।
अवन्तिका पुरी दिव्या हरेः पद्मोपरिस्थिता ॥१२॥
[५][पुरी द्वारावती[७] विष्णोः पाञ्चजन्योपरिस्थिता ।]
[८][एताः सर्व्वा मुक्तिदाश्च एकत्र गणिता सुरैः ॥१३॥
एकतो वै सुरधुनी शिवशीर्षोपरिस्थिता] ।
एतां धर्त्तुं महादेवः स्वशिरः सार्द्धयोजनम् ॥१४॥
अष्टहस्ता[९]धिकञ्चैव विशालं विदधे स्वयम् ।
दीर्घञ्च योजनशते किञ्चिन्न्यूने चकार ह ॥१५॥
तस्माद्गङ्गाश्रया देशा नैवं पृथ्वी कदाचन ।

---

१ A C D श्रीपुरुषोत्तमा । २ D द्वारवती । ३ C अयोध्या हि ।
४ B केशवएष्ठस्था । ५ A omits the portions bracketted.
६ D काञ्ची । ७ D B द्वारवती ।
८ B omits the portion bracketted. ९ C ०हस्तादिकञ्चैव ।

विश्वात्मनो महेशस्य शिर एव हि ते मताः ॥१६॥
इयञ्चालकनन्दाख्या गङ्गा दक्षिणवाहिनी।
क्वचित्पूर्व्व[1]स्रवा गङ्गा क्वचित् पश्चिमवाहिनी ॥१७॥
क्वचिच्चाप्युत्तरस्रोताः क्वचिद्दक्षिणवाहिनी।
दक्षिणायाः शतगुणा गङ्गा तु पूर्व्ववाहिनी ॥१८॥
ततः शतगुणा प्रोक्ता गङ्गा पश्चिमवाहिनी।
[2]तत्सहस्रगुणा प्रोक्ता गङ्गाचोत्तरवाहिनी ॥१९॥
गङ्गास्थानस्य सर्व्वस्य तारतम्य विधौ मम।
शङ्का[3] हि जायते विप्र सर्वतो मुक्तिदायिनी[4] ॥२०॥
नास्ति गङ्गासमं तीर्थं गङ्गा च परदेवता।
गङ्गा च वसतिस्थानं गङ्गैव परमा गतिः ॥२१॥
[5]गङ्गाकाशवासिनी च गङ्गा च गिरिवासिनी।
गङ्गा धरावासिनी च गङ्गा पातालवासिनी ॥२२॥
सर्व एव शुभः कालः सर्वो देशस्तथा शुभः।
सर्वो जनस्तथा पात्रं स्नानादौ जाह्नवीजले ॥२३॥
अपि कीटपतङ्गाद्या यदि गङ्गाजले मृताः।
तेपि त्यक्त्वा कीटतनुं स्वर्गं यान्त्यतिदुर्लभम् ॥२४॥
यज्जलस्पर्शमात्रेण सगरस्य सुतास्तु ते।
सदापन्नास्तमोभावं सत्कर्मरहितास्च ते ॥२५॥

---

१ C क्वचित् पूर्व्वाश्रवा। २ C शतसहस्र०। ३ B गङ्गा।
४ B C D सर्व्वतोमुक्तिदा शिवा।
५ C गङ्गाकाशवासिनी देवी गङ्गा च गिरिवासिनी।

ब्रह्मदण्डहताश्चापि भस्मीभूताङ्गसङ्गतः[१] ।
चिरकालान्तरश्चापि स्वर्याताः स्फुटदर्शनाः ॥२६॥
किं पुनर्ये तु सेवन्ते भक्त्या गङ्गामघापहाम् ।
गङ्गागङ्गेति यो ब्रूते योजनानां शतैरपि[२] ॥२७॥
[३]स मुच्यते सर्वपापैर्विष्णुलोकञ्च गच्छति ।
आजन्मपापकर्म्माणि यः कुर्य्यात् सर्वदा कुधीः ॥२८॥
गङ्गा चेन्मृत्युकाले स्यात्तदा मोचस्य किङ्करः ।
तस्माद्गङ्गा रक्षणीया सर्वयत्नेन जैमिने ॥२९॥
गङ्गा चेत्स्यात् परित्यक्ता न त्राणं तस्य वै क्वचित् ।

जैमिनिरुवाच ।

गङ्गाया रक्षणं कीदृक् त्यागस्तस्यास्तु कीदृशः ।
इति मे संशयं ब्रह्मं श्छेत्तुमर्हसि सर्वथा[४] ॥३०॥

शुक उवाच ।

प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम् ।
अत्र नारायणः स्वामी नान्यः स्वामी कदाचन ॥३१॥
अत्र किञ्चिन्न गृह्णीयात् प्राणैः कण्ठगतैरपि[५] ।
तत्र[६] किञ्चिन्न दद्याच्च साक्षात् पात्राय पुण्यवान् ॥३२॥
प्रतिग्रहस्याभावे हि दानाभावे[७] हि कल्पते ।

---

१ B ०सङ्गताः, C सर्व्वतः ।  २ A शतेऽपि च ।
३ B omits स । C सर्व्वपापेभ्यो ।  D मुच्यते सर्व्वपापेभ्यो विष्णुलोकं स गच्छति ।  ४ B सर्व्वदा ।  ५ D कण्ठागतैरपि ।
६ C D अत्र ।  ७ B C D दानाभावोऽपि कल्पते ।

परघातिकरं कार्य्यं गङ्गायां नोपयुज्यते[1] ॥२३॥
अत्र प्रतिग्रहे राजन् विक्रीता जाह्नवी भवेत्।
विक्रीतायाश्च जाह्नव्यां विक्रीतोऽभूज्जनार्द्दनः ॥२४॥
जनार्द्दने च विक्रीते विक्रीतं भुवनत्रयम्।
कोऽपि न त्राणकर्त्तास्य निःसम्बन्धप्रसङ्गतः ॥२५॥
मिथ्यावाक्यं प्रतिग्राह्यो दानं साक्षाद्ग्रहीतरि[2]।
अपारमार्थिकं वाक्यं जैमिने क्रयविक्रयौ ॥२६॥
वस्त्रस्य क्षालनञ्चैव स्वगात्रमलकर्षणम्।
कटुवाक्यं शस्त्रपातं परपीड़ाकरं हि यत् ॥२७॥
परद्रव्येन पूजाश्च ग्राम्यधर्म्मश्च भोजनम्।
अशास्त्रकथनञ्चैव अज्ञात्वा कथनं तथा ॥२८॥
विना तिलं तर्पणञ्च पादक्षालनमेव च।
अपानवायुनिःसारं निष्ठीवनमथापि च[3] ॥२९॥
अन्यतीर्थप्रशंसाञ्च जलान्तरप्रशंसनम्।
उच्छिष्टक्षेपनञ्चैव दण्डसन्ताड़नं तथा ॥४०॥
अभ्यक्तोऽपि[4] न च स्नायाद्गङ्गायां देवमातरि।
अभ्यङ्गो[5] द्विविधो वारिसन्तारोथ शिरोऽवधि ॥४१॥
तैलावगाढ़[6]पादान्तः शिरोनिक्षिप्ततैलतः।
गङ्गायां शपथं नैव प्राणान्तेपि समाचरेत् ॥४२॥

---

१ C नोपमुच्यते। २ B C ग्रहीतरि।
३ C निष्ठीवरमथापि च, D अथापि वा। ४ B C D अभ्यक्तोऽपि।
५ C अभ्यर्क्ष। ६ C D तैलावगाढ़ः।

स्वच्छन्दपादनिक्षेपं स्नानास्नानविकल्पना ।
एकवासोऽनेकवासोऽप्यकुम्भ[1]स्पर्शकृष्यकम् ॥ ४३ ॥
स्नानस्यापि न वै कुर्य्यादात्मनश्च तथाविधम्[2] ।
शोकं मोहं दुःखचित्तं नास्तिक्यं पापचिन्तताम् ॥ ४४ ॥
लिप्साञ्च विषयादीनां गङ्गातीरेषु नाचरेत् ।
भाद्र[3]कृष्णचतुर्द्दश्यां यावदाक्रमते जलम् ॥ ४५ ॥
तावद्गर्भं विजानीयात्तदूर्द्धं तीरमुच्यते ।
[4][सार्द्धहस्तशतं यावद्गङ्गातीरमिति[5] स्मृतम् ॥ ४६ ॥
तीराद्गव्यूतिमात्रञ्च परितः क्षेत्रमुच्यते] ।
तीरक्षेत्रमिदं प्रोक्तं सर्वपापविवर्जितम् ॥ ४७ ॥
शतहस्तं प्रवाहाद्धि गर्भक्षेत्रमिहोच्यते ।
निरूप्यते तत्र वर्ज्यं सावधानमनाः शृणु ॥ ४८ ॥
हिंसां[6]द्वेषञ्च कलहं मिथ्यावाक्यं प्रतिग्रहम् ।
स्नानास्नानविकल्पञ्च अशास्त्रवचनन्तथा ॥ ४९ ॥
परान्नभोजनञ्चैव परद्रव्योपभोजनम् ।
शोकं मोहं दुःखचित्तं नास्तिक्यं पापचिन्तताम् ॥ ५० ॥
भिक्षां[7] लिप्साञ्च चापल्यं परीहासञ्च वर्जयेत् ।

---

१ C अकुम्भः । २ B नैवकुर्य्याद्दानञ्च तथाविधिं ।
३ B भाद्रे । ४ B omits the portion bracketted.
५ C इदं स्मृतं । D इति स्थितं । ६ B हिंसाद्वेषञ्च ।
७ B D भिक्षालिप्साञ्च ।

[1][जलान्तरस्पर्शनञ्च[2] गर्भचेचे विवर्जयेत्] ॥५१॥
गङ्गातीरे वर्जनीयं कथ्यते द्विजपुङ्गव ।
मिथ्यावाक्यं शोकमोहनास्तिक्यं पापचित्तताम् ॥५२॥
कटुवाक्यं परपीड़ाकरं कार्य्यञ्च वर्जयेत्] ।
अशास्त्रकथनञ्चैव अज्ञात्वा कथनं तथा ॥५३॥
अन्यतीर्थप्रशंसाञ्च जलान्तरप्रशंसनम् ।
स्थानास्थानविचारञ्च गङ्गातीरे विवर्जयेत् ॥५४॥
गङ्गाजलेनोद्धृतेन कुर्य्यात्सर्व्वां जलक्रियाम् ।
गङ्गातीरस्थितो यस्तु नान्यद्वारि स्पृशेद्यदि ॥५५॥
ध्रुवं तेन प्रतिज्ञातं[3] ब्रह्माहमिति नान्यथा ।
सर्व्वासु देवपूजासु पितृपूजासु चैव हि ॥५६॥
महातीर्थे हि गङ्गायां व्रताशौचं न विद्यते ।
त्यक्तुं मूत्रपुरीषादि गङ्गातीरं विवर्जयेत् ॥५७॥
गङ्गाजुष्टदिशञ्चैव त्यक्तुं मूत्रमलादिकम् ।
न व्रजेन्नाच[4]रेच्चैव कदापि द्विजपुङ्गव ॥५८॥
या याः सन्निहिता भूम्यस्तास्ताः पुण्यतमाः स्मृताः ।
पापपुण्यक्रियाणाञ्च तथैव ददते फलम् ॥५९॥
[5]नारायणक्षेत्रमध्ये कर्त्तव्यंञ्च निरूप्यते ।

---

१ C omits the portion bracketted.
२ D omits 4 lines from जलान्तरस्पर्शनञ्च ।
३ C प्रतिज्ञातुं । ४ C नाचरेन्नैव ।
५ C दीक्षाञ्च देवपूजाञ्च जपं गङ्गातटे भवेत् ।
नारायणक्षेत्रमध्ये कर्त्तव्यञ्च निरूप्यते ।

दीक्षाञ्च देवपूजाञ्च[1] जपं गङ्गातटे चरेत् ॥६०॥
शुष्कवासः पिधायापि सावित्रीजपमाचरेत् ।
श्राद्धञ्च तर्पणञ्चैव परोपकारकर्म्म च ॥६१॥
द्रव्योत्सर्गमिष्टदेवसंप्रीतिकरणं तथा ।
पात्रोद्देशञ्च मनसा त्यक्तद्रव्यस्य दापने ॥६२॥
स्तवपाठञ्च मौनञ्च नीचालापविवर्ज्जनम्[2] ।
केवलं वारिपानञ्च कर्त्तव्यं ब्रह्मभावतः[3] ॥६३॥
एतानि किल कर्म्माणि चैत्रे नारायणे चरेत् ।

इति श्रीबृहद्धर्म्मपुराणे मध्यखण्डे गङ्गाधर्म्मेषु
चतुःपञ्चाशत्तमोऽध्यायः ॥०॥

---

१ B D °पूजां । २ B चान्यानि परिवर्ज्जयेत् । D. °विवर्ज्जितं ।
३ A ब्रजभावतः ।

## पञ्चपञ्चाशत्तमोऽध्यायः।

ऋषिरुवाच।

गङ्गायात्रां चरेन्मर्त्यो मन उत्कण्ठते यदा।
स्नात्वा देवानृषींश्चैव पितॄंश्चैव समर्च्चयेत्[१] ॥१॥
पिधाय वाससी शुक्ले प्राणायामं समाचरेत्।
मैथुनं कलहं हिंसां वर्जयेद्गाङ्गयात्रया ॥२॥
वासश्च मलिनं नैव गृह्णीयाद्गाङ्गयात्रिकः।
गुरुं गणेशं विष्णुञ्च शिवं दुर्गां सरस्वतीम् ॥३॥
गोब्राह्मणसतीश्चैव प्रणमेद्गाङ्गयात्रिकः।
गुरवः पितरो देवा दिक्पालाश्च ग्रहास्तथा ॥४॥
ऋषयश्चारणाः सिद्धाः गन्धर्व्वाः किन्नरास्तथा।
सर्व्वा देव्यश्च देवानां प्रणम्यन्ते मयाधुना ॥५॥
गङ्गास्नानार्थयात्राया भवन्तु मम[२] साधकाः।
इत्येवं मन्त्रमुच्चार्य्य गङ्गायात्रां समाचरेत् ॥६॥
[३][गङ्गे देवि लोकमातर्विघ्नोत्सारिणि ते नमः।
त्वद्दर्शनाय मद्यात्रां करोम्यद्यानुमोदय ॥७॥
इत्येवं मन्त्रमुच्चार्य्य[४] गङ्गायात्रां समाचरेत्।
विल्वञ्च तुलसीञ्चैव प्रणम्य भक्तिसंयुतः ॥८॥

१ C समर्पयेत। २ C सर्व्वे। ३ B omits the portion bracketted. ४ D इत्येवमन्त्रमुच्चार्य्य।

विल्वपत्रमुपाघ्राय गङ्गायात्रां समाचरेत्] ।
शयने भोजने दाने पथि रात्रौ दिवा तथा ॥९॥
गङ्गा गङ्गेति संस्मृत्य कालं संयापयेन्नरः ।
गङ्गायात्रां समासाद्य पथि चेन्म्रियते जनः ॥१०॥
गङ्गामृत्युफलं तस्य भवत्येव न संशयः ।
गङ्गाया दर्शने देवा आचरन्ति विरोधनम् ॥११॥
येनासाववगाह्यैनां नास्माभिः समतामियात् ।
कृतगङ्गार्थयात्रस्य शरीरे पापसञ्चयाः ॥१२॥
भवन्ति विकलाः सर्वे तमांसीव क्षपात्यये ।
ते पि विघ्नानाचरन्ति येनासौ नैव गच्छतु ॥१३॥
गङ्गाया वायुसंसर्गं प्राप्य पापैर्विमुच्यते ।
तदा विरोधं वै देवा आचरन्त्यस्य गच्छतः ॥१४॥
गङ्गावायोस्तु संसर्गे पठेत् स्तवमिमं नरः ।
सर्वदेवेश्वरो येन[१] परितुष्यति केशवः ॥१५॥
खे मद्धित्ति स्थितं देवमप्रमेयमजं विभुम् ।
शोकमोहविनिर्मुक्तं ध्याये[२] विष्णुं सनातनम् ॥१६॥
आसनाद्यैरसंस्पृष्टं सेवितं योगिभिः सदा ।
निर्गुणं सर्वगं शान्तं ध्याये[२] विष्णुं सनातनम् ॥१७॥
सर्वदोषविनिर्मुक्तं सुप्रभावं सुनिर्मलम् ।
निष्कलं शाश्वतं देवं ध्याये[२] विष्णुं सनातनम् ॥१८॥
अतुलं सुखधर्म्माणां व्योमदेहं सनातनम् ।

१ B देवः । २ B C D ध्यायेत् ।

[1][धर्म्माधर्म्मसमायुक्तं ध्याये[2] विष्णुं सनातनम्] ॥१९॥
चराचरविनिर्मुक्तं जन्ममृत्युविवर्जनम्।
अभयं सत्यसङ्कल्पं ध्याये[2] विष्णुं सनातनम्।
अमृतं साधनं साध्यं यं पश्यन्ति मनीषिणः ॥२०॥
[3]ज्ञेयाख्यं परमात्मानं ध्याये[2] विष्णुं सनातनम्।
व्यासाद्यैर्ऋषिभिः सर्वैर्ध्यानयोगपरायणैः ॥२१॥
अर्च्चितं भावकुसुमैर्ध्याये[2] विष्णुं[4] सनातनम्।
विष्णवष्टकमिदं पुण्यं योगिनां हर्षदायकम् ॥२२॥
यः पठेत्परया भक्त्या स विष्णुतुल्यतामियात्।
विष्णुतुल्यस्तदा[5] भूत्वा गङ्गां पश्ये[6]दनन्यथा ॥२३॥
दृष्ट्वा[7] गङ्गां महापुण्यां प्रणमेद्दण्डवन्मुदा।
गङ्गे देवि जगन्मातः शिवशीर्षकृतालये ॥२४॥
जन्मैतत् सफलं मेऽस्तु भवतीं प्रणमाम्यहम्।
एतेन खलु मन्त्रेण ह्यष्टाङ्गैः प्रणमेच्छिवाम् ॥२५॥
स्मृतासि गङ्गे दृष्टासि स्पृशामि त्वां महेश्वरीम्।
विष्णुदेहद्रवाकारे[8] प्रसीद जगदम्बिके ॥२६॥
एतेन खलु मन्त्रेण स्पृशेद्देवीं सनातनीम्।
ततो दिवासाः स्नायाच्च इष्टदेवप्रियार्थकः ॥२७॥

---

१ B omits the portion bracketted. २ B C D ध्यायेत्।
३ D adds वैशाखादिवमासाना०। ४ D देवं।
५ B विष्णुतुल्यः सदा। ६ C पश्येत नान्यथा। ७ B दृष्टां।
८ B ०द्रवाकारि।

मज्जन्ति येऽस्मिन् किल देहभाजो
न ते निमज्जन्ति पुनर्भवाब्धौ ।
सोऽयं पुरस्तात्पयसां प्रभावो
गङ्गेति यं गायति वेदवर्गः[१] ॥२८॥

आवाहनञ्च तीर्थानां नापेक्ष्यं जाह्नवीजले ।
निःसङ्कल्पोऽपि यः स्नायात् स च पापैर्विमुच्यते ॥२९॥
देवर्षिपितृलोकानां[२] तर्पणं विधितश्चरेत् ।
संपूजयेदिष्टदेवं चिन्तान्तरपराङ्मुखः ॥३०॥
गङ्गातीरे वसेन्मर्त्यस्त्रिरात्रमपि नान्यथा ।
यं क्षणं तत्र वसति स एव सार्थकः क्षणः ॥३१॥
गमने प्रार्थयेद्देवीं पुनर्दर्शनकाम्यया ।
मात्रा पित्रा दुहित्रा वा भार्य्यापुत्रधनादिभिः ॥३२॥
त्यक्तस्य न तथा दुःखं यथा गङ्गावियोगजम् ।
नैव स स्यात् क्षणो ब्रह्मन् यत्र गङ्गा न विद्यते ॥३३॥
[३][न गम्यते च देशोऽसौ यत्र गङ्गा न विद्यते] ।
एकपादस्थितो यस्तु तपत्ययुतवत्सरान् ॥३४॥
दण्डमात्रन्तु गङ्गायां वसेत्स तु विशिष्यते ।
एवन्तु दण्डसंख्याभिर्मासपंचादिवासतः ॥३५॥
फलं दत्ते भगवती गङ्गावासिजनाय वै ।
यान् कालान् स्वर्धुनीतीरे वसेन्मर्त्यः समाहितः ॥३६॥

१ B वेदगर्भः D देववर्गः । २ C ०देवानां ।
३ B omits the portion bracktted.

तावद्देवाश्च पितरो देवाश्च परितोषिताः ।
तावत्तु ब्रह्मचर्य्येण कालं संयापयेद्द्विज ॥३७॥
तावदेव परस्यान्नं न भुञ्जीत कदाचन[१] ।
[२]तैर्दत्तञ्च न गृह्णीयात् परनिन्दां न चाचरेत् ॥३८॥
गङ्गातीरस्थितो यस्तु परनिन्दां समाचरेत् ।
सर्वभूतमयो विष्णुस्तस्मै क्रुद्धोऽत्र पराङ्मुखः ॥३९॥
गङ्गास्नानार्थमागत्य यो गृह्णाति[३] गृहीजनः ।
तण्डुलं वा सुवर्णं वा वस्त्रादिं वा कदाचन ॥४०।
न तस्य फलसिद्धिः स्यात् सम्यग् गङ्गा प्रयोजनम् ।
स पङ्गुः स सदा काणः स एव पापराशिमान् ॥४१॥
यो गङ्गानिकटं प्राप्य गङ्गास्नानमुपेक्षते ।
सायं प्रातश्च मध्याह्ने द्रष्टव्या तीरवासिभिः ॥४२॥
गङ्गातीराद्गतो दूरं न स्नात्वा[४] यस्तु जाह्नवीम् ।
ब्रह्महत्यादिभिः पापैस्तत्क्षणात् स प्रलिप्यते[५] ॥४३॥
गङ्गास्नानरतं मर्त्यं गङ्गातीरनिवासिनम् ।
पूजयित्वा यथान्यायमश्वमेधफलं लभेत् ॥४४॥
अगङ्गदेशवासी यो भग्नरागो[६] द्विजर्षभ ।
न गङ्गामाश्रयेद्देवीं परः स विधिवञ्चितः ॥४५॥
ग्राम[७]जनपदाः शैला आश्रमाः शुभचयो हिते ।

---

१ C भुञ्जीत न कदाचन । २ B adds न तस्य फलसिद्धिः स्यात् ।
३ C न गृह्णाति । ४ C स्नाता । ५ C तत् प्रलिप्यते ।
६ C D भग्नवासो । ७ C D ग्रामाः ।

येषां भागीरथी गङ्गा मध्ये याति सरिद्वरा ॥४६॥
मानुष्यं दुर्लभं प्राप्य विद्युत्सम्पातचञ्चलम् ।
गङ्गां यः सेवते सोऽत्र बुद्धेः पारं परं गतः ॥४७॥
कृतपुण्या महात्मानो देवलोकप्रपूजिताः ।
सहस्रसूर्य्यप्रतिमां गङ्गां पश्यन्ति ते भुवि[1] ॥४८॥
साधारणजलापूर्णां साधारणनदीमिव ।
पश्यन्ति नास्तिका गङ्गां पापोपहतलोचनाः ॥४९॥
अगङ्गवासं सन्त्यज्य यो गङ्गावासमाव्रजेत् ।
स हि बुद्धिमतां श्रेष्ठो देवैरपि सुदुर्लभः ॥५०॥
पैतृकी वसतिर्यस्य गङ्गातीरे द्विजर्षभ ।
मनुष्यचर्म्मणा नद्धः स शिवो नात्र संशयः ॥५१॥
गङ्गातीरनिवासाय कन्यां दत्ते[2] तु यः शुभाम् ।
प्रत्यहं[3] पितरस्तस्य गयाश्राद्धस्य भोगिनः ॥५२॥
गङ्गातीरनिवासाय यो भूमिं प्रददाति वै ।
स्वर्गराज्यं स भुङ्क्ते[4] वै यावदिन्द्राश्चतुर्द्दश ॥५३॥
कृतापराधञ्च नरं गङ्गातीरनिवासिनम् ।
यस्ताड़येद्वचोदण्डैस्तस्य पापफलं शृणु ॥५४॥
विमुखास्तस्य वै देवाः पितरश्चाप्युपोषिताः ।
गङ्गां परित्यजेत्तं वै सोऽगतिश्चिरनारकी ॥५५॥
गङ्गातीरालयं मर्त्यं सूर्य्यतुल्यं य ईक्षते ।

---

१ D वै भुवि । २ D दत्वा । ३ D पितरः प्रत्यहं तस्य ।
४ C प्रभुङ्क्ते ।

तस्यैव विमलं चक्षुर्देवदर्शनसाधनम् ॥५६॥
गङ्गातीरालयान् लोकान् गङ्गालोकान् वदेत यः।
स एवानुगृहीतः स्याद्गङ्गया[1] द्विजपुङ्गव ॥५७॥
गङ्गातीरालयान्मर्त्यान् देवैरर्च्यान् कुधीर्जनः।
मनुष्यबुद्ध्या पापिन्या जैमिने ह्यवमन्यते ॥५८॥
देवा मनुष्यरूपेण गङ्गातीरे चरन्ति वै।
तस्मात्तान्नावमन्येत श्रेयोर्थी न कदाचन ॥५९॥
गङ्गातीरद्वये विप्र पिशाचास्तु शिवाज्ञया।
कोटयः पञ्चलक्षाणि तिष्ठन्ति[2] वायुरूपिणः ॥६०॥
शृणु तेषाञ्च कर्म्माणि यदर्थे ते निरूपिताः।
ये तत्र पापकर्म्माणो गङ्गातीरे द्विजर्षभ ॥६१॥
त्यजन्ति विष्ठामूत्राणि श्लेष्मकेशनखादि च[3]।
तत्रैव तांस्ते सर्व्वाणि भोजयन्त्यनुरूपतः ॥६२॥
ये मिथ्यावादिनो दुष्टा गुरुसेवापराङ्मुखाः।
वृथा हिंसारताः क्रूरा विश्वासघातिनस्तथा ॥६३॥
तांस्ते गङ्गापिशाचा वै मुमूर्षून् गाङ्गरोधसि।
चेत्रान्नारायणान्नीत्वा[4] स्थापयन्ति नभःस्थले ॥६४॥
शून्ये सन्त्यज्य प्राणांस्ते यान्ति दुर्गतिमुत्तमाम्।
तत्र पश्यन्ति पापिष्ठाः पश्यन्ति दिव्यचक्षुषः ॥६५॥

---

१ B गङ्गायाः। २ B तिष्ठन्तु।
३ B D ०नखानि च। ४ B भित्वा।

जैमिने वर्णयाम्यस्य[१] लक्षणानि निबोध मे ।
शनिमङ्गलवारे वा निशीथे लुप्तबोधनः ॥६६॥
विष्ठामूत्रं[२] त्यजन् भूरि चिररोगी बहूनपि ।
[३][वासरान् लुप्तसङ्गश्च सदाघूर्णितलोचनः] ॥६७॥
ऊर्द्ध्वश्वासो दृष्टदेहो गतसर्व्वेन्द्रियाशयः[४] ।
यो म्रियेत स एवायं पिशाचैर्यस्तु लिप्यते ॥६८॥
मङ्गाभैरवनामानः सन्त्यन्ये शिवकिङ्कराः ।
ते रक्षन्ति सदा गङ्गां नानारूपविहारिणः ॥६९॥
ते तु कुर्वन्ति कर्म्माणि तानि विप्र निबोध मे ।
यान्यदत्तानि पुष्पाणि नैवेद्यादीनि यानि च[५] ॥७०॥
गङ्गाप्रवाहस्पृष्टानि गृहीत्वा तानि ते शिवाम् ।
पूजयन्ति महाभाग[६] शिवविष्ण्वादिकानपि ॥७१॥
वस्त्रनिष्पीड़ितं वारि त्यक्तं साधोऽंशुकं[७] जले ।
गृह्णन्ति शिरसा ते वै गङ्गापाताभिशङ्कया[८] ॥७२॥
मदमात्सर्य्यहिंसादियुक्तान् दुष्टधियो जनान् ।
दूरीकुर्व्वन्ति[९] ते देवा यत्ते स्युरन्यतो मृताः[१०] ॥७३॥

---

१ B वर्णयाम्यद्य । २ D ०मूत्रान् ।
३ B omits the portion bracketted.
४ C गतसारेन्द्रियाशयः । ५ B D नैवेद्यानि च ।
६ B omits महाभाग । ७ B वासोऽंशुकं ।
८ B ०पातातिशङ्कया । ९ B D दूरीकुर्वन्तु ।
१० B जनाः ।

तस्माद् यत्नेन मात्सर्य्यहिंसादि त्याज्यमेव हि ।
इति ते कथितं विप्र गङ्गाज्ञानं[1] यथामति[2] ॥७४॥
गङ्गामरणकार्य्यस्य फलं विप्र निबोध मे ।

इति श्रीबृहद्धर्म्मपुराणे मध्यखण्डे गङ्गाधर्म्मेषु
पञ्चपञ्चाशत्तमोऽध्यायः ।

---

१ C यथाज्ञानम् । २ B D यथाविधि ।

# षट्पञ्चाशत्तमोऽध्यायः ।

ऋषिरुवाच ।

यो जन्मकोटिनिष्पापः स गङ्गामरणं लभेत् ।
प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम् ॥१॥
अत्र चेत् म्रियते देही न देहं पुनराव्रजेत् ।
यत्र जन्मनि गङ्गायां मृत्युर्भवति देहिनः ॥२॥
तदा पापादि कर्म्मास्य गण्यते न कदाचन ।
कोटिजन्मार्जितं पुण्यं तदा तस्यानुमीयते ॥३॥
देहिनां मरणं विप्र जन्मना सह जायते ।
[तच्चेद्गङ्गाजले भूतं जन्मना सह नश्यति][1] ॥४॥
अप्यकार्य्यशतं यस्य गङ्गामरणमेव च ।
पापं तस्य गुरुत्वेन ह्यधोगच्छति जैमिने ॥५॥
पुण्यं बलीयो लाघव्यादूर्द्ध्वं गच्छति सर्वथा ।
देही[2] तु पुण्यमाश्रित्य चोर्द्ध्वं गच्छति नान्यथा ॥६॥
ज्ञानतोऽज्ञानतोवापि तिर्य्यग्वा योगविच्च वा[3] ।
गङ्गामृत्युमवाप्यैव परं पदमवाप्नुते ॥७॥

---

१ B omits the portion bracketted.

२ B D देहीति ।   ३ B ०वियच्चराः ।

जैमिनिरुवाच ।

मिथ्यावादादिदुष्टांस्तु चेचान्नारायणाख्यकात् ।
गङ्गापिशाचा शांकाशं नयन्तीति त्वयोदितम् ॥८॥
तिर्य्यग्योनिगतानान्तु कथं मुक्तिर्भवेत्[१] प्रभो ।
कथं वा ब्रह्महत्यादेः प्रायश्चित्तं भवेदिति ॥९॥
एतं मे संशयं ब्रह्मं श्छेत्तुमर्हसि मानसम् ।
अतीन्द्रियञ्च सूक्ष्मञ्च सम्यक् पश्यन्ति योगिनः ॥१०॥

ऋषिरुवाच ।

ये मिथ्यावादिनो दुष्टा गुरुसेवापराङ्मुखाः ।
वृथाहिंसारताः क्रूरा विश्वासघातकास्तथा[२] ॥११॥
तेषान्तु तानि पापानि गङ्गादर्शनकर्म्मणि ।
भवन्ति प्रतिबन्धीनि यावज्जीवति जैमिने ॥१२॥
अतस्ते पापकर्म्माणो नभस्येव त्यजन्त्यसून् ।
अतस्ते शून्यमंरणा दूरविच्छिन्नकीकसाः[३] ॥१३॥
दुष्पार[पापा[४] अपिते] पापपाराभिगामिनः ।
भुक्त्वा भोगांश्च पापिष्ठान् पुनर्जाताः शुभे कुले ॥१४॥
गङ्गायां मरणं प्राप्य लभन्ते मुक्तिमुत्तमाम् ।
तिर्य्यञ्चस्तु[५] पापभोगशरीरा दैवयोगतः ॥१५॥
गङ्गां प्राप्य स्वर्गतास्तु पिशाचा न क्षिपन्ति तान्[६] ।

---

१ D मृत्युः । २ D ० घातकस्तथा । ३ B D दूरं विच्छिन्नकीकशाः ।
४ B omits the portion bracketted.
५ C तिर्य्यक् जन्तु० । ६ B पिशाचो न क्षिपेत्तु तान् ।

स्वर्गान्ते ते पुनर्जाता निर्व्वाणं प्राप्नुवन्ति वै ॥१६॥
ब्रह्महत्यादिपापानि महान्ति द्विजपुङ्गव ।
गङ्गाजलकणेनैव तानि नश्यन्त्यसंशयम् ॥१७॥
ब्रह्महत्यादिपापानि गोस्त्रीहत्यादिकानि च ।
कृतान्यज्ञानतस्तानि हिंसाविरहचेतसा ॥१८॥
सत्यञ्च चेतःस्वाच्छ्यञ्च[1] तेषां नाशकरे उभे ।
अतो ये ब्रह्महत्यास्त्रीगोहत्यादिकपापिनः ॥१९॥
सत्यवादादिपुण्येन गङ्गां प्राप्यन्ति मुक्तिदाम् ।
अतः कोऽस्ति संशयस्ते[2] तं मे पृच्छ महामुने ॥२०॥

जैमिनिरुवाच ।

एवन्तु गङ्गामरणं कः कुत्र प्राप्तवानुत ।
तद्वदस्व महाभाग श्रोतुं वाञ्छा ह्यतीव मे ॥२१॥

ऋषिरुवाच ।

उक्ता सगरपुत्राणां गतिः परमदुर्लभा ।
अथान्यदपि वक्ष्यामि शृणु त्वं द्विजपुङ्गव ॥२२॥
कीकटे नामदेशे हि काककर्णाख्यको नृपः ।
प्रजानां हितकृन्नित्यं ब्रह्मद्वेषकरस्तथा ॥२३॥
तस्य[3] धर्म्मकथा विप्र कर्णे वज्रायते[4] द्विज ।
रजसा तमसाविष्टः सततं स नृपेश्वरः ॥२४॥
तत्र देशे गया नाम पुण्यदेशोऽस्ति विश्रुतः ।

---

१ B C D स्वा श्यञ्च । २ B संशयन्ते । ३ C अस्य ।
४ B न जायते ।

नदी च फल्गुदा नाम पितॄणां स्वर्गदायिनी ॥२५॥
तद्दिक्पराङ्मुखो राजा न च तत्र प्रयाति वै[1]।
अथ तत्र वणिक्कश्चित्तस्य दर्शनमागमत्[2] ॥२६॥
गङ्गास्नानरतः साधुर्गङ्गाजलसमन्वितः।
स वै बहुधनं तस्मै ददौ[3] भूपाय वै वणिक् ॥२७॥
तेन तस्य सह प्रीतिर्गङ्गास्नानविरोधकृत्।
वणिक् सोपि नृपप्रीत्या तत्र वासञ्चकार ह ॥२८॥
तद्वर्षाभ्यन्तरे तस्य काककर्णस्य भूपतेः।
महादारुज्वरार्त्तस्य[4] मृत्युकालोह्युपस्थितः ॥२९॥
तदा स वणिजं दृष्ट्वा राजा परमनास्तिकः।
रुरोद तस्य विच्छेददुःखान्यनुभवन् बहु ॥३०॥

काककर्ण उवाच।

सखे वणिङ्महाभाग[5] म्रियेऽहं नात्र संशयः।
त्वं मे सुतास्त्रिशूलाज्यं समृद्धबलवत्तरम्[6] ॥३१॥
पालयेथास्त्वया त्यक्तो याम्यहं मरणं प्रभो।
त्वं मे सुहृत्सखा[7] बन्धुर्विश्वास्यः सर्व्वकर्मसु ॥३२॥

वणिगुवाच।

राजन् मरणमस्त्येव सर्व्वेषामेव जन्मिनाम्[8]।
ईश्वरः सुखदुःखानां कर्त्ता नान्यः कदाचन ॥३३॥

---

१ C न कोपि च प्रयाति वै। २ B दर्शनमागतः। ३ A ततो।
४ B ०ज्वरात्तस्य। ५ B भवान्। ६ B समृद्धं बलवत्तरं।
७ B सखा सुहृत्। ८ D देहिनाम्।

आत्मैव शोच्यः सर्वेषां नापरो हि कदाचन ।
सर्व्वः स्वोपार्जितं भुङ्क्ते न परोपार्जितं क्वचित् ॥२४॥
देह एवात्मनो नैव किमन्ये पुत्रबान्धवाः ।
अतएव महाराज स्मर गङ्गां हरिं शिवम् ॥२५॥
येन त्वं देहबन्धेन मुक्तो यास्यसि सद्गतिम् ।
तव तेनैव धर्म्मेण पुत्राद्याः सुखमाप्नुयुः ॥२६॥

काककर्ण उवाच ।

सखे नैतत् सखिवचो विपत्काले ममाधुना ।
पुत्रमानय मे बालं तञ्च तुभ्यं समर्पये ॥२७॥
बलिनोऽन्ये यथा भूपा न पुत्रं[1] पीड़यन्ति वै ।
यदुक्तं भवता किञ्चिन्मया लाजन्मनः[2] श्रुतम् ॥२८॥

वणिगुवाच ।

त्वं न म्रियस्व हे राजन् पुत्रादीनपि पालय ।
अहञ्चापि मरिष्यामि पुत्रन्ते पालये कथम् ॥२९॥

काककर्ण उवाच ।

अहं पश्यामि वै वीरौ भीमौ सरभसेक्षणौ ।
एताभ्यां नीयमानोऽहं बलादेव वणिग्वर ॥४०॥
स्थातुमिच्छामि न स्थातुं प्राप्यते रक्ष तर्हि माम् ।

शुक उवाच ।

एवमुक्त्वैव राजासौ काककर्णो ह्यधार्म्मिकः ।

---

१ C पुत्रं मे ।  २ C किन्तन्मया ।

लुप्तसर्व्वेन्द्रियज्ञानः पश्यन् यमभटद्वयम् ॥४१॥
अतीव कृच्छ्रात् स प्राणांस्तत्याज चिरकालतः।
तं नीयमानं दूताभ्यां यमस्य द्विजपुङ्गव ॥४२॥
दूत एकः समागत्य वारयामास वै बलात्।
गङ्गादूतवरः सोऽसौ गङ्गाभैरवनामकः ॥४३॥
शुक्लः परमतेजस्वी त्रिनेत्रो दोश्चतुष्टयी।
जटामण्डलसंशोभिमुकुटोज्ज्वलमस्तकः ॥४४॥
पीतकौषेयवसनो नूपुरध्वनिताङ्घ्रिकः।
दीपयंश्च दिशः सर्व्वाः शूलपद्माद्यपाणिकः ॥४५॥
अभयञ्च ददत्साधुरद्भुतः स्मितशोभितः।

गङ्गाभैरव उवाच।

रे दूतौ तिष्ठतं कुत्र गच्छतं वा मयेरितौ।
कौ वा[1] युवां किन्नामानौ मामुक्त्वा व्रजतं तथा[2] ॥४६॥

ऋषिरुवाच।

इत्युक्तौ तेन तौ दूतौ भयाविष्टौ बभूवतुः।
तदद्भुतं महारूपं दृष्ट्वा जगदतुर्वचः ॥४७॥

दूतावूचतुः।

आवां वै धर्म्मराजस्य दूतौ तस्याज्ञया चरौ।
काककर्णममुं भूपं नीत्वा याम्यो[3] यमालयम् ॥४८॥

भैरव उवाच।

कथं वै धर्म्मराजस्य युवां दूतौ भविष्यथः।

---

१ B omits वा। २ C यया। ३ B याम।

गतपापमिमं यस्मान्नीत्वा यास्यथ यातनाम् ॥४९॥
नाहं प्रत्येमि युष्माकं यमदूतत्वमेव हि।
न यमो यमदूता वा धर्मातीतक्रियापराः ॥५०॥

दूतावूचतुः।

सत्यमावां यमभटौ पापीयानप्ययं नृपः।
कीकटे च मृतोऽप्येष पापभूमौ न संशयः ॥५१॥
अयं किं यमदण्डार्हो न भवेत् त्वन्निवारितः।
को भवानद्भुतं रूपं दधानो वदतीदृशम्[१] ॥५२॥

भैरव उवाच।

गङ्गाभैरवनामाहं गङ्गाज्ञानुचरः सदा।
गङ्गावासिजनस्पृष्टं त्यजतं भूपमप्यमुम् ॥५३॥
नास्मिन् यमाधिकारोऽस्ति वणिक्संसर्गकारिणि[२]।
भवद्भ्यां नेक्षितः[३] किं स गङ्गास्नायी वणिग्वरः ॥५४॥
गङ्गावासिजनैः सार्द्धं कृत्वा सम्बन्धबन्धनम्।
न मर्त्याः क्लेशमर्हन्ति गङ्गागङ्गाश्रयौ समौ ॥५५॥
तस्मात्त्यक्त्वा नृपं ह्येनं व्रजतं चेज्जिजीविषू।
न चेद् यमाधिकारं वो लोपये भूनिदेशतः ॥५६॥

ऋषिरुवाच।

इत्युक्तौ भयवित्रस्तौ यमदूतावुभौ तु तौ।
महापाश-महादण्ड-नामानौ तं प्रणेमतुः ॥५७॥

---

१ C भवतीदृशम्। २ A B D ०कारिणा। ३ C भवद्भ्यामीक्षितः।

जग्मतुश्च धर्म्मराजं भैरवोऽन्तर्दधेऽपि सः ।
राजापि काककर्णोऽसौ विमानं दिव्यमारुहन् ॥५८॥
वीजितो देवकन्याभिः प्रययौ विमलं पदम् ।
यत्संसर्गिजनस्येदं कथितं सङ्गजं फलम् ॥५९॥
तस्याः[1] साक्षात् फलं विप्र ज्ञेयमात्मधियैव हि ।
वणिक् च भूपपुत्रं तं नीत्वा गङ्गाश्रयं ययौ ॥६०॥
तस्माद्गङ्गामतिर्विप्र जायते पूर्वभाग्यतः ।
नैकपादश्च सन्त्यज्य गङ्गां गन्तुं प्रयुज्यते ॥६१॥
सर्व्वस्वमपि चेद् यातु[2]न च गङ्गा विहीयते ।
गङ्गात्यागात् परा[3] नास्ति विपत्तिः पृथिवीतले ॥६२॥
गङ्गानारायणक्षेत्रे[4] पिवन् गङ्गाजलं नरः ।
रामनारायणादीनि स्मरन् नामानि वा पठन् ॥६३॥
गङ्गागङ्गेति शृण्वंश्च मृतो वा किं न साधयेत् ।
राम नारायणानन्त मुकुन्द मधुसूदन ॥६४॥
कृष्ण केशव कंसारे हरे वैकुण्ठ वामन ।
गोविन्द वासुदेवेश विष्णो श्रीपुरुषोत्तम ॥६५॥
पुण्डरीकाक्ष भगवन् पद्मनाभाच्युत स्वभूः[5] ।
एवं शृण्वन् पठन् मर्त्त्यो मृतः किं नहि साधयेत् ॥६६॥
शिव[6] शङ्कर पञ्चास्य महारुद्र त्रिलोचन ॥६७॥
हरेशानेश देवीश नीलकण्ठाब्जलोचन ।

१ C तस्मात् । २ B चेद्वृत्ते । ३ B D परो ।
४ D ॰नारायणे । ५ B D पद्मनाभोऽच्युतः स्वभूः । ६ A शिवः ।

पार्वतीनाथ गङ्गेश गङ्गाधर सतीपते ॥६८॥
मृड भीम गुरो नाथ शम्भो भूतपते पर[१] ।
एवं शृण्वन् पठन्मर्त्यो मृतः किं नहि साधयेत् ॥६९॥
गङ्गा नारायणी माता मोक्षसेवितपादुका ।
संसारबन्धनादस्मात् त्वमस्तारय तारिणि ॥७०॥
एवं शृण्वन् पठन्मर्त्यो मृतः किं नहि साधयेत् ।
चाण्डालेनापि यस्यास्ये न्यस्ये[२]द्गङ्गाजलं परम् ॥७१॥
सोऽपिमुक्तिं लभेन्मर्त्यः किमु[३] पुत्रादिना द्विज ।
नीचोत्तमविचारन्तु कालाकालविचारणाम्[४] ॥७२॥
देशादेशविचारञ्च न गङ्गासलिले चरेत् ।
प्राप्तमात्रस्तु गङ्गान्तु[५] प्रणमेत् संग्रहेत् पिवेत् ॥७३॥
गङ्गानारायणक्षेत्रे ब्राह्मणानाञ्च सन्निधौ ।
गायतां हरिनामानि मरणं मुक्तिलक्षणम् ॥७४॥
रुद्राक्षतुलसीविल्वदलयुक्ताङ्गता तथा ।
गङ्गामृत्स्निग्धगात्रञ्च मरणं[६] मुक्तिलक्षणम् ॥७५॥
शिवः स्वयं समागत्य गङ्गायां हि मुमूर्षतः ।
कर्णे जपति विमलं ज्ञानं परमदर्शनम् ॥७६॥
अत एव न सन्देहो गङ्गामरणमोक्षणे ।
रात्रौ दिवा वा[७] सन्ध्यायां प्रातर्मध्याह्न एव वा ॥७७॥

---

१ A परे । २ B C D न्यसेत् । ३ D किम्नु । ४ C ०विचारणा ।
५ C प्राप्तमात्रन्तु गङ्गाम्भु । ६ C मरणे । ७ I Omits वा ।

अयने दक्षिणे चैवोत्तरे वा द्विजपुङ्गव[१] ।
गङ्गा नारायण ब्रह्मेत्युक्ता गङ्गाजलान्तरे ॥७८॥
निर्व्वाणमोक्षं दुष्प्रापं[२] नरो याति न संशयः ।
गङ्गामरणमाहात्म्यं वक्तुं[३]वर्षशतैरपि ॥७९॥
न शक्यते विधात्रापि किमु मर्त्येन जैमिने ।
गङ्गा दाक्षायणी त्यक्त्वा देहं दक्षक्रतौ पुरा ॥८०॥
जन्ममृत्युव्यथां ज्ञात्वा प्रपन्नान् मोचयेत्ततः ।
इति ते कथितं ब्रह्मन् यत् पृष्टोऽहं यथामति[४] ॥८१॥
गङ्गायां देवपूजादेर्माहात्म्यं शृणु कथ्यते ॥

इति श्रीबृहद्धर्म्मपुराणे मध्यखण्डे गङ्गाधर्म्मेषु
षट्पञ्चाशत्तमोऽध्यायः ॥०॥

---

१ B D वाहि द्विजोत्तम । २ B निष्पापं ।
३ B omits वक्तुं । ४ D ०मतिः ।

## अथ सप्तपञ्चाशत्तमोऽध्यायः ।

ऋषिरुवाच ।

योजनाभ्यन्तरस्था हि लिप्सवः फलमक्षयम् ।
नित्यं नैमित्तिकं काम्यं कुर्य्युर्हि त्रिविधं विधिम् ॥ १ ॥
गङ्गातीरं समागत्य सर्वं तत्राक्षयं[1] भवेत् ।
कालाशुद्धौ च यत्कार्य्यं मलमासेऽथवा च यत्[2] ॥ २ ॥
निषिध्यते[3] तद्धि कार्य्यं गङ्गातीरमुपागतैः ।
कालपात्रविचारस्तु गङ्गातीरे न विद्यते ॥ ३ ॥
प्रायश्चित्तञ्च तत्रैव यत्र गङ्गा न विद्यते ।
गङ्गाप्रवाहे शालग्रामशिलायाञ्च सुरार्च्चने ॥ ४ ॥
द्विजपुङ्गव नापेक्ष्ये[4] आवाहनविसर्ज्जने ।
विष्णुं सूर्य्यं गणेशञ्च दुर्गां लक्ष्मीं सरस्वतीम् ॥ ५ ॥
षष्ठीञ्च मनसादेवीं दिक्पालांश्च ग्रहानपि ।
शिवं भूतेश्वरं देवं मुनीनपि यथाविधि ॥ ६ ॥
भूतान् प्रेतान् पिशाचांश्च गन्धर्वाप्सरसस्तथा ।
पितॄन् सर्वान् पूजयेच्च द्विज गङ्गाजले शुचौ ॥ ७ ॥
शुक्ले शुष्के[5] च वसने परिधायासने स्थितः ।

---

१ B तत्राक्षयो । २ B तथाचरेत् । ३ B न निन्द्यते ।
४ B C D नापेक्षे । ५ B D शुक्ते ।

पूजयेन्निखिलान् देवान् पूर्वास्यो वोत्तरामुखः[1] ॥८॥
आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम्।
गन्धं पुष्पं धूपदीपौ वस्त्रालङ्कारमेव च ॥९॥
मधुपर्कं तथा माल्यं नैवेद्यं विविधं तथा।
ताम्बूलमाचमनीयञ्च[2] पुनर्यत्परिकल्प्यते ॥१०॥
उपचारैरमीभिस्तु[3] पूजयेत् सर्वदेवताः।
आसनं स्वर्णरूप्यादिः कुशकाशादिकं यथा ॥११॥
स्वागत[4]प्रश्नवचनं पाद्यं पादार्थिकं जलम्।
अर्घ्यन्तु कथ्यते ब्रह्मं[5]स्तदिहैकमनाः शृणु ॥१२॥
त्रिकोणमण्डले वामे तत्र पात्रं निधाय च[6]।
त्रिभाग[7]पूर्णसलिलं तत्र शङ्खं निधापयेत् ॥१३॥
शुक्लतण्डुलदूर्वादि तत्र दद्यादतन्द्रितः।
धेनुमुद्रां योनिमुद्रां दर्शयेच्चाङ्कुशेन च ॥१४॥
आवाहयेच्च तीर्थानि यदि गङ्गाजलं[8] न हि।
अग्निसूर्य्येन्दुनामभ्यस्तत्र पुष्पाणि निःक्षिपेत् ॥१५॥
त्रिकोणपात्रशङ्खेषु क्रमेण द्विजपुङ्गव।
अष्टधा मूलमन्त्रञ्च जपेत्तत्र यथातथम् ॥१६॥
मन्त्ररूपमिदं वारि अर्घ्यमित्युच्यते बुधैः।
तज्जलस्पर्शनात्सर्वं कुर्य्यान्मन्त्रमयं कृती ॥१७॥

---

१ B पूर्व्वास्योत्तरामुखः। २ D ताम्बूलाचमनीयञ्च।
३ B अमीभिश्च। ४ B C D स्वागतं। ५ B विप्र।
६ B निधाय हि। D पिधाय च। ७ B द्विभाग०। ८ D ०जले।

जलमाचमनीयञ्च गन्धास्तु बहुधा मताः ।
चन्दनागुरुकस्तूरीकुङ्कुमादि[1]प्रभेदतः ॥ १८ ॥
पुन्देवेभ्यो गौरशुक्लवसने उचिते मते[2] ।
देवीभ्यो रक्तगौराणि सूर्य्ये रक्तं विशिष्यते ॥ १९ ॥
नीलञ्च मनसादेव्यै[3] कृष्णाय च कदाचन ।
देवानां यादृशो वर्णस्तद्वस्त्रं तस्य तुष्टिदम् ॥ २० ॥
अलङ्कारांस्तस्य देयाः स्वर्णरूप्यविशेषतः[4] ।
कांस्यपात्रे मधुसितादधीनि[5] घृतमिश्रणात् ॥ २१ ॥
मधुपर्को ह्ययं ज्ञेयः सर्वदेवसुतुष्टिदः ।
धूपस्तु षोड़शाङ्गः स्याद्दशाङ्गस्तु[6] क्वचिन्मते ॥ २२ ॥
दीपश्च घृतदीपः स्यात् तैलदीपोऽन्ततः किल ।
माल्यं पुष्पैः सूत्रवद्धैः[7] सुगन्धैर्विविधैरपि ॥ २३ ॥
नैवेद्यं फलदुग्धादि घृतपिष्टं[8] विशेषयेत्[9] ।
शर्करादैस्तु[10] मधुरमर्घ्यमुद्रा प्रदर्शिता[11] ॥ २४ ॥
निवेदयेन्मन्त्रितं तु पुनराचामयेत्ततः[12] ।
ताम्बूलं कथ्यते ब्रह्मं स्तदिहैकमनाः शृणु ॥ २५ ॥
गुवाकपर्ण[13]चूर्णैश्च लवङ्गादिविशेषितम् ।
ताम्बूलमुच्यते देवतुष्टिदं मुखशोभनम्[14] ॥ २६ ॥

---

१ B ०कुङ्कुमा विप्रभेदतः, C ०चन्दनादि० । २ B D ०पुष्पानि उचिते सति । ३ A मनादेव्यै । ४ C तथा ज्ञेयाः सर्वरूप्यविशेषतः । ५ C दद्याच्च । ६ D दशाङ्गस्तु । ७ B D सूत्ररुद्धैः । ८ B C ०पृष्टं । ९ B विशेषितं । १० C शर्करादिस्तु । ११ A C D प्रदर्शितम् । १२ B D आवमयेत् । १३ C गुवाकपूर्ण० । १४ B, D ०शोध० , ० शोभिन० ।

एतादृशैस्तूपहारैर्गङ्गायां देवमर्च्चयेत्।
परभाषां नीचकथामशुचिस्पर्शनं तथा॥२७॥
पूजासनपरित्यागंमसमाप्ते सुरार्च्चने।
क्रोधं हिंसाञ्च पैशुन्यं[1] चित्तचाञ्चल्यमेव च॥२८॥
अहं त्वञ्च ममेत्यादि बुद्धिं शोकं भयं तथा।
त्वराञ्च विषये चिन्तां वर्जयेत् पूजको जनः॥२९॥
पूजाकाले गुरुं प्राप्य पूजामेव परित्यजेत्।
गुरुपुत्रञ्च पौत्रञ्च दृष्ट्वापि च तथाचरेत्॥३०॥
तानेव पूजयेत्तत्र तेनैव ह्यधिकं फलम्[2]।
दृष्टं संपूजयेन्मर्त्य[3] एवमेवविधानतः॥३१॥
नैवेद्यादीनि द्रव्याणि ब्राह्मणाय समर्पयेत्।
शिवपूजाविधिं विप्र तदिहैकमनाः शृणु॥३२॥
निर्म्माय शिवलिङ्गन्तु देवीसहितमादधत्।
स्वर्णरूप्यादिना शावमृत्तिकाकृतमेव वा॥३३॥
अङ्गुष्ठपरिमाणन्तु लिङ्गं कुर्य्यात्ततो द्विज।
कुर्य्याच्च वेदिकां दिव्यां सोमसूत्रेण संयुताम्[4]॥३४॥
तदधस्त्वासनं कुर्य्याद् वृषरूपन्तु तन्मतम्।
वेदीं कुर्य्याद् योनिरूपां सैव देवी प्रकीर्त्तिता॥३५॥
दण्डाकारञ्च[5] लिङ्गं स्यात् स च साक्षान्महेश्वरः।

---

१ B omits पैशुन्यं। २ B ह्यधिकफलं।
३ D मर्त्त्यं। ४ D वेष्टितां। ५ B दण्डाकारन्तु।

अङ्गुष्ठपरिमाणन्तु न्यूनत्वावधिरीरितः[1] ॥२६॥
ततोऽधिकं यथावत्स्यात् तादृगेव फलं लभेत् ।
शैलाकारकपर्य्यन्तं रचयेच्छिवलिङ्गकम्[2] ॥२७॥
अविदीर्णमशिथिलमव्यङ्गं[3] नापि कारयेत् ।
यावन्न पूजयेल्लिङ्गं तावच्छून्यं न रचयेत् ॥२८॥
स्वाङ्गतण्डुलदूर्व्वाद्यैरशून्यं लिङ्गमीचयेत् ।
लिङ्गनिर्म्माणकार्य्यार्थं मृदं नास्नात आहरेत्[4] ॥२९॥
उपचारैस्तु तैरेव पूजनीयो महेश्वरः ।
शिवार्थे मृत्तिकादानं खनित्वा मितमाहरेत्[5] ॥४०॥
गङ्गागर्भविदारस्य न दोषस्तत्र कश्चन ।
विल्वपत्रञ्च शम्भोर्हि परमप्रीतिदायकम्[6] ॥४१॥
केवलं गाङ्गतोयं वा शिवप्रीतिकरं परम् ।
गङ्गातटे शम्भुपूजां यश्चिकीर्षति[7] चेतसा ॥४२॥
वक्तुं[8] तस्य फलं विप्र सहस्रास्यो जड़ायते ।
विल्वपत्रं गाङ्गतोयं यः प्रयच्छति शम्भवे ॥४३॥
तयोरन्यतरद्वापि[9] किं न दत्तं शिवाय तत् ।
शिवाय खलु नैवेद्यं लिङ्गोपरि विनिर्द्दिशेत् ॥४४॥

---

१ C ईरितं । २ B ०पर्य्यन्तमर्च्चयेच्छिवलिङ्गकं ।
३ B अव्यक्तं । C न व्यङ्गं । ४ C ०कार्य्यार्थी मृदं नाम्ना तथाहरेत् ।
५ A B मतमाहरेत् । ६ B ०कारकं ।
७ D यच्चिकीर्षति । ८ A बक्तुं । ९ C तयोरन्यतमं वापि ।

षष्ठवक्त्रेण तच्छम्भुरग्निरूपेण तद्दहेत्।
तदेव[1] भस्मसाद्भूतं तन्नाश्नीत कदाचन ॥४५॥
अग्राह्यं शिवनिर्माल्यं पत्रपुष्प[2]फलादिकम्।
गच्छन्नरकमाप्नोति शिवद्वेषकरः परः ॥४६॥
तान्त्रिकेन विधानेन शिवं संपूज्य साधकः।
लिङ्गोपरि न्यनिचिप्तं नैवेद्यं यद्ददाति वै ॥४७॥
तस्य किञ्चिन्तु भुञ्जीत न चेद्देवो न खादति।
सर्व्वन्तद् ब्राह्मणे दद्याद् गृह्णीयात् ब्राह्मणोऽपि तत् ॥४८॥
सिद्धान्नं शम्भवे दत्तमश्नाति पञ्चभिर्मुखैः।
तच्च दद्याद् ब्राह्मणाय गृह्णीयाद् ब्राह्मणोऽपि तत् ॥४९॥
पुष्प[3]चन्दनकादीनि न कदाप्याददेज्जनः।
पुरा ब्रह्मा चतुर्वक्त्रः शिवपूजां समाचरन् ॥५०॥
चकार शिवनैवेद्यं बहुमिष्ट[4]फलान्वितम्।
अद्य मे शम्भुरागत्य स्वयमद्या[5]न्निवेदितम् ॥५१॥
विधाय मानसन्त्वेवमर्च्चयामास शङ्करम्।
तदा कुक्कुररूपेण शम्भुरागत्य तद्द्विज ॥५२॥
खादयामास नैवेद्यं ज्ञातुं ज्ञानन्तु[6] वेधसः।
शिवकर्म्मानभिज्ञः स ब्रह्मा दृष्ट्वा श्वभक्षितम्[7] ॥५३॥
तं श्वानं ताड़यामास हा हेति सम्भ्रमाद्वदन्[8]।

---

१ C तदैव। २ B C D पत्रं पुष्पं। ३ B D पुष्पं।
४ B बहुमिष्टं। ५ D स्वयं दद्यात्। ६ B ज्ञानञ्च।
७ B भक्षितं। ८ B ०ब्रुवन्।

शिवः स्वरूपं जगृहे ब्रह्माणमभ्यभाषत[१] ॥५४॥

शिव उवाच ।

कथं कुक्कुरबुद्ध्या मां विधे ताड़ितवानसि ।
त्वद्वाञ्छापूरणार्थाय नैवेद्यं भोक्तुमागतम् ॥५५॥
तस्मात् कलङ्की त्वं भूया यन्मां सर्व[२]मताड़यः ।

ब्रह्मोवाच ।

अगृहीत्वा स्वकं रूपं यत्त्वमत्र[३] समागतः ।
अकृथास्त्वं परीहासं शठरूपधरस्ततः ॥५६॥
तव नैवेद्यभोजी स्यात् कुक्कुरो नात्र संशयः ।

ऋषिरुवाच ।

एवं शिवोऽभिशप्तोऽगाद् ब्रह्मणा[४] द्विजपुङ्गव ।
स्वनैवेद्याभोजनाय[५] देवादींश्च न्यषेधयत्[६] ॥५७॥
अतो हि शिवनैवेद्यमग्राह्यं द्विजपुङ्गव ।
एवमादिविधानेन पूजयेच्च त्रिलोचनम् ॥५८॥
अष्टमूर्त्तीरथाभ्यर्च्य[७] चमस्वेति विसर्ज्जयेत्[८] ।
शिवलिङ्गेऽपि सर्वेषां देवानां पूजनं भवेत् ॥५९॥
सर्वलोकमये[९] यस्माच्छिवशक्ती विश्वप्रभुः[१०] ।

---

१ C has this additional line.

२ C श्वानं । D शर्व्वे । ३ B यत्र यत्रे ।

४ D भक्षणात् । ५ B स्वनैवेद्यभोजनाय ।

६ C न्यवोधयत् । ७ B अष्टमूर्त्तौ येथाभ्यर्च्चेत् । ८ D विसर्ज्जनं ।

९ B ०लोकमयः । १० B प्रभू ।

वरं प्राणपरित्यागः शिरसो वापि[1] कर्त्तनम् ॥६०॥
न त्वसंपूज्य भुञ्जीत भगवन्तं त्रिलोचनम् ।
प्रत्यहं खलु कुर्व्वीत शिवलिङ्गप्रपूजनम् ॥६१॥
ब्राह्मणः क्षत्रियो वैश्यः शूद्रः स्त्री चान्त्यजोऽपि च[2] ।
पराङ्मुखः शिवार्चायां योऽर्चयेद्देवतागणम् ॥६२॥
विफलं तस्य तत्सर्वं यथौषधममन्त्रितम् ।
पराङ्मुखः शिवार्चायां यो भुङ्क्तेऽन्नजलादिकम् ॥६३॥
अन्नं विष्ठा पयो मूत्रं मुखं तस्य न दृश्यते ।
गुरुः स्वयं शिवः साक्षात् गुरुपत्नी च पार्व्वती ॥६४॥
तौ नापूज्य तु[3] यो भुङ्क्ते मुखं तस्य न दृश्यते ।
शिवः साक्षात्पिता देवः पार्व्वती जननी शिवा ॥६५॥
तौ न पूज्य तु[4] यो भुङ्क्ते मुखं तस्य न दृश्यते ।
शिवं नाभ्यर्च्य यस्यास्ति रुचिर्भोजनकर्म्मणि ॥६६॥
स एव शूकरः श्वा च मनुष्यरूपतां गतः ।
सूतके मृतकेऽशौचे न त्यजेच्छिवपूजनम् ॥६७॥
वर्जयित्वा दशाहन्तु महागुरुनिपातने ।
पूर्वस्यां दिशि वै शम्भोः क्षितिमूर्त्तिर्द्विजर्षभ ॥६८॥
दक्षिणस्यां वह्निमूर्त्तिर्नभोमूर्त्तिस्तु[5] पश्चिमे ।
उत्तरे सोमसूत्रञ्च सोममूर्त्तिः प्रकीर्त्तिता ॥६९॥

---

१ B शिरो वापि । २ C स्त्री शूद्रश्चान्त्यजोऽपि च ।
३ B D तौ नार्चयित्वा । ४ C तौ न सम्पूज्य । ५ B च ।

जलाग्नियजमानार्का अग्निनैऋतकादिषु ।
सर्वो भवो रुद्र उग्रो भीम[1]नामा पशोः पतिः ॥७०॥
महादेवस्तथेशानः पूर्व्वाग्न्यादिषु संज्ञिताः ।
मध्ये शिवश्च संपूज्यो वेद्यां शक्तिश्च पूज्यते ॥७१॥
ततो जप्त्वा नृत्यगीतवाद्यैः स्तुत्वा प्रणम्य च ।
सर्व[2]देव[3]मयं शम्भुं विहरेत्तु यथासुखम् ॥७२॥
अर्द्धचन्द्राकृतिः शम्भुप्रदक्षिणे नतिः[4] स्मृता ।
यत उत्तरतो गत्वा सोमसूत्रं न लङ्घयेत् ॥७३॥
नातः परतरं कर्म्म त्रिषु लोकेषु विद्यते ।
गङ्गायामन्यतो वापि तवोक्तं शिवपूजनम् ॥७४॥
गङ्गातीरे शम्भूपूजाफलं वक्तुं शिवो जड़ः ॥७५॥

इति श्रीबृहद्धर्म्मपुराणे मध्यखण्डे गङ्गाधर्म्मेषु
सप्तपञ्चाशत्तमोऽध्यायः ॥०॥

---

१ B भीमो ।  २ D सर्व्वे ।  ३ B omits देव ।
४ B C ? प्रदक्षिणनतिः ।

# अष्टपञ्चाशत्तमोऽध्यायः ।

ऋषिरुवाच ।

श्राद्धं कुर्य्यात्तु गङ्गायां पार्व्वणेन विधानतः ।
तीर्थश्राद्धं हि[१] तत्प्रोक्तं पितृणां परितोषणम् ॥१॥
यस्तु गङ्गां समासाद्य श्राद्धं सांवत्सरं चरेत् ।
गयाश्राद्धमकृत्वापि पितृणां निरृणस्तु सः ॥२॥
गङ्गायाञ्च गयायाञ्च पिण्डदानं समं मतम् ।
विशेषतः कलियुगे गङ्गापिण्डः प्रशस्यते ॥३॥
अपमृत्युमृताश्चापि गङ्गायां पिण्डदानतः ।
यान्ति दुर्गतिमुत्सार्य्य क्रियार्हाः परमां गतिम् ॥४॥
अमावस्यासु गङ्गायां श्राद्धं तर्पणमेव च ।
कुर्य्यात् सह तिलैर्विप्र तुलसीकुशसंयुतैः ॥५॥
तर्पणे तिलनिषेधस्तु वारे भास्करकाव्ययोः[२] ।
सोऽन्यत्र न तु[३] गङ्गायां जैमिने नात्र संशयः ॥६॥
श्राद्धपूर्व्वदिने यानि वर्जयेत्तानि मे शृणु ।
[४]तैलञ्चैवामिषं मांसं मसूरञ्च द्विभोजनम् ॥७॥
तिक्तद्रव्यं मैथुनञ्च रोषं शोकञ्च[५] पैशुनम् ।

---

१ B omits हि । २ B °वाक्ययोः । ३ B D तु न ।
४ B तैलञ्चामिषमांसं । ५ C रोगशोकच ।

क्रोशोर्द्धगमनञ्चैव[1] कलहं हिंसनन्तथा ॥८॥
रोदनं रक्तपातञ्च शस्त्रास्त्रधारणं तथा ।
परान्नभोजनञ्चैव श्राद्धपूर्वदिने त्यजेत् ॥९॥
नद्यादिपारगमनं व्यायामं क्रयविक्रयौ ।
श्राद्धाहेऽपि परित्यज्यान्येतान्यन्यानि मे शृणु ॥१०॥
अध्यापनञ्चाध्ययनं सायंसन्ध्यां तथैव च ।
धान्यमुद्गमसूरादेराघातञ्च विवर्जयेत् ॥११॥
तन्तुनिर्म्माणमस्वास्थ्यं याचनाञ्च[2] परवेश्मनि ।
स्नानदानाद्यकृत्वा तु[3] यो गङ्गां लङ्घयेज्जनः ॥१२॥
तस्य तद्विफलं कर्म्म पूर्वकर्म्म च नश्यति ।
तस्मात् स्नानादि कृत्वैव गङ्गापारं व्रजेद् गृही ॥१३॥
वृथा न लङ्घयेद्गङ्गां विना कार्य्यं कदाचन ।
गङ्गातटद्वये[4] पुण्ये दृश्यते ब्राह्मणो यदि ॥१४॥
तदा तं प्रणमेद्भक्त्या ब्रह्माणमिव चागतम् ।
गङ्गातटे गवाञ्चैव दर्शनं स्यान्महाफलम् ॥१५॥
शुष्कवस्त्रं[5] पुष्पवनं सुन्दरीं तुलसीतरुम् ।
दृष्ट्वा गङ्गातटे विप्र प्रणमेत् परया[6] मुदा ॥१६॥
हंसकारण्डवक्रौञ्चचक्राह्वसारसानपि ।
राजानं हस्तिनं पद्मं खञ्जनं शुकमेव च[7] ॥१७॥

---

१ B क्रोशार्द्धगमनञ्चैव । २ C D. omit च । ३ B omits तु ।
४ D ०द्वयं । ५ C D शुक्ल० । ६ B परमा । ७ D वा ।

प्रणमेन्मनसा भक्त्या गङ्गाचिह्नं[1] तथैव च ।
शाल्मणस्थापनञ्चैव शिवस्थापनमेव च ॥१८॥
[2]दुर्गाविष्णवालयान् दत्त्वा पुनर्जन्म न विद्यते ।
पाषाणैरिष्टकाभिर्व्वा मृदा वा भक्तिसंयुतः ॥१९॥
शोभयेत्तटमीशायाः स पुनर्जन्मवर्ज्जितः ।
सायं प्रातश्च मध्याह्ने गङ्गायास्तटमार्जनात् ॥२०॥
कोटिजन्मार्जितं पापं तस्य मार्जयते शिवा ।
गङ्गातटं समागत्य प्रसन्नं यस्य नो मनः ॥२१॥
निगृहीतः[3] सर्व्वदेवैः स एव क्रूर उत्तमः ।
गङ्गातटं समासाद्य अश्रुपातान्[4] करोति यः ॥२२॥
तस्याग्निसागरे वासो यावद्ब्रह्मसहस्रकम्[5] ।
गङ्गातरङ्गरङ्गाभं सानन्दं यस्य मानसम् ॥२३॥
तस्य वै पितरो देवाः सदानन्दानुरङ्गिणः[6] ।
गङ्गावासं परित्यज्य योऽन्यत्र वासमिच्छति ॥२४॥
स गङ्गां लभते नैव परित्यक्तश्च गङ्गया ।
कीकटादिषु देशेषु जायते स नराधमः ॥२५॥
म्रियते च पुनस्तत्र विष्ठाशूकरमारितः[7] ।
ततश्चाकाशगो भूत्वा रोदमानो भ्रमत्ययम्[8] ॥२६॥

---

१ D ०चिह्नं ।   २ B दुर्गं० ।   ३ B निर्गृहीतः ।
४ B अश्रुपातम् ।   ५ D marg यावदिन्द्राश्चतुर्दश ।
६ C ०राङ्गिणः ।   ७ B ०शूकरमाहतः ।   D ०शूकरमीरितः ।
८ C भ्रमत्यसौ ।

चित्रीकुर्चीतिशब्देन लोकानुद्वेजयत्यसौ ।
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ॥२७॥
कृत्वा भोगानिमान् भूयो जायते शूकरादिषु ।
पुनः पुंनस्तथावस्थां तैलयन्त्रवृषो यथा ॥२८॥
भुङ्क्ते विप्रगुरुद्वेषब्रह्मद्वेषकरोऽपि च ।
यस्तु त्यक्त्वा सुखस्थानं गङ्गामायाति सन्मतिः ॥२९॥
जीवन्मुक्तः स एवोक्तः किन्तस्य परमा कथा ।
इति ते कथिता विप्र[1] गङ्गाधर्म्मा यथामति ॥३०॥
गङ्गाधर्म्मान् हि सकलान् वक्तुं ब्रह्माप्यपण्डितः ।
विष्णुस्तु मूकतां याति सत्यमेव न संशयः ॥३१॥
शिवो भवति निर्वाक्यो मनुष्यः किं वदिष्यति ।
अत्रेतिहासं शृणु भो जैमिने परमाद्भुतम्[2] ॥३२॥
पुरा ब्रह्माणमृषयः पप्रच्छुः परिहर्षिताः ।
वद ब्रह्मन् महाबाहो गङ्गामाहात्म्यमेव नः ॥३३॥

ब्रह्मोवाच ।

नास्मि[3] वै गङ्गामाहात्म्यस्वरूपवचनक्षमः ।
जानीत शिवविष्णू चेत्तौ गत्वा परिपृच्छत ॥३४॥

ऋषय ऊचुः ।

त्वमेव गत्वा ज्ञात्वेहि त्वत्तः श्रोष्यामहे[4] वयम् ।
शिवविष्णुसभां गन्तुं वयं नैव हि शक्नुमः[5] ॥३५॥

---

१ B विप्रा । २ C च पराद्भुतं । ३ C नास्ति ।
४ B शिष्यामहे । ५ C शक्ता न प्रक्रमः ।

ऋषिरुवाच।

इत्युक्त ऋषिभि[१]र्ब्रह्मा गन्तुं समुपचक्रमे।
कैलासं प्रययौ चादौ तत्रापश्यन्[२] महेश्वरम् ॥३६॥
कोटिचन्द्ररुचिं कान्त्[३] पिहितं व्याघ्रचर्म्म च।
दधानं शिरसा गङ्गां[४] तरङ्गैः सुमनोहराम् ॥३७॥
तज्जातैः परमानन्दैर्महानृत्यरसस्थितम्[५]।
रोमाञ्चिताङ्गञ्च मुहुस्तरङ्गध्वनिकर्णनात् ॥३८॥
पुनः पुनश्च हृष्यन्तं[६] वहिर्ज्ञानविवर्जितम्।
तं गङ्गानन्दिनं दृष्ट्वा विस्मितोऽभूच्चतुर्म्मुखः ॥३९॥
अप्राप्य प्रश्नसमयं वैकुण्ठं प्रययौ विधिः।
तत्र जातो महान् वायुस्तेन विक्षेपितो[७] विधिः ॥४०॥
ब्रह्माण्डान्तरमापन्नो यत्राष्टास्यो विधिः परः।
तं दृष्ट्वाष्टमुखं धाताभ्यभाषत चतुर्म्मुखः[८] ॥४१॥

चतुर्म्मुख उवाच।

कस्त्वं केनाप्यधिकृतः[९] किंनामासि मुखाष्टधृक्।
अहं चतुर्म्मुखो ब्रह्मा प्रणिपत्य नमामि ते ॥४२॥

---

१ D स ऋषिः। २ B तत्र पश्यन्।
३ B कान्तिं, D कोटिचन्द्रमुखं कान्तिं।
४ C दधानं गङ्गां शिरसा। ५ B D महान्त्यैरसंस्थितं। C महा-न्त्यरसङ्कुतं। ६ D हृष्यन्तं। ७ B C D विक्षिपितो।
८ B बभाषे तच्चतुर्म्मुखः। ९ B केनाप्यधिकृतं।

अष्टमुख उवाच ।

पुराहमुन्दुरः कश्चिन्मर्त्यलोकगृहस्थितः[1] ।
मार्जारस्य भयाद्गङ्गाजले प्राणानहं जहौ ॥ ४३ ॥
स एवाहमष्टमुखो ब्रह्माण्डेऽस्मिन्नधिष्ठितः ।
त्वञ्च गङ्गार्थजिज्ञासु र्वैकुण्ठं याहि सत्वरम् ॥ ४४ ॥

चतुर्मुख उवाच ।

नाहं जाने क्व वैकुण्ठो वायुविक्षेप[2]आगतः ।
मह्यं दर्शय पन्थानं येन वैकुण्ठमाप्नुयाम् ॥ ४५ ॥

शुक उवाच ।

इत्युक्तोऽष्टमुखो ब्रह्मा समभ्यर्च्य चतुर्मुखम् ।
पन्थानं दर्शयामास तेन सोऽपि ययौ विधिः ॥ ४६ ॥
वैकुण्ठं पुनरागत्य पुनः क्षिप्तः स वायुना ।
ब्रह्माण्डान्तरमापन्नो यत्रास्य षोड़शो विधिः ॥ ४७ ॥
सोऽपि विस्मितचित्तेन पृष्टः षोड़शवक्त्रकः[3] ।
ऊचे निजसमाचारं शृणुत द्विजपुङ्गव ॥ ४८ ॥

षोड़शमुख उवाच ।

अहमासं पुरा कश्चित् कुक्कुरो नरमांसभुक् ।
गङ्गायां कण्ठलग्नास्थिर्मृतः[4] सोऽहं[5] चतुर्मुख ॥ ४९ ॥

शुक उवाच ।

श्रुत्वैतदद्भुतं भूयो ब्रह्मा देवश्चतुर्मुखः ।

---

१ C ०लोके गृहे । २ D ०निक्षेपः । ३ D ०वक्त्रतः ।
४ B ० ०लग्नास्थिर्मृतः । ५ D सोऽयं ।

अध्वना तेन दिष्टेन[1] वैकुण्ठं पुनरागतः ॥५०॥
आगत्य ददृशे तत्र चतुरः सूर्य्यवर्च्चसः।
विष्णुरूपधराः श्यामाः पीतवस्त्राश्चतुर्भुजाः ॥५१॥

ब्रह्मोवाच।

के यूयं विष्णवो ह्येते विष्णुरेकः श्रुतो मया।
विष्णुरन्यो वर्त्तते वा वैकुण्ठेऽत्र हरेः पुरे ॥५२॥

वैष्णवा ऊचुः।

अन्योऽस्ति विष्णुरनघो[2] वयं वै विष्णुकिङ्कराः।
अस्माकं पूर्व्ववृत्तान्तं शृणु ब्रह्मंश्चतुर्मुख ॥५३॥
गङ्गाजले शवे[3] केचित् कृमयो बहवः स्थिताः।
चत्वारस्तत्र च मृताः स्रोतोवेगेन ते वयम् ॥५४॥

ऋषिरुवाच।

श्रुत्वैवं[4] वचनं तेषां ब्रह्मासौ चतुराननः।
तस्मान्निवर्त्ते[5] देवीमनन्तामव[6]बुद्धवान्।
आगत्य ऋषिमण्डल्यां वृत्तान्तं सर्व्वमब्रवीत् ॥५५॥

ब्रह्मोवाच।

दृष्टौ मया तु ब्रह्माणौ अष्टास्यषोड़शास्यकौ।
उन्दुरुकुक्कुरौ गङ्गाजले त्यक्ततनू उभौ[7] ॥५६॥
द्वौ ब्रह्माण्डपती द्वौ च दिव्यरूपौ मुनीश्वराः।
ततश्च कृमयो दृष्टाः पूर्व्वं गङ्गाजले मृताः ॥५७॥

---

१ B दृष्टेन। २ C विष्णुरनाद्यो। ३ B वसे। ४ D श्रुत्वैव। ५ D निवृत्तो। ६ B अनन्तां स च। ७ C त्यक्त्वा तनुं जहौ।

वैकुण्ठे नीरदश्यामाः सुन्दरा वनमालिनः ।
शङ्खचक्रगदापद्मधारिणः पीतवाससः ॥५८॥
चत्वारश्चारुरूपास्ते विष्णुरूपधराः पराः ।
तान् ज्ञात्वा च[१] निवृत्तोऽहं गङ्गानन्तगुणेत्यपि ॥५९॥
ज्ञातं यां शिरसा धृत्वा शिवोऽन्यज्ज्ञानवर्जितः ।
तस्या अहन्तु गङ्गाया गुणान् ज्ञातुमशेषतः ॥६०॥
मौर्ख्याद्भ्रान्तो बहून् देशान् प्राप्तश्च तादृशं[२] फलम् ।
अहञ्च तस्या गङ्गाया मशकादिषु कोऽप्यहम् ॥६१॥
केऽन्ये वराका इन्द्राद्या मानुषा वा द्विजोत्तमाः ।
तस्माद्गङ्गैव परमा यया ब्रह्मादि सृज्यते[३] ॥६२॥

शुक उवाच ।

इत्युक्ता मुनयः सर्व्वे गङ्गानामपरायणाः ।
गायन्तश्च रटन्तश्च रटन्वन्तश्चापि बभ्रमुः ॥६३॥
इति ते कथितं किञ्चिद्गङ्गाया मतिरूपतः ।
किमन्यत् कथयामीह वद शुश्रूषत[४]स्तव ॥६४॥

इति श्रीबृहद्धर्मपुराणे मध्यखण्डे गङ्गाधर्म्मेषु
अष्टपञ्चाशत्तमोऽध्यायः ॥०॥

---

१ A कृत्वा व, B तानाज्ञात्वा च । २ D सदृशं ।
३ B सैया ब्रह्मादि सृज्यते न सा, C रह्यते । ४ C D शुश्रुषवः ।

# ऊनसप्ततितमोऽध्यायः ।

जैमिनिरुवाच ।

पूर्वमुक्तास्त्वया ये तु ब्रह्मन्मन्वन्तरा इति ।
तेषां नामानि मे ब्रूहि राजवंशांश्च सर्व्वशः ॥१॥

ऋषिरुवाच ।

देवानां स्यादहोरात्रो नरवर्षेण कथ्यते ।
शतत्रयत्रिषष्ठ्यब्दैर्दिव्यो वत्सर उच्यते ॥२॥
तैश्च द्वादशसाहस्रवत्सरैश्च चतुर्युगम् ।
तत् सहस्रं ब्रह्मदिनं ततो रात्रिस्तथा मता[१] ॥३॥
मन्वन्तरन्तु दिव्यानां युगानामेकसप्ततिः[२] ।
इन्द्रस्यैकस्य कालोऽयं स्वर्गराज्याधिकारिणः ॥४॥
इन्द्राश्चतुर्दश ह्येवं म्रियन्ते ब्रह्मणो दिने ।
तेषां नामानि ते ब्रह्मन् श्रुतं व्यासमुखान्मया ॥५॥
आद्यः स्वायम्भुवः प्रोक्तो मनुर्ब्रह्मशरीरभूः ।
द्वितीयस्तु मनुः प्रोक्तो नाम्ना स्वारोचिषो मुने ॥६॥
उत्तमाख्यस्तृतीयस्तु चतुर्थस्तामसः स्मृतः ।
पञ्चमो रैवतो नाम षष्ठश्चाक्षुष उच्यते ॥७॥

---

१ B मुने । C मतं ।

२ C युगान्यष्टाविंशतिस्तु सन्ध्यां सन्ध्यां स्वरूपतः ।

सप्तमः श्राद्धदेवाख्यः सावर्णिरष्टमः स्मृतः।
नवमो ब्रह्मसावर्णिर्विष्णुसावर्णिरप्यतः॥८॥
एकादशस्तथा प्रोक्तो रुद्रसावर्णिरीश्वरः[१]।
[२][द्वादशो धर्मसावर्णिर्दक्षसावर्णिरप्यतः]॥९॥
इन्द्रसावर्णिनामा च भविष्यति चतुर्दश।
मन्वन्तराः सप्त विप्र व्यतीता भाविनोऽपरे॥१०॥
मन्वन्तरे स्यु[३]र्विप्रेन्द्र युगानि चैक[४]सप्ततिः।
सत्यं त्रेता द्वापरश्च कलिरित्येवमाख्यया॥११॥
युगस्य भागास्चत्वारो मानं तस्य च मे शृणु।
दिव्याब्दानां सहस्रेण कलिरेष निरूप्यते॥१२॥
सन्ध्या तावच्छती तस्य सन्ध्यांशश्च[५] तथोदितः।
अस्य[६] द्विगुणभावेन द्वापराख्य उदाहृतः॥१३॥
अस्य[७] द्विगुणभावेन कलिमानेन चैव हि।
त्रेताकालः समाख्यातः शेषः सत्ययुगं स्मृतम्[८]॥१४॥
प्रतिमन्वन्तरे देवो ह्यवतारी जनार्दनः।
धर्म्मं पालयते विष्णुर्दैत्यहा देवपालकः॥१५॥
राजवंशा निरूप्यन्ते शुचयः पुण्यकीर्त्तनाः।
वंशौ द्वावेव विख्यातौ सूर्य्याचन्द्रमसोर्द्विज॥१६॥

---

१ B अप्यतः। २ B omits the portion bracketted.
३ B मन्वन्तरेषु। ४ D एक०। ५ C सन्ध्याङ्गश्च।
६ D तस्य। ७ B D तस्य। ८ C मतम्।

स्वायम्भुवस्तथा वंशो विख्यातः पुण्यकर्म्मणा।
तस्मादौ कथ्यते वंशः सूर्य्यस्य[१] द्विजपुङ्गव ॥१७॥
नाभिपद्मोद्भवो ब्रह्मा हरेरद्भुतकर्म्मणः[२]।
ततो मरीचिस्तस्यापि कश्यपः समजायत ॥१८॥
तस्य पुत्रः स्वयं सूर्य्यो देवानां स सहोदरः।
श्राद्धदेवस्तस्य पुत्रस्तस्येक्ष्वाकुनृगादयः[३] ॥१९॥
इक्ष्वाकुतनयो जज्ञे शशाद इति विश्रुतः।
युगन्धरस्तस्य पुत्रो ह्यनेनास्तस्य वै सुतः ॥२०॥
तस्य पुत्रो विश्वगन्धिर्दृढाश्वस्तस्य चात्मजः।
तस्य पुत्रोऽम्बरीषोऽभूदम्बरीषस्य भूवलः[४] ॥२१॥
ककुत्स्थस्तस्य पुत्रोऽभूत्तत्सुतः कपिलाश्वकः।
देवमीढस्तस्य सुतः काम्पिल्ल[५]स्तत्सुतः स्मृतः ॥२२॥
तस्य पुत्रोऽनरण्योऽभूत्तस्य पुत्रो महावलः।
युवनाश्वस्तस्य पुत्रो मान्धाता तनयस्ततः ॥२३॥
मान्धातुरम्बरीषोऽभूत्तस्य पुत्रो हि धुन्धुहा।
युवनाश्वस्तस्य पुत्रो निषधस्तस्य चात्मजः ॥२४॥
निषधाद्वाङ्कको जज्ञे वाङ्ककात् सगरोऽभवत्।
ततोऽसमञ्जास्तत्पुत्रो ह्यंशुमानित्यजायत ॥२५॥
तस्य पुत्रो दिलीपोऽभूत्ततो जातो भगीरथः।

---

१ A B D सूर्य्यवंशस्य। २ C ०कर्म्मणा। ३ C ०न्टगादयः।
४ D भूवनः। ५ B C D काम्पिल्यः।

भगीरथभवो[1] भीमः सत्योऽभूत्तस्य चात्मजः ॥२६॥
ततो दिलीपः पुत्रोऽभूद्रघुस्तस्याभवत्सुतः ।
तस्याजः पुत्र एवास्य राजा दशरथोऽभवत् ॥२७॥
तस्य पुत्रोऽभवच्छ्रीमान् भगवान् विष्णुरव्ययः ।
रामो भरतशत्रुघ्नौ लक्ष्मणश्च महाबलः ॥२८॥
यस्य कीर्त्तिः पुण्यतरा रावणादिविनाशनम् ।
ज्येष्ठं ज्येष्ठमिमे प्रोक्ताः सङ्क्षेपेण द्विजोत्तम ॥२९॥
चन्द्रवंशमथो वक्ष्ये शृण्वनन्यमना द्विज ।
अत्रिर्वै ब्रह्मणः पुत्रस्तस्य चन्द्रस्ततो[2] बुधः ॥३०॥
श्राद्धदेवस्य दौहित्रस्ततोजातः पुरूरवाः[3] ।
तस्यायुस्तनयो जातो रन्तिनावस्ततोऽभवत् ॥३१॥
रन्तिनावस्य वियतिः क्षतिस्तस्याभवत्सुतः ।
ततोऽभून्नहुषो राजा ययाति स्तस्य चात्मजः ॥३२॥
ययातेः पञ्च वै पुत्रा यदुपुरुमुखा द्विज ।
पुरुपुत्रो जनमेजयः प्रचिन्वां[4] स्तस्य चात्मजः ॥३३॥
मनुस्यु[5] स्तस्य तस्माच्च सुतश्चारुपदोऽभवत् ।
सुद्यु[6] स्तस्य सुतश्चाभून्नाम्ना बहुगवस्ततः ॥३४॥
ययाति स्तस्याहं[7]याती रौद्राश्वस्य पितोऽभवत् ।

---

१ B भगीरथाद्भवो ।  २ B चन्द्रसुतो ।  ३ C पुरोवराः ॥
४ C जन्मेजाख्यः प्रचित्वान् ।  ५ C मनन्युः B मनस्युः ।
६ C सुद्योतस्य सुतस्याभूत् ।  ७ C संयाति तस्याहम् ।

ऋतेयो रन्तिनारोभूद्रौद्राश्व[1]तनयश्च ह ॥२५॥
तस्य पुत्रस्तु सुमतिस्तस्य मेधातिथिः सुतः।
तस्य दुष्मन्तनामाभूद्भरतस्य पिता द्विज ॥२६॥
तत्पुत्रो[2] रन्तिदेवोऽभूदजमीढस्ततो भवत्।
तस्य शान्तिस्ततोऽभूच्च दिवोदासो महायशाः ॥२७॥
शतानन्दस्तस्य पुत्रो मित्रयुश्चा[3]परस्तथा।
द्रुपदस्तस्य पुत्रोऽभूद्धृष्टद्युम्नस्ततोऽभवत् ॥२८॥
तस्य ऋक्षः सुतस्तस्य नाम्ना सम्बरणः सुतः।
तस्माज्जातः कुरुर्नाम प्रतीपस्तस्य चात्मजः ॥२९॥
ततो[4] विचित्रवीर्य्याख्यो राजा पाण्डुस्ततोऽभवत्।
तस्याभवन् पञ्च पुत्रा धर्मवाय्विन्द्रसम्भवाः ॥४०॥
कुन्त्यां माद्र्याञ्च नासत्यदस्रजौ द्वौ तथासुतौ।
ते पुण्यकीर्त्तनाः सर्व्वे तेषां नामानि वर्णये ॥४१॥
युधिष्ठिरश्च भीमश्च अर्जुनो नर एव यः।
नकुलः सहदेवश्च तत्रार्जुनसुतोऽभवत् ॥४२॥
अभिमन्युस्ततो राजा परीक्षिदितिनामकः।
तस्यात्मजोऽभवन्नाम्ना जनमेजय इत्युत[5] ॥४३॥
ययातेर्ज्येष्ठपुत्रस्य यदोर्वंशे हरिः स्वयम्।

---

१ C वै रौद्राश्व। २ D तस्य पुत्रो रन्तिदेवः।
३ B D C मित्रयुस्त्वपरः।
४ C adds बाह्लीकस्तस्य पुत्रोऽभूत् शान्तनुस्तस्य चात्मजः।
५ C ह्यग्र्यः परीक्षितः पुत्रो नाम्नाऽभूज्जनमेजयः।

१[यदोः पुत्रो नलो नाम कृतवीर्य्यस्ततोऽभवत् ॥ ४४॥
तस्य पुत्रोऽर्ज्जुनोऽन्योऽयं राजा बाहुसहस्रभृत् ।
यस्य२ संस्मरणादेव नष्टं द्रव्यं प्रलभ्यते ॥ ४५॥
लब्ध्वा द्रव्यं प्रीतयेऽस्य विप्राय लवणं स्पृशेत् ।
तस्य पुत्रो ३विष्टिरभूच्छशविन्दुपिता द्विज ॥ ४६॥
शशविन्दो र्जामघस्तु वभ्रुस्तस्य सुतो महान् ।]
यदोः४ पुत्रोऽभवद्भोजः सुमित्रस्तस्य चात्मजः ॥ ४७॥
शिनिस्तस्य सुतस्तस्मान्निम्ननामा सुतोऽभवत् ।
सत्राजिच्च प्रसेनश्च तस्य पुत्रावुभौ मतौ ॥ ४८॥
तस्य वंशेऽभवच्छूरस्ततोऽभूद्वसुदेवकः ।
तस्य पुत्रोऽभवत्कृष्णो द्वापरान्ते द्विजोत्तम ॥ ४९॥
अयमुक्तश्चन्द्रवंशः पश्चाद्वक्ष्यामि मानवम् ।
एवं ते कथिता वंशाः किं भूयः श्रोतुमिच्छसि ॥ ५०॥

इति श्रीबृहद्धर्म्मपुराणे मध्यखण्डे मन्वन्तरवंश-
कथनं नामोनषष्टितमोऽध्यायः ॥०॥

---

१ A omits the portion bracketted.

२ D तस्य । ३ D वृष्टिः । ४ B C D तस्य ।

## षष्टितमोऽध्यायः ।

जैमिनिरुवाच ।

ब्रह्मन् जगदिदं सर्व्वं ब्रह्मवंशैः समन्ततः ।
विष्णुवंशैश्च विततं[1] शिववंशः प्रकथ्यताम् ॥१॥

ऋषिरुवाच ।

शिवः पुमान् पार्व्वती च स्त्री सृष्टिकारकाविमौ ।
शिवात्मकाश्च पुरुषाः स्त्रियः सर्व्वास्तु[2] पार्व्वती ॥२॥
शिवः पुंलिङ्गरूपस्तु देवी स्त्रीलिङ्गरूपिणी ।
शिवदेवी लिङ्गरूपं जगत् स्थावरजङ्गमम् ॥३॥
तस्मादिदं जगत्सर्व्वं शिववंश; शिवात्मकम् ।
न पृथक् शिववंशोऽस्ति यं त्वं पृच्छसि जैमिने ॥४॥
शिवशक्तिपरित्यक्तं यत्तत्सन्नेति कथ्यते ।
शिवशक्तियुतं सर्वं सत्त्वेन परिगण्यते ॥५॥
शिवशक्तियुतो विष्णुः शिवशक्तियुतो विधिः ।
शिवशक्तियुता देवाः शिवशक्तिमयं जगत् ॥६॥
पुरा पप्रच्छ गिरिजा शङ्करं लोकशङ्करम् ।
अपत्यमिच्छती देवी सापत्ये निखिले स्थिता ॥७॥

---

१ D चरितं ।     २ D सर्व्वाश्च ।

निर्विघ्नस्य क्रिया नास्ति तस्मादर्थान्वितो भव ।
अद्यैव मयि सङ्गम्य औरसं जनयात्मजम् ॥८॥
ऋषिरुवाच ।
एवमुक्तो गिरिजया शङ्करो लोकशङ्करः ।
जगाद मधुरं वाक्यं शैलराजतनूभवाम्[१] ॥९॥
शङ्कर उवाच ।
नाहं गृहस्थो गिरिजे न मे पुत्रे[२] प्रयोजनम् ।
देवानान्तु कुचक्रेण त्वं मे भार्य्योपपादिता ॥१०॥
भार्य्यैव परमो बन्धः[३] पुरुषस्य विरागिणः ।
भद्रे भवेदपत्यं वै पाशशङ्कुर्निरूप्यते ॥११॥
अस्त्येव गृहिणां कार्य्यं पुत्रेण च धनेन च ।
पुत्रप्रयोजना भार्य्या पुत्राः पिण्डप्रयोजनाः ॥१२॥
न मेऽस्ति मरणं देवि न मे पुत्रे प्रयोजनम् ।
व्याधिर्न विद्यते यर्हि किं तर्हि कार्य्यमौषधैः ॥१३॥
त्वमहञ्च स्त्रीपुमांश्च स्त्रीषु पुंसु सदारतौ ।
आनन्दयावहे देवि हेतू[४] चापत्यसम्भवे ॥१४॥
अनपत्यौ सदैवावां आत्मारामौ रमावहे ।
पार्व्वत्युवाच ।
देवदेवेश भगवन् नीलकण्ठ त्रिलोचन ।
यदुक्तं सत्यमेवैतत्तथापीच्छाम्यपत्यकम् ॥१५॥

---

१ B ०तनूद्भवां । २ B पुत्रो । ३ C D ०बन्धुः । ४ B हेतु ।

अपत्यं जनयित्वा त्वं योगं कुरु महेश्वर।
पालयिष्याम्यहं पुत्रं त्वञ्च योगी यथातथम् ॥१६॥
अतीव मे स्पृहा जाता पुत्रस्य मुखचुम्बने।
त्वया कृताहञ्चेद्भार्य्या तदपत्यं[1] च भावय ॥१७॥
वरं विवाहविमुखः स ते पुत्रो भविष्यति।
येन त्वं पुत्रपौत्रादिर्वंशवान्[2] भविष्यसि ॥१८॥
ऋषिरुवाच।
इत्युक्तो भगवान् क्रुद्धो ययावुत्थाय चासनात्[3]।
देवी च विमना[4] भूत्वा दुःखं दध्यौ धिया चिरम् ॥१९॥
जया च विजया चापि सख्यौ तस्याः पुरः स्थिते।
शिवस्य रोषभङ्गाय गत्वा तञ्चानिनीयतुः[5] ॥२०॥
देवीं विमनसं दृष्ट्वा शङ्करः पुनरब्रवीत्।
शङ्कर उवाच।
कथं त्वं विमना देवि पुत्राभावेन सुन्दरि।
यदि वाञ्छसि पुत्रस्य वदनं परिचुम्बितुम्[6] ॥२१॥
पुत्रन्ते कल्पयिष्यामि तं चुम्ब यदि ते स्पृहा।
इत्युक्त्वा गिरिनन्दिन्या आकृष्य वसनं शिवः ॥२२॥
वसनेनैव तेनैष पुत्रं निर्म्माय शङ्करः।
गृह्यतां गिरिजे पुत्रश्चुम्बताञ्च निजेच्छया ॥२३॥

---

१ B D तदपत्यञ्च। २ C भावयम्। ३ B बुद्धाय चानलात्।
४ D॰विमुखं। ५ B D निनायतुः। ६ B D ॰चुम्बितं।

पार्व्वत्युवाच ।

एतद्वस्त्रं कथं पुत्रकार्य्यमत्र भवेन्मम ।
मदीयं वसनञ्चेदं रक्तवर्णं महेश्वर ॥२४॥
त्यज्यताञ्च परीहासो नाहं पशुमतिः शिव ।
वस्त्रेण मे कथं पुत्रलाभानन्दो भविष्यति ॥२५॥
इत्युक्त्वा गिरिजा देवी तद्वस्त्रं पुत्रवत्कृतम् ।
क्रोड़े चकार ध्यायन्ती परीहासवचः प्रभोः ॥२६॥
पुत्राकारञ्च तद्वस्त्रं देव्याः क्रोड़गतं द्विज ।
जीवं प्राप्या[1]पतत् क्रोड़ात् पस्पन्द च पुनः पुनः ॥२७॥
तं दृष्ट्वा स्पन्दमानं वै जीवजीवेति पार्वती ।
आकृष्य पाणिपद्माभ्यां शिवस्याग्रेऽभ्यभाषत ॥२८॥
तदा स जीवितो बालः प्राणान्[2] प्राप्य च तत्क्षणात् ।
पार्वतीं हर्षयामास मांमैत्यव्यक्तरोदनः ॥२९॥
तं[3] प्राप्य बालकं देवी क्रोड़े कृत्वा[4] च वत्सला ।
स्तनौ चापाययद्दुग्धं स्तनाभ्याञ्च प्रसुस्रुवे ॥३०॥
बालश्चापि पयः पीत्वा स्मितस्फुर्जन्मुखाम्बुजः ।
मातुर्वदनमुद्वीक्ष्य मात्रा च परिचुम्बितः ॥३१॥
मुहूर्त्तं बालमालिङ्ग्य सुन्दरं तञ्च बालकम् ।
ददौ पत्ये महेशाय प्रभो पुत्रं गृहाण मे ॥३२॥
त्वया दत्तस्त्वयं पुत्रो दयार्द्रहृदयेन ह ।

---

१ B प्राप्य तत् D जीवं प्राप च । २ C प्राणं ।
३ B omits तं । ४ C कृत्वाचरत् सदा ।

पुत्रलाभसुखं कीदृक् त्वञ्च जानीहि शङ्कर ॥२३॥
तच्छ्रुत्वा शङ्करो देव्या वचनं द्विजपुङ्गव ।
उवाच प्रहसन् किञ्चित् प्रेयसीं गिरिजां प्रति ॥२४॥

शङ्कर उवाच ।

परीक्षार्थेन ते देवि दत्तं वस्त्रकृतं सुतम्[१] ।
त्वद्भाग्यात् पुत्र एवासौ जातः किमिदमद्भुतम् ॥२५॥
देहि मे दृश्यते किन्नु सत्यं पुत्रत्वमागतम् ।
वस्त्रेण निर्म्मितो देहो जीवं कस्मादुपागमत् ॥२६॥
इत्युक्ता पुत्रमादाय पाणिभ्याञ्च निधाय ह[२] ।
ददर्श महता शम्भुर्यत्नेन निपुणेन च[३] ॥२७॥
सर्व्वाण्यङ्गानि गिरिशो दृष्ट्वा निपुणया दृशा[४] ।
उवाच पार्वतीं देवीं जन्मदोषमनुस्मरन् ॥२८॥

शङ्कर उवाच ।

पुत्रस्तवायमुत्पन्न आत्मशयहरिष्टतः ।
अतएव बहून् कालान्न जीविष्यति ते सुतः ॥२९॥
अल्पायुषो हि पुत्रस्य स्वल्पकाले मृतिः शुभा[५] ।
उपार्जितगुणो भूत्वा मृतस्तापप्रदः परः ॥४०॥
एवं तस्य प्रवदतः शम्भोः शिशुकरस्य च ।

१ B omits सुतं । २ B हि । ३ C विपुलेन च ।
४ A D दृष्ट्वा निपुणया पृथक्, C दृष्ट्वा निपुणया पृथक् । ५ D शुभे ।

पाणेर्वालशिरः स्रस्तमुत्तराग्रं शिरः स्थितम्[1] ॥४१॥
भूमौ च पतिते शीर्षे वालकस्य प्रभोः करात् ।
जग्राह पार्व्वती वालं छिन्नमस्तं[2] शुचाकुला ॥४२॥
रुरोद बहुधा देवी वत्स वत्सेति भूरिशः ।
शिवस्य विस्मयं प्राप्य हत्वा पुत्रशिरः करे ॥४३॥
उवाच पार्व्वतीं देवीं वाचा मधुरया तदा ।

शङ्कर उवाच ।

मारोदीः पार्व्वति शुभे प्राप्तपुत्रशुचाप्यसि ।
पुत्रशोकात्परं नास्ति आत्मशोषणमात्मना ॥४४॥
तस्मात्त्यज पुत्रशोकं पुत्रं ते जीवयाम्यहम् ।
एतदेव शिरो देवि[3] स्कन्धेऽस्मिन्ननु योजय ॥४५॥

ऋषिरुवाच ।

इत्युक्त्वा पार्व्वती देवी योजयामास तच्छिरः ।
[न च तत्राभवद्युक्तं चिन्तयामास तच्छिवः][4] ॥४६॥
एतस्मिन्नेव काले तु खे वागाहाशरीरिणी ।
शम्भो तवास्य वालस्य रिष्ट[5] दृष्टं शिरोऽभवत् ॥४७॥
अतो नैतेन शिरसा जीवेत तव वालकः ।
अन्यस्य शिर आनीय स्कन्धे योजय जीवय ॥४८॥
पाणौ तवोत्तरशिरा वाल एष स्थितो यतः ।

---

१ C उत्तराग्रशिरः स्थितं । २ B ०मुण्डं । ३ C वास्य ।
४ B omits the portion bracketted. ५ B रिष्टं ।

अत उत्तरशीर्षस्य शीर्षं नीत्वाच योजय ॥४९॥
इत्याकाशवचः श्रुत्वा देवीमाश्वास्य शङ्करः।
आहूय नन्दिनं सच प्रेषयामास कर्म्मणि ॥५०॥
नन्दी तु चिजगद्भ्रान्त्वा गत्वा चाप्यमरावतीम्।
ददर्शोत्तरशीर्षाणमिन्द्रस्यैरावतं गजम् ॥५१॥
तं दृष्ट्वैरावतं[1] नन्दी उदक्शीर्षं महाबलः।
छेत्तुं प्रचक्रमे तस्य शयानस्योत्तरस्थितम् ॥५२॥
स चुक्रोश वृंहितैर्तेन शक्राद्यास्तेन चागमन्[2]।

शक्र उवाच।

को भवानद्भुताकारो गजं हन्तुं समागतः।
केन वा[3] प्रेषितोऽसि त्वं खड्गपाणिः कथं भवान् ॥५३॥

नन्द्युवाच।

शिवदासोऽस्म्यहं नन्दी समायातः शिवाज्ञया।
ऐरावतशिरो नीत्वा दास्याम्येव हि शम्भवे ॥५४॥
बालस्योत्तरशीर्षस्य शिरश्च शिवपाणितः।
रिष्टिकालोद्भवं स्रस्तं तेनाकाशवचोवशात् ॥५५॥
यः शेत उत्तरशिरास्तस्य शीर्षनियोजनात्।
शीर्षवन्तं करिष्यामि जीवितञ्च शिवात्मजम् ॥५६॥
अतस्ते गजराजस्य शीर्षं च्छेत्स्याम्यसंशयम्।

---

१ B तद्दृष्ट्वैरावतम्। २ D भीतेन शक्राद्यास्ते समागमन्।
३ B omits वा।

ऐरावतापि संत्यज्य अत प्राणपरीप्सया ।
शिवपुत्रप्राणदानात्तव नैरावतो वरः ॥५७॥

ऋषिरुवाच ।

श्रुत्वैवं नन्दिवचनं महेन्द्रो रुषितोऽभवत् ।
देवानाहूय सकलान् नन्दिमत्राभ्यभाषत ॥५८॥

इन्द्र उवाच ।

शम्भोः काननवासस्य किङ्करेण त्वया कथं ।
देवेन्द्रे जीवति मयि किं बलाच्छेत्स्यसे गजम् ॥५९॥
इत्युक्त्वा शूलमुद्यम्य शक्रो नन्दिवधेच्छया ।
दुद्राव नन्दी हुङ्काराच्छूलं भस्म चकार ह ॥६०॥
पुनर्गदां स जग्राह चिक्षेप च बलादिव ।
नन्दी ताञ्च गदां वामे पाणौ जग्राह लीलया ॥६१॥
स्वां गदां[1] नीयतामिन्द्रेत्युक्त्वा तस्मै व्यसर्जयत् ।
इन्द्रस्य वचसि गदा सा पपात रुजाकरी ॥६२॥
इन्द्रस्तु व्यथितः कञ्चिच्छूलं जग्राह चापरम् ।
चिक्षेप नन्दिने नन्दी तत् खड्गेन द्विधाकरोत् ॥६३॥
पुनश्च वज्रमुद्यम्य इन्द्रो दुद्राव वायुवत् ।
महाघोरतरो नन्दी बभूवातिभयङ्करः ॥६४॥
एतस्मिन्नेव काले तु शक्रहस्तिपको बली ।
इन्द्राय योजयामास मत्तमैरावतं गजम् ॥६५॥

---

१ C स्वां गदां D सा गदा ।

इन्द्रो गजसमारूढो वज्रहस्तो महाबलः।
मरुद्गणसहायः सन् युयुधे नन्दिना सह ॥६६॥
सर्व्वे देवगणास्तत्र मिलिताश्चापपाणयः।
ववृषुः शरवर्षेण नन्दिनं घोररूपिणम् ॥६७॥
वर्षाकाले महाघोरे घना इव महा[1]गिरिम्।
तेषां स[2] शरवर्षाणि नन्दी घोरमहातनुः ॥६८॥
पाषाणकठिनाकारः सेहे चाद्भुतदर्शनः[3]।
वामपाणिपरीसारैः[4] खड्गेन सुशितेन च ॥६९॥
सहुङ्कारैश्च निःश्वासैः शरवर्षाण्यवारयत्।
मोहयन् घोरया तन्वा देवानां पश्यतामपि ॥७०॥
[5][ऐरावतशिरश्छित्वा ययौ नीत्वा विहायसा।]
ऐरावतश्छिन्नशिराः पपात नन्दिना हतः ॥७१॥
देवास्तदद्भुता[6] मुग्धा हाहेत्यूचुर्न चाचलन्।
शिवश्च तत्समाकर्ण्य नन्दिनः सत्पराक्रमम् ॥७२॥
आलिङ्ग्य नन्दिनं प्रीत्या स्कन्धे गजशिरोऽर्पयत्[7]।
शिरोयोजनमात्रेण वालोऽभूदतिसुन्दरः ॥७३॥
खर्व्वस्थूलतरो देवो गजेन्द्रवदनाम्बुजः।
जवाकुसुमसङ्काशो मृगाङ्कधवलाननः ॥७४॥
चतुर्वाहुः स्रवद्दानगन्धलुब्धालिशोभितः।

---

१ B बला। २ C च। ३ D °कर्म्मणः।
४ C परीसारे D परिहासैः। ५ C omits the portion bracketted. ६ C तदाद्भुतात्। ७ D समर्पयत्।

रेजे शिवसमीपस्थो महाद्भुतविलोचनः[1] ॥७५॥
सर्व्वे देवास्तदागत्य ददृशुः शिवनन्दनम् ।
शम्भोः क्रोड़गतं बालं कुञ्जरेन्द्रशुभाननम् ॥७६॥
तत्राभिषिषिचुस्तञ्च ब्रह्माद्या देवतागणाः[2] ।
नामानि च ददौ ब्रह्मा लम्बोदरमिति ब्रुवन् ॥७७॥
रराजेष सर्व्वदेवगणमध्ये महाद्भुतः ।
तेनायं देवराजोऽस्तु सर्वदेवाग्रपूजनः ॥७८॥
सरस्वती ददौ तस्मै लेखनीं वर्णलोचनाम्[3] ।
जपमालां ददौ ब्रह्मा इन्द्रो गजरदं ददौ ॥७९॥
पद्मं पद्मावती चादाद्व्याघ्रचर्म्म ददौ शिवः ।
बृहस्पतिर्यज्ञसूत्रं पृथ्वी मूषिकवाहनम् ॥८०॥
तुष्टुवुर्मुनयः सर्वे रक्तवर्णं शिवात्मजम् ।

ब्रह्मोवाच ।

शम्भो तवायं[4] तनयस्त्वमेवायं न संशयः ।
सर्वदेवाग्रपूज्योऽयं शेषे त्वञ्च महेश्वरः ॥८१॥
आदावन्ते भवानेव पूज्यो देवो महेश्वरः ।
सर्वदेवगणस्यायमधिपोऽभून्महाभुजः ॥८२॥
भवतोऽपि गणा ये तु तेषामप्यधिपोऽभवत्[5] ।

---

१ B ०त्रिलोचनः । २ C गताः ।
३ C लेखनीवर्णरोचनां D ०वर्णरोचनां । ४ B शम्भोस्तवाऽयं ।
५ C अप्यधिकोऽभवत् ।

तस्माद्गणाधिपो[1]ऽस्त्वेष गजास्यत्वाद्गजाननः ॥८३॥
इन्द्रं जित्वा गजं हत्वा भग्नदन्तं शिरो यतः ।
नन्दी चाद्भुतकर्म्मासौ ददौ तेनैकदन्तकः॥८४॥
हेरम्ब इति नामास्य वीजरूपं[2] सदास्तु ह ।
लम्बोदरस्तुन्दिलत्वान्नाम्ना पुत्रोऽस्तु ते शिव ॥८५॥
अस्य स्मरणमात्रेण सर्वे विघ्नां भयं[3] ययुः ।
विघ्नेशोऽयमतो नाम्ना तव पुत्रोऽस्तु[4] शङ्कर ॥८६॥
यात्रायां सत्क्रियारम्भे यः स्मरेच्च गणाधिपम् ।
तस्य यात्राफलं सिद्धेदारब्धस्यान्तदर्शनम्[5] ॥८७॥
सर्व्वमङ्गलकार्य्येषु पूजनीयो गणाधिपः ।
गणेशे पूजिते देवाः पूजिताः कार्य्यसाधकाः ॥८८॥
एवमुक्त्वा तदा ब्रह्मा विरराम द्विजर्षभ ।
ऐरावताभावदुःखी शिवमिन्द्रोऽभ्यभाषत ॥८९॥

इन्द्र उवाच ।

देवोत्तम महादेव पार्व्वतीश त्रिलोचन ।
त्वामहं प्रणमाम्येष प्रभो त्रिजगदीश्वर ॥९०॥
दासेन ते बलवता नन्दिना मे गजो हतः ।
अज्ञानेन मयायोधि स वै देव क्षमस्व माम् ॥९१॥

---

१ D गणाधिपस्त्वेषः । २ A वीजरूपां ।
३ B D सर्व्वविघ्नं । ४ D पुत्रस्तु ।
५ B चारम्भेस्यान्तदर्शनं । C सिद्धेरारब्धस्यान्तदर्शनं ।

यस्मै याचिष्णवे देयं स्वशिरोऽपि महेश ते ।
तस्मै गजशिरो दातुं नेच्छं तच्च क्षमस्व मे ॥९२॥

भगवानुवाच ।

ऐरावतं छिन्नशीर्षं क्षिप सागरपाथसि[1] ।
पुनः प्राप्स्यसि नागेन्द्रं समुद्रमथनोद्भवम् ॥९३॥
यथा त्वं मम पुत्राय दत्तमैरावतं शिरः ।
तथाहञ्चापि युष्मभ्यं दास्ये वृषभमक्षयम्[2] ॥९४॥

ऋषिरुवाच ।

एवमुक्तो ययौ देवो दिवं कश्यपनन्दनः ।
ब्रह्मादयोऽपि मान्यार्हाः स्वस्थानानि ययुर्[3]द्विज ॥९५॥
गणेशं पार्व्वती देवी पालयामास हर्षिता ।
गणेशः परमो योगी संसार[4]विमुखोऽभवत् ॥९६॥
ऋषयस्तं सदागत्य[5]गणेशं परितुष्टुवुः ।

ऋषय ऊचुः ।

गणेशो गणनाथश्च[6] हेरम्बो गिरिशात्मजः ।
पार्व्वतीनन्दनो वीरो देवराजो गजाननः ॥९७॥
लम्बोदरो विघ्नराजो योगी सद्योगलक्षणः[7] ।
अग्रपूज्यश्चतुर्वाङ्गरेकदन्तो लिपीश्वरः ॥९८॥
व्याघ्रचर्म्माम्बरो धीरः सदामङ्गलरूपवान् ।

---

१ C क्षिप त्वं सागराम्भसि । २ A D विषभयक्षयं । C विषमक्षयं ।
३ D स्वस्थाननिर्ययुः । ४ B संसारे C स्ववंश० । ५ D सदायोगि ।
६ B गणनाथस्य । ७ B D योगीशो योगलक्षणः ।

शुक्लास्यो मषिकारोही केवलो[1] मोक्षदायकः ॥९९॥
पद्मी दन्तकरो दन्ती वैष्णवः परमार्थदृक्।
पद्मपाणिः पद्मवक्त्रः शिवः शङ्कर ईश्वरः ॥१००॥
हरिगाता[2] नृत्यकारी शिवपुत्रः स्तवन्मदः।
आनन्दान्दोलितमनाः शैवो धर्म्मी धनेश्वरः ॥१०१॥
अनन्तो जगदाधारः शशिसूर्य्यविलोचनः।
समुद्रपाता सामुद्रः समुद्रजठरो यमः ॥१०२॥
दिव्यरूपो वारिनाथो जयश्च विजयस्तथा।
नामान्येतानि पञ्चाशद्गणेशस्य पठेन्नरः ॥१०३॥
यात्रायां पूजने दाने श्राद्धे गङ्गावगाहने।
पुत्रादिमङ्गले कार्य्ये प्रत्यहञ्च त्रिसन्ध्यकम् ॥१०४॥
शृणुयाद्‌यः[3] भक्तियुक्तो विघ्नास्तस्य विमूर्च्छिताः।
प्रत्यहं मङ्गलं तस्य धनपुत्रादिसम्भवम् ॥१०५॥
दृष्टदेव[4]महाभक्तिदायकं वाञ्छितार्थदम्।
एवं श्रुत्वा ऋषिगणा जग्मुः सर्व्वे यथागतम्[5] ॥१०६॥
जैमिने कथितञ्चैतद्गणेशजन्म पुण्यदम्।
न वंशो वर्त्तते[6] शम्भोरन्ते संहाररूपिणः ॥१०७॥
पुत्रोऽन्यः कथितः पूर्व्वं कार्त्तिकेयः कुमारकः।

---

१ D केवल्यो। २ B °माता। C °गतो। D °गाथा। ३ A C D वा। ४ D °देवे। ५ D °गतिं। ६ B विद्यते।

तस्यापि न विवाहोऽभूत् कौमारव्रतचारिणः ॥१०८॥
इति ते कथितं सर्व्वं यत्पृष्टोऽहमिह त्वया ।
जैमिने तपसे गच्छ[1] याम्यहञ्च यथातथम् ॥१०९॥

व्यास उवाच ।

इत्युक्तो जैमिनिस्तत्र प्रणम्य गुरुमीश्वरम् ।
जगाम तपसेऽन्यत्र शुकोऽपि योगवित्तमः ॥११०॥
शिवस्यांशो महाभागो जावाले[2] गतवान् यथा ।
श्रोतुमिच्छसि जावाले[3] मिमन्यत् कथयामि ते ॥१११॥

इति श्रीबृहद्धर्म्मपुराणे मध्यखण्डः समाप्तः ॥०॥

---

१ B तपसे गच्छ याम्यद्य । २ B यावाले । ३ B यावाले ।

# उत्तरखण्डः ।



## प्रथमोऽध्यायः ।

शौनक उवाच ।

मध्यखण्डकथा दिव्याः श्रुत्वा सं गुरवे मुनिः ।
जावालिः[1] किन्नु पप्रच्छ तन्नः सूत वदस्व भोः ॥१॥

सूत उवाच ।

श्रुत्वा दिव्याः कथाः पुण्या मध्यखण्डस्य शौनक ।
जावालिः[1] परिपप्रच्छ वेदव्यासं गुरुं ततः ॥२॥

जावालिरुवाच ।

श्रुता दिव्याः कथा ब्रह्मन् वर्णाश्रमसमाहितान् ।
धर्म्मान् वद महाबाहो शृन्वतो[2] मम चादरात् ॥३॥

व्यास उवाच ।

मूलप्रकृतिसम्भूता ब्रह्मविष्णुमहेश्वराः ।
तेषु वै मध्यमो विष्णुः सत्वदेहः सनातनः ॥४॥
तस्याभवन्मुखाद्विप्राः सर्व्ववेद[3]समाश्रयाः ।
बाहोश्च क्षत्रिया जाताः प्रजापालनहेतवे ॥५॥
ऊरुतो वणिजो जाताः धनरक्षणहेतवे ।
त्रयाणां सेवनार्थाय शूद्रो जातस्तु पादतः ॥६॥

---

१ B यावालिः । २ A शृण्वतो मम । ३ B०देव० ।

वर्णानेतान् समुत्पाद्य तद्धर्म्मानुदपादयत् ।
आगमो निगमश्चेति धर्म्माध्वानावुभौ मतौ ॥७॥
द्वाभ्यामेव जगत् सर्व्वं भ्रियते स चराचरं ।
निगमो वेदमार्गः स्यात् तत्वमार्गस्तथागमः ॥८॥
वेदमार्गः कर्म्मरूपस्तत्वमार्गस्तु यौगिकः ।
योगः कर्म्मविशेषश्च तत्वं तेनैव लभ्यते ॥९॥
वेदमार्गात् कर्म्मरूपाद्योगकर्म्म प्रलभ्यते ।
नहि कश्चित्[1] क्षणमपि [2]जातु तिष्ठत्यकर्म्मकृत् ॥१०॥
जीवः सदा [3]कर्म्मवशो यावत्तत्वं न गच्छति ।
तस्मात्तत्वार्थिना विप्र सदा जीवेन कर्म्म वै ॥११॥
कर्त्तव्यं न तु तत्त्यक्का[4] दूरतत्वो ह्यधः पतेत् ।
अद्वैतभावस्तत्वं[5] स्यात्तत्तु वाचा न गम्यते ॥१२॥
कर्म्मणा जायते देहो भूयस्तत्र च कर्म्मणा ।
स्वर्गो वा नरको वापि लभ्यते विप्र सर्व्वथा ॥१३॥
ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चेति चतुष्टयम् ।
वर्णाः स्वधर्म्मनिरताः प्राप्यन्ते विप्रतां द्विज ॥१४॥
ब्रह्मधर्म्मरता भूत्वा लभन्ते तत्त्वमुत्तमम् ।
शौद्रान् धर्म्मानशेषेण कुर्व्वन् शूद्रो यथाविधि ॥१५॥
वैश्यत्वमेति वैश्यश्च क्षत्रियत्वं स्वकर्म्मकृत्[6] ।

---

१ B D कश्चित् । २ D यातु । ३ B धर्म्मवशो या तु तत्त्वं ।
४ C तं त्यक्का । ५ B अद्वैव भवता भावः तत्त्वं स्यात् । ६ D स कर्म्मकृत् ।

विप्रत्वं क्षत्रियः सम्यक् निजधर्म्मपरो द्विज[1] ॥१६॥
विप्रस्य मुक्तिलाभेन[2] युज्यते सत्क्रियापरः।
सर्व्वएते हि वर्णा वै ज्येऽष्ठवर्ण[3]क्रियाकृतः ॥१७॥
पतन्ति नरके घोरे तस्माद्यो यः स वै तथा।
तेषाञ्च ब्राह्मणादीनां [4]वर्णधर्म्माननुक्रमात् ॥१८॥
कथयामि शृणुभान् [5]ब्रह्मन् गदतो मे निशामय।
अनसूया दया क्षान्तिः शौर्य्यमार्ज्जवमस्पृहा[6] ॥१९॥
अकार्पण्यमनाय[7]स्तन्तथान्यत् सार्व्ववर्णिकम्[8]।
अष्टावेव गुणाः पुंसां परत्रेह च भूतये ॥२०॥
पृथग्धर्म्मांश्च[9] तेषां वै गदतो मे निशामय।
यज्ञाध्ययनदानानि ब्रह्मक्षत्र[10]विशां द्विज ॥२१॥
शूद्रस्य केवलं सेवा ब्रह्मक्षत्रविशामिति[11]।
[12]क्षत्रियः सेवते विप्रं विप्रक्षत्रौ[13] च वैश्यकः ॥२२॥
शूद्रस्तु कुर्य्यात् सेवां वै ब्रह्मक्षत्रविशामिति।
शूद्रस्य भरणं कुर्य्युर्ब्राह्मणाद्या द्विजोत्तम ॥२३॥
ब्राह्मणे देवशर्म्माणौ रायो[14]वर्म्मा.च[15] क्षत्रिये।

---

१ C नृपः। २ D निजलाभेन। ३ B ज्येष्ठ एव। ४ B D ब्रह्मधर्म्मान्। ५ B विप्र। ६ C ०नीस्पृहाः। ७ C अनालस्यं। ८ A सर्व्ववर्णिकम्। ९ B omits च, D धर्म्मास्च। १० B ०क्षत्रि०। ११ D ०विशां द्विज। १२ B D क्षत्रियाः। १३ B D ०क्षत्रौ च। १४ D त्राता। १५ B ब्रह्माय।

धनो वैश्ये तथा शूद्रे दासशब्दः प्रयुज्यते ॥२४॥
स्त्रीषु देवीति विप्राणां क्षत्रियाणाञ्च कथ्यते ।
दासीति वैश्या[1]शूद्रासु कथ्यते द्विजपुङ्गव ॥२५॥
ब्राह्मणं[2] संमुखं दृष्ट्वा प्रणमेयुस्त्रयः परे ।
अप्रणम्य ब्रह्महत्या[3]पापं ते प्राप्नुयुर्द्विज ॥२६॥
ब्राह्मणः संस्कृतोक्त्या तु वाचं दद्यात् सुखान्वितः ॥२७॥
ब्राह्मणो ब्राह्मणं दृष्ट्वा प्रणमेत्तु परस्परम् ।
पितापि पुत्रं संनम्य न दोषं प्रतिपादयेत् ॥२८॥
जलहस्तं वह्निहस्तं पठन्तं भोजनान्वितम् ।
जपन्तं वा पठन्तं वा प्रणमेन्न कदाचन ॥२९॥
पुष्पहस्तं ध्यानयुक्तं निद्रायुक्तमथापि वा ।
धावन्तं क्रोधयुक्तं वा नावधानं[4] न वै नमेत् ॥३०॥
आर्द्रवस्त्रं ग्रस्तहस्तं पतितं मत्ततायुतम् ।
नीचस्थल[5]स्थितञ्चैव विमनस्कं तथैव च ॥३१॥
न नमेत् पृष्ठतश्चैव स्नानं कुर्व्वन्तमेव च ।
[6][परैश्च पीड्यमानञ्च प्रणमेन्न कदाचन ॥३२
स्वयं शुचिरतैलोऽपि[7] पिबन् खादन्नचानमेत् ।
उच्चैःस्थलगतो वापि प्रणमेन्न कदाचन ॥३३॥

---

१ C वैश्य० । २ B ब्रह्मणां । ३ B omits पापं ते । ४ A C नवधानं । ५ B ०स्थलं C ०स्थान० । ६ B omits th portion bracketted. ७ C स्वतैलो च ।

उच्छिष्टस्य विवस्त्रस्य आर्द्रवाससश्च नानमेत्[१] ।
ब्राह्मणं प्रणतायैव कुर्य्यादाशीर्व्वचो द्विज ॥३४॥
प्रणामपूर्व्वं नाशीश्च[२] कर्त्तव्या हि कदाचन ।
शूद्रन्त्वप्रणतं नैव सम्भाषेत कदाचन[३] ॥
उभौ तौ नरकं यातौ ब्राह्मणः शूद्र एव च ॥३५॥
गुणवृद्धः प्रणन्तव्यो विप्रो विप्रैर्वयोधिकैः ।
गुरवस्तु प्रणन्तव्या गुणैश्चेदधमा अपि ।
गुरवः पूर्व्वमेवोक्ताः क्रमेण चोत्तमा हि ते ॥३६॥
तेषां नामग्रहाह्वानं निन्दां धिक्कारमेव च] ।
परोक्ष[४]दोष[५]वादञ्च त्यजेदविनयन्तथा ॥३७॥
मातुलाद्या वयोनीचाः प्रणन्तव्याः सदैव हि ।
अन्ये तत्[६]सम्बन्धसम्बन्धा[७] अपादस्पर्शना[८] मताः ॥३८॥
प्रणमेयुर्ज्येष्ठवंश्याः स्पृशेयुर्न च वै पदे ।
कनिष्ठवंश्या गुरवो ज्येष्ठ[९]वंश्यांस्तु मानयेत् ॥३९॥
गुरुसम्बन्धपर्य्याया ये तु स्युर्वयसाल्पकाः ।
ते भवन्ति नमस्कार्य्यास्तन्नमस्कारपूर्व्वतः ॥४०॥
गुरुभ्योऽन्याः स्त्रियो नैव प्रणन्तव्याः द्विजन्मभिः ।
पादस्पर्शप्रणामन्तु कनिष्ठेषु न चाचरेत्[१०] ॥४१॥

---

१ D न नमेत् । २ C नाशीषः । ३ D नैव भाषेतन्न च कदाचन । ४ B परोक्षे । ५ D ०दोषं । ६ B omits तत् । ७ C ०बन्धा । ८ D ०स्पर्शने । ९ B ज्येष्ठं । १० C puts this line above प्रणमेयुः ज्येष्ठवंश्याः ।

वर्जयित्वा मातुलादीन् गुरुपौत्रादिकानपि[1]।
युवतीं गुरुभार्य्याञ्च प्रणमेन्न पदे स्पृशन्॥४२॥
कनिष्ठभ्रातृपत्न्यास्तु स्नुषायाः शिष्ययोषितः।
श्वश्र्वाश्च संमुखीभूयान्न कदाचिद्विशेषतः॥४३॥
लङ्का[2]रमङ्गस्पर्शञ्च रहःसन्दर्शनस्थितिम्[3]।
उच्छिष्टदापनञ्चैव नासां कुर्य्यात् कदाचन॥४४॥
एता अपि तथाचारं कुर्य्युस्तेषु च तेषु च।
जननी गुरुपत्नी च श्वश्रूर्ज्येष्ठसहोदरा॥४५॥
मातृष्वसा मातुलानी सप्तमी तु पितृष्वसा।
एता हि मातृपर्य्याया लघुत्वं चोत्तरोत्तरम्॥४६॥
एता मान्याश्च पूज्याश्च अगम्याश्चैव सर्व्वशः।
भार्य्याया मातुलाद्याश्च प्रणन्तव्याः समादरैः॥४७॥
भार्य्याभ्राता वयोज्येष्ठो नापाद[4]स्पर्शनो मतः।
ब्राह्मणः सर्व्ववर्णानां गुरुः शिष्या परैः मताः॥४८॥
इत्येवमुक्तो जावाले प्रणामविधिरुत्तमः।
योऽन्यथा कुरुते ह्येवं स वै दण्ड्यस्तु पण्डितैः॥४९॥

इति श्रीबृहद्धर्मपुराणे उत्तरखण्डे प्रणामविधिर्नाम प्रथमोऽध्यायः॥ ० ॥

---

१ D ०पुत्रादिकानपि। २ B लङ्कारं। ३ B ०स्थितं। ४ B न पाद०।

# द्वितीयोऽध्यायः ।

व्यास उवाच ।

यथामति ब्राह्मणानां धर्म्मान् वच्यामि शाश्वतान् ।
पावनान् ब्रह्मणा[१]गीतान् ब्राह्मणैश्चरितानपि ॥१॥
सत्यं चान्तिः चमा हिंसा वैधहिंसाल्पतोषिता ।
दया दानञ्च भिचा च परानुद्वेगकारिणी[२] ॥२॥
सौशील्यं विनयश्चैव यजनं याजनं तथा ।
प्रतिग्रहश्चाध्ययनाध्यापने स्वल्पभोजनम् ॥३॥
अनामिषासनञ्चैव [[३]तपस्या देवपूजनम् ।
धैर्य्यञ्चानशनञ्चैव] व्रतं सूर्य्यस्य सेवनम् ॥४॥
अग्निसेवा गुरोः सेवा गोसेवा नीचतोऽर्थना ।
अशुचिस्पर्शनञ्चैव अशुचिस्थानसङ्गमः ॥५॥
नीचालापो नीचगेहगमनं नीचवासना ।
स्नानालस्यजपालस्यवर्जनं दुःखमर्षणम् ॥६॥
शूद्राज्ञानभोजनस्य त्यागः शास्त्रज्ञता[४] तथा ।

---

१ B D ब्राह्मणागीतान् । २ B ०कारिता C ०द्वेषकारिणः D ०कारिणा । ३ C omits the portion bracketted. ४ D शास्त्राज्ञया C त्यागशास्त्रज्ञती ।

धर्म्मज्ञानं धर्म्मकथा शास्त्रार्थकथनं तथा ॥७॥
अशस्त्रधारणञ्चैव वाणिज्यवर्जनं तथा ।
गोवाहनं चारणञ्च गवां गोविक्रयं तथा[१] ॥८॥
न कुर्य्याद्ब्राह्मणः क्वापि[२] कुर्व्वाणो गोवधी भवेत् ।
प्राणिनां तेजसाञ्चैव वसानां[३] वाससामपि ॥९॥
विक्रयं सन्त्यजेद्विप्रस्तथा वेतनभोजिताम्[४] ।
चर्म्मवाद्यानुनृत्यञ्च चर्म्मवाद्योपजीवनम् ॥१०॥
चर्म्मच्छेदादिकञ्चापि न कुर्य्याद्ब्राह्मणः सदा ।
त्रिसन्ध्योपासनं कुर्य्यात् सावित्रीजपमेव च ॥११॥
देवर्षिपितृलोकानां तर्पणं शुचिराचरेत् ।
प्रातर्मध्याह्नसायञ्च[५] गायत्रीं त्रिविधां स्मरेत् ॥१२॥
रक्तां श्यामाञ्च शुक्लाञ्च ब्रह्मविष्णुशिवात्मिकाम् ।
एतत् सन्ध्यात्रयं प्रोक्तं ब्राह्मण्यं यदधिष्ठितम् ॥१३॥
यस्य [६]नास्त्यादरस्तत्र न स ब्राह्मण उच्यते ।
सन्ध्यात्रयमकुर्व्वाणः सूर्य्यं हन्ति च पापकृत् ॥१४॥
अस्नायी च मलं भुङ्क्ते अजपी पूयशोणितम् ।
अकृत्वा तर्पणं नित्यं पितृहा चोपजायते ॥१५॥
उद्यन्तं हि मार्त्तण्डं मन्देहा नाम राक्षसाः ।

---

१ C ०विक्रयस्तथा । २ B क्वोऽपि । ३ B वस्रानां C D रसानां ।
४ A रेतेन भोजितां B रेतोन भोजितं C रेतनभोजनं । ५ A सायाह्न ।
६ नास्ति यस्यादरस्तत्र ।

नित्यं[१] भक्षितुमायान्ति महाघोरतराननाः ॥ १६ ॥
प्रातः सन्ध्या[२]कृतां तच ब्राह्मणानाञ्च ते द्विज।
जलाञ्जलिभिरुद्धूताः पलायन्ते सुदूरतः[३] ॥ १७ ॥
ये पुनर्नां[४]चरन्त्येवं ब्राह्मणास्तेऽर्कघातिनः।
रक्तपाते पूयपाते धूमोद्गारे ज्वरे तथा ॥ १८ ॥
सूतके मृतकेऽशौचे वैदिकं कर्म्म नाचरेत्।
प्रातः सन्ध्यामकृत्वा तु तदहस्त्वाशुचिर्भवेत् ॥ १९ ॥
सर्व्ववैदिककार्य्येषु प्रयात्यनधिकारिताम्।
राजद्वारे वन्धनस्थो दूराध्वनि त्वरान्वितः ॥ २० ॥
कुर्य्याच्च मानसीं सन्ध्यां नैव दोषेण गृह्यते[५]।
प्रमादोन्मादसम्माद[६]शोकमोहादिना पुमान् ॥ २१ ॥
प्रयात्यशुचितां तच सन्ध्यां कुर्य्यात्तु मानसीम्।
द्वादश्यां पूर्णिमावास्योः सङ्क्रान्त्यां श्राद्धवासरे ॥ २२ ॥
सायं सन्ध्यां न कुर्व्वीत कुर्व्वाणः पितृहा भवेत्।
जपेत् सहस्रं सावित्रीं[७] ब्राह्मणोऽहरहर्द्विज ॥ २३ ॥
तदशक्त्या जपेद्देवीं गायत्रीं शतधापि च।
चालयेन्नाधरश्चौष्ठं[८] न द्रुतं नातिमन्दकम् ॥ २४ ॥
उत्थाय शुष्कवस्त्रेण युती युग्मेन तां जपेत्।
आद्यन्तौ[९] प्रणवौ देयौ सावित्रीजपकर्म्मणि ॥ २५ ॥

---

१ C सूर्य्यं। २ B D ०सन्ध्यां। ३ C स दूरतः। ४ C पूर्णं, D पुनर्नं। ५ B दोषो न०गृह्यते। ६ B omits सम्माद। ७ B सहस्रंसावित्रीं। ८ B नाधरौष्ठच। ९ C आद्यन्तौ।

मध्यमापर्व्वयुगलं त्यक्त्वा च दशपर्व्वभिः ।
सव्येन पाणिना जप्या घनीभूताङ्गुलेन वै ॥ २६॥
सावित्रीं प्रजपेद्विप्रः प्रातर्मध्याह्न उत्थितः ।
उषित्वा प्रजपेत्सायं पश्चिमाभिमुखस्तथा ॥२७॥
सावित्रीजपशीलस्य ब्रह्महत्यादिपातकम्[1] ।
उपेतं दैवयोगेन नश्यत्य[2]ग्नौ पतङ्गवत् ॥ २८॥
शतं जप्ता[3] तु सा देवी दिनपापप्रणाशिनी ।
जप्त्वा[4] तु देवी गायत्रीं[5] सूर्य्ये एव समर्पयेत् ॥२९॥
महेशमुखसम्भूता विष्णोर्वक्षसि संस्थिता[6] ।
ब्रह्मणा समनुज्ञाता गच्छ देवि यथेच्छया ॥३०॥
मन्त्रेणानेन गायत्रीं सूर्य्ये खलु समर्पयेत् ।
गायत्र्या वर्णरूपादि आदित्याख्यपुराणके ॥३१॥
ज्ञेयं तेनार्थमाज्ञाय गायत्रीं प्रजपेत् कृती[7] ।
गायन्तं त्रायते[8] यस्माद् गायत्रीयं तदुच्यते ॥ ३२॥
तर्पणं पितृलोकानां ब्राह्मणोऽवश्यमाचरेत्[9] ।
सतिलैर्वारिभिः स्वच्छैरफेनैर्दक्षिणामुखः ॥ ३३॥
दक्षिणाग्रेण पात्रेण जलमादाय निक्षिपेत् ।
तथैव न तु वामेन पश्चिमाग्रेण वा क्वचित् ॥ ३४॥

---

१ A ०पापकं। २ B न पश्यत्यग्नौ। ३ C शतजप्ता। ४ B C D add सहस्रं जप्ता तु तथा सर्व्वपापप्रणाशिनी, C reads गायत्री for तथा। ५ C गायत्रीं जप्ता तु देवीं। ६ B संयुता। ७ B D सुधीः। ८ C गायते। ९ A वैश्यमाचरेत्, D वै समाचरेत्।

तिलांस्तु वामतो नीत्वा स्पृष्टान् गात्रलोमभिः।
दग्भान्यून्मन्[1] चिपेत्तोये स्वधेति च विनिर्दिशेत् ॥३५॥
एवं कृत्वा तर्पणादि ब्राह्मणानुमतो गृहम्[2]।
आगच्छेद्ब्राह्मणाभावे जलं नीत्वा[3] गृहं व्रजेत् ॥३६॥
स्नात्वा च न स्पृशेल्लौहं रात्रिवासस्य ब्राह्मणः।
वस्त्रस्य तद्दधौतं परिदध्यात् प्रयत्नतः ॥३७॥
त्यक्तं वस्त्रमशुद्धं स्यादत्यक्तस्य चपांशुकम्।
रतिवस्त्रं विशेषेण शतधौतेन शुद्ध्यति ॥३८॥
तिलकं यज्ञसूत्रस्य वस्त्रयुग्मं रदानपि।
शुक्लान् सदैव कुर्व्वीत शुद्धात्मा[4] ब्राह्मणः सदा ॥३९॥
सदोपवीतिना भाव्यं सदा बद्धशिखेन च।
सदा तिलकिना चैव द्विजेनाचारिणा तथा ॥४०॥
मलमूत्रादिकत्यागे[5] नोपवीती भवेद्द्विजः।
शिर आच्छाद्य कर्णे वा स्कन्धे शिरसि वा तथा ॥४१॥
उपवीतं समारोप्य मुक्तकच्छो मलं त्यजेत्।
तैलाभ्यक्तो न ब्राह्मणः[6] स्यान्मार्ष्टिं कुर्य्यात्तु ब्राह्मणः ॥४२॥
मार्ष्टिं कृत्वापि न त्याज्यं मलमूत्रं कदाचन।
मलमूत्रपरित्यागे मैथुने स्नानभोजने ॥४३॥
दन्तस्य धावने चैव षट्सु मौनं समाचरेत्।
ब्राह्मणस्य तु देहोऽयं न सुखाय कदाचन ॥४४॥

---

१ B दग्भानूनान्। २ D र्वानुमतो व्रजेत्म्। ३ A नत्वा।
४ A B D शुक्लात्मा। ५ B मलमूत्रपरित्यागे। ६ C द्विजः D omits न।

तपःक्लेशाय[1] धर्म्माय प्रेत्य मोक्षाय सर्व्वदा ।
ब्राह्मणे कल्मषं नास्ति सन्ध्योपासनकारिणि ॥४५॥
यथा सूर्य्ये तमो नास्ति तमोवारणकारिणि ।
ब्राह्मणा भूसुराः प्रोक्ता ब्राह्मणा ब्रह्मवर्च्चसः ॥४६॥
न मौर्ख्यं ब्राह्मणे युक्तं प्रभाहानी रवौ यथा ।
नाल्पेन तपसा जीवो जायते ब्राह्मणे कुले ॥४७॥
स चेन्नीचक्रियाकारी ह्यात्महा कोऽपरस्ततः[2] ।
स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते[3] स्वं ददाति च ॥४८॥
तस्यैवानुग्रहेणान्नं भुञ्जते क्षत्रियादयः ।
ब्राह्मणस्य धरा सर्व्वा धर्म्माश्च निखिला अपि ॥४९॥
यद्ब्राह्मणो हि गृह्णाति तच्छेषं क्षत्रियादयः ।
ब्राह्मणा लोकपितरो ब्राह्मण्यो लोकमातरः ॥५०॥
येषां पादप्रसूतानि सर्व्वतीर्थानि नित्यशः ।
आदिराजो मनुः पूर्व्वं मर्य्यादां समकारयत् ॥५१॥
ब्राह्मणानां सतीनाञ्च गवाञ्च रक्षणाय ह[4] ।
ब्राह्मणांश्च स्त्रियो गाश्च पुष्पेणापि न ताड़येत् ॥५२॥
यदि नैतांस्ताडयेत तद्दिष्टदेवताड़नम्[5] ।
न ताड़येन्नावगुरेन्न च ताः कटु भाषयेत् ॥५३॥
न प्रेषयेन्नातिचरेद्दण्ड्या अपि न दण्डयेत् ।

---

१ D ०क्लृप्ताय । २ B C D तथा० । ३ B वस्तु । ४ B च ।
५ D यदि चैतांस्ताडयेत तदिष्टदेवताडनं, C ..., ०ऩनं ।

वपनं द्रविणादानं स्थानान्निर्यापणं[1] तथा ॥५४॥
एष हि ब्रह्मबन्धूनां बधो नान्योऽस्ति दैहिकः।
[2]यावद्गोब्राह्मणाः सन्ति तावत् पृथ्वी च सुस्थिरा ॥५५॥
तस्मात् पृथ्वीरक्षणार्थं पूजयेद्द्विजगोसतीः।
स्त्रियो गावो ब्राह्मणाश्च पृथिव्यां मङ्गलत्रयम् ॥५६॥
एतेषां द्वेषकृद्यस्तु स मङ्गलपरिच्युतः॥
ब्राह्मणानान्तु गायत्री स्त्रियान्तु[3] रज आर्त्तवम् ॥५७॥
गवां स्वभावः पापानां महताञ्च विनाशकम्[4]।
विप्राणां चरणौ तीर्थं गवां पृष्ठं तथा शुचि ॥५८॥
स्त्रीणां सर्व्वाणि चाङ्गानि तीर्थान्युक्तानि सूरिभिः।
इत्यादिराजमर्य्यादां योऽन्यथा कुरुते जनः ॥५९॥
स याति नरकं घोरं कथ्यते जीवितो मृतः[5]।
प्राणायामी सदा विप्रो दहेत् पापानि भूरिशः ॥६०॥
प्राणायामं विना पापक्षालने नास्ति कारणम्।
इत्याद्या ब्राह्मणस्योक्ता धर्म्मा ब्राह्मणसत्तम ॥६१॥
राज्ञाञ्च शृणु जावाले धर्म्मान् परमपावनान् ॥६२॥

इति श्रीवृहद्धर्म्मपुराणे उत्तरखण्डे ब्राह्मणधर्म्मकथनं नाम द्वितीयोऽध्यायः॥ ०॥

---

१ D निर्व्वापनं। २ B यावत् गाः ब्राह्मणाः सन्ति पृथ्वी चैव सुस्थिरा। D changes पृथ्वी into पृथिवी। ३ B स्त्रियास्तु D स्त्रियाश्च। ४ D विनाशनं। ५ C मम।

## तृतीयोऽध्यायः ।

व्यास उवाच ॥

राजा क्षत्रिय इत्युक्तः प्रजापालनतत्परः ।
सत्यं दानं विष्णुभक्तिस्तथा ब्राह्मणसेवनम् ॥ १ ॥
दर्पो विरोधो नियतं युद्धसामग्र्यसंग्रहः ।
परिखाकरणञ्चैव चारेण राज्यदर्शनम् ॥ २ ॥
मन्त्रिभिर्मन्त्रनञ्चैव शीघ्रकर्म्मत्वमेव च ।
बहुभिर्मन्त्रणात्यागो न चैकेनापि मन्त्रणा[१] ॥ ३ ॥
सदावधानं दण्ड्यस्य दण्डोपरक्षणं तथा[२] ।
शास्त्रादरो विप्रभक्तिर्ब्राह्मणान्यकरग्रहः ॥ ४ ॥
शोको विषादो मोहश्च व्ययशङ्का च मूर्खता[३] ।
त्याज्या राज्ञा इमे दोषाः प्रजासु सुप्रसन्नता ॥ ५ ॥
पञ्चरूपाणि राजानो धारयन्त्यमितौजसः ।
अग्नेरीशस्य सोमस्य यमस्य वरुणस्य च ॥ ६ ॥
तान्न हिंस्यान्न चाक्रोशेन्नाक्षिपेन्नाप्रियं वदेत् ।
देवा नृपतिरूपेण चरन्ति पृथिवीमिमां ॥ ७ ॥
[४]इन्द्रात् प्रभुत्वं वह्नेः प्रतापं[५] यमात् क्रौर्य्यं श्रियं विधोः ।

---

१ C = चैकमन्त्रणापि च ।   २ A B D दण्डगोप्यदण्डवर्त्तणम् ।
३ A मूर्खतां ।   ४ D ईशात् ।   ५ A B omits प्रतापम् ।

धनं कुबेरात् बलञ्च लीला राम[1]जनार्दनात् ॥८॥
राज्ञः शरीरं क्रियते विधाचा धरणीतले ।
राजानमिन्द्रं जानीत नान्य इन्द्राद्धरामरात्[2] ॥९॥
राज्ञां प्रजापालनन्तु हयमेधसहस्रवत् ।
स्वाधिकारस्थलोकानां कर्म्मणः सुकृतस्य च ॥१०॥
लभते षष्ठभागन्तु धर्म्मेण पालयन् प्रजाः ।
राजा दण्डकरो भूयाद्दण्डयाच्चापकज्जनः ॥११॥
हन्ता शक्रस्य रुद्रस्य हन्ता वैश्रवणो यमः ।
वरुणो वायुरादित्यः पर्जन्योऽग्निर्बृहस्पतिः ॥१२॥
दण्डयस्तं जगत्सर्व्वं वश्यत्वमुपगच्छति ।
नायं क्लीवस्य लोकोऽस्ति नापरो द्विजसत्तम ॥१३॥
न हि पश्यामि जीवन्तं राजन् किञ्चिन्न हिंसया ।
उदके जन्तवो नित्यं पृथिव्याश्च जलेषु च[3] ॥१४॥
न हत्वा[4] लिप्यते राजा प्रजा धर्म्मेण पालयन् ।
यदि दण्डो न विद्येत दुर्विनीतास्तदा नराः[5] ॥१५॥
हन्युः पशून् मनुष्यांश्च यज्ञीयानि हवींषि च ।
काकाद्याश्च पुरोडाशं श्वा चैवावलिहेद्धविः ॥१६॥
स्वाम्यञ्च न स्यात् कस्मिंश्चित् प्रवर्त्तेताधरोत्तमम् ।
चातुर्वर्ण्यविमोचाय दुर्विनीतभयाय च ॥१७॥

---

१ B D वास० । २ A इन्द्रोद्धरामरेत्, C इन्द्राद्धरामरे, D इन्द्रोध-रामरात् । ३ C जलेषु च । ४ C नह्यधो । ५ B ०स्तु दानवाः ।

दण्डेन नियतं लोके धर्म्मस्थानञ्च रक्ष्यते।
सर्व्वो दण्डजितो लोके दुर्लभो हि शुचिर्नरः ॥१८॥
दण्डस्य हि भयाद्भीता नरास्तिष्ठन्ति शासने।
कुकर्म्मणां निवृत्तिस्तु न स्याच्च सुमहाफला[1] ॥१९॥
स्यात्तस्माद्राजदण्डेन प्रायश्चित्तफलं हि तत्[2]।
शिष्ये गुरुमतिक्रान्ते पुत्रे पितरमेव च ॥२०॥
स्वामिनञ्च स्त्रियां राजा दण्डकर्त्ता भवेद्द्विज।
ब्राह्मण्यं दुस्तरं ज्ञात्वा तत्र दण्डं न कारयेत् ॥२१॥
न बध्यो ब्राह्मणो विप्रः स्त्री वृद्धो बाल एव च।
यश्चरेदशुभं[3] कर्म्म पापं विप्रविगर्हितम्[4] ॥२२॥
पातकेषु निवर्त्तेत निग्रहस्तस्य कारणात्।
शिरसो मुण्डनं कृत्वा गोमयेनोपलेपयेत् ॥२३॥
नगरं खरयानेन भ्रामयेद्दण्ड एष च[5]।
ब्रह्मनिर्दिष्ट[6]दण्डस्य प्रायश्चित्तं न विद्यते ॥२४॥
क्षत्रियस्य तु यो दण्डस्तं वक्ष्याम्यनुपूर्वशः।
परद्रव्याभिहरणे परदाराभिमर्षणे ॥२५॥
छेदयेद्धस्तपादौ च कर्णनासावकर्त्तनम्।
सर्वस्वहरणं कृत्वा परराष्ट्रं विवर्जयेत् ॥२६॥
राज्यं काङ्क्षेत यो राज्ञो राजपत्नीमथापि वा।
शरैस्तु राजा विध्येत[7] शक्तिचक्रगदादिभिः ॥२७॥

---

१ C -: हि स्याच्च महाफला। २ C तु। ३ B यश्च वेद शुभं कर्म्म। ४ D हि विप्रगर्हितं। ५ B C एव च। ६ C ब्रह्मनिर्दिष्ट०। ७ B वध्येत।

क्षत्रियस्य हि दुष्टस्य दण्ड एष विधीयते।
वैश्यस्यापि च यो दण्डस्तं प्रवक्ष्यामि मे[1] शृणु ॥२८॥
क्रूरेषु पातकेष्वेव यस्तु वैश्यः[2] प्रवर्त्तते।
परदारे परस्वे च तस्य निग्रहमादिशेत्[3] ॥२९॥
शूलेन भेदनन्तस्य वृक्षशाखावलम्बनम्।
एष वैश्यस्य दण्डः स्यात् शूद्रस्य शृणु वर्ण्यते ॥३०॥
कुले शूद्रस्य यो दुष्टस्तथैवास्य बधः स्मृतः।
कुञ्जरेणापि[4] मर्द्दित मूषायामपि पाचयेत्[5] ॥३१॥
नैकस्यार्थे कुलं हन्यान्न राष्ट्रं ग्रामकं तथा।
एवं सुशासितं कृत्वा शेषं कोषेषु योजयेत् ॥३२॥
एतान् धर्म्मान् हि यो राजा जानाति स हि धर्म्मवित्।
श्रेयोऽर्थी सततं राजा ब्रह्मवृत्तिं न लङ्घयेत् ॥३३॥
स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं हरेत यः[6]।
षष्टिवर्षसहस्राणि स विष्ठासु कृमिर्भवेत् ॥३४॥
ब्राह्मणस्य तुषञ्चापि हर्त्तारं पातयत्यधः।
ब्राह्मणस्थापनादन्यत् कर्म्म राज्ञो न चोत्तमम् ॥३५॥
ब्रह्मस्वहरणान्नान्यत् पापं राज्ञस्तु वर्त्तते।
चतुर्णामेव वर्णानां पापं ब्रह्मस्वहारणम् ॥३६॥
विषस्याग्नेस्तु साधर्म्यं ब्रह्मस्वे वर्त्तते सदा।
विषाग्नी एकदेशस्थौ सर्व्वाङ्गव्यापकं यथा ॥३७॥

---

१ B तत्। २ B यस्तु वै वैश्यः। ३ C आविशेत्। ४ B मुद्गरेणापि।
५ D पातयेत्। ६ C हरेत्तु यः।

तथा[१] ब्रह्मस्वापहारे एकस्मिंश्च कुलं दहेत् ।
यदाज्ञ[२]र्द्विणादानं दण्डो विप्रे कृतागसि ॥ ३८॥
नीत्वा च तद्धनं सर्व्वं ब्राह्मणेभ्यः प्रदापयेत् ।
शास्त्रज्ञसङ्गं नृपतिः कुर्य्यान्नित्यं न चान्यथा ॥ ३९॥
वेदागमपुराणज्ञान् ब्राह्मणानथ भेषजान् ।
ज्योतिर्विदोऽपि नृपतिर्न कदापि परित्यजेत् ॥ ४०॥
एतैस्त्यक्तस्य नृपतेर्विपदस्तु पदे पदे ।
वर्त्तेत युद्धसामग्र्या प्रस्तुतो नृपतिः सदा ॥ ४१॥
धान्यतण्डुलवस्त्रादैः कोषान् कुर्य्यात् पृथक् पृथक् ।
[[३]कुर्य्याच्च तेषामध्यक्षान् वेतनेन पृथक् पृथक्] ॥ ४२॥
सैन्यानां भरणं कुर्य्यात् सेनाङ्गं स्याच्चतुष्टयम् ।
रथो[४] हस्ती घोटकश्च पदातिश्च द्विजोत्तम ॥ ४३॥
एको हस्ती रथश्चैकस्त्रयोऽश्वाः पञ्च पत्तयः ।
पत्तिरेषा समुद्दिष्टा[५] ततस्त्रिगुणकाः परे[६] ॥ ४४॥
सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः ।
अनीकिनी च दशभिस्ताभिरक्षौहिणी मता ॥ ४५॥
सप्ततिश्च[७] शतान्यष्टौ सहस्राण्येकविंशतिः ।
अक्षौहिण्यां रथाः प्रोक्ता इभास्तावन्त एव हि ॥ ४६॥
रथानां त्रिगुणा अश्वा नराः पञ्चगुणा द्विज ।

---

१ B D यथा । २ A यद्दातुः B यथाज्ञः । ३ B and D omit the portion bracketted. ४ C यथा । ५ A समुद्दिष्टो, B समुद्दिष्टः । ६ D तत स्त्रिगुणकारकाः । ७ B C सप्तभिश्च ।

एवमक्षौहिणीसङ्घं सैन्यं रक्षेत सर्व्वदा ॥४७॥
व्ययशङ्कां युद्धशङ्कां संत्यजेन्नृपतिः सदा।
राज्ञां हि युद्धमरणं स्वर्गदं परमं मतम् ॥४८॥
धर्म्मार्थञ्च गृहार्थञ्च विप्रत्राणार्थमेव च।
त्रिधैव विभजेद्वित्तं नैव दोषैः प्रलिप्यते ॥४९॥
साधवो मन्त्रिणः कार्य्या ज्ञातशीलकुला नृपैः।
बहुस्थलाश्चरन्त्येव राजानो बहुशत्रवः ॥५०॥
चिरं न स्थापयेदेकं मन्त्रिणञ्चाधिकारणात्।
मन्त्री च चिरमीशो हि राजानञ्चातिशीयते ॥५१॥
बहुभिर्न वसेद्राजा वियुक्तो[१] नापि शस्त्रकैः।
अल्पां निद्रान्तु सेवेत भोजनञ्च मितं चरेत् ॥५२॥
स्त्रीसङ्गं बहुधा नेच्छेन्न दद्यात् परप्रश्रयम्।
स्वबुद्ध्या कर्म्म कुर्व्वीत शास्त्रबुद्ध्या विशेषतः ॥५३॥
सदा स्वस्त्ययनी तिष्ठेद्द्विजपूजारतः सदा।
भ्रातरं पुत्रवर्गञ्च दद्यान्न प्रश्रयं क्वचित् ॥५४॥
गुणवन्तं सुतं राज्ये समर्प्य धर्म्मदर्शनात्।
प्रकल्प्य वृत्तिमन्येषां त्यजेद्राज्यं नरेश्वरः ॥५५॥
पुरुषे पुरुषे कीर्त्तिः स्थापनीया स्वकर्म्मतः।
इत्याद्या राजधर्म्मास्ते कथिता हि समासतः।
अथातः शृणु वक्ष्यामि धर्म्मांश्च वैश्यशूद्रयोः ॥५६॥

इति श्रीबृहद्धर्मपुराणे उत्तरखण्डे राजधर्म्मकथनं नाम
तृतीयोऽध्यायः ॥

---

१ B वियुक्तो।

# चतुर्थोऽध्यायः ।

व्यास उवाच ।

कृषि[1]वाणिज्यगोरचाकुसीदद्विजीविकाः ।
धनस्य रक्षणं कुर्य्याद्राज्ञश्च परितोषणम् ॥१॥
धान्यतण्डुलवस्त्रादिमणिमुक्तादिकं तथा ।
घृततैलादि स्वर्णादि सर्व्वद्रव्याणि[2] संग्रहेत् ॥२॥
क्रयञ्च विक्रयञ्चैव कुर्य्याद्वैश्यो[3] ह्यतन्द्रितः ।
वाणिज्यार्थे गृहार्थे च धर्म्मार्थे [4]चापदर्थके[5] ॥३॥
चतुर्धा विभजेद्वित्तं वैश्यस्तु द्विजसत्तम ।
धर्म्मं कुर्य्यात् प्रयत्नेन धनरक्षार्थमेव हि ॥४॥
अन्यथा स्याद्वृथा सर्व्वं राज[6]चौराग्निवारिभिः ।
सदा स्वस्त्ययनो तिष्ठेद्द्विजभूपतिपूजकः ॥५॥
शूद्रस्य पालकश्च स्यात् सदा धर्म्मपरायणः ।
हस्त्यश्वस्वर्णधान्यादिभूमिगोमेषवाससाम् ॥६॥
सर्व्वेषां गन्धद्रव्याणां मूल्यतत्त्वज्ञतां चरेत् ।
क्रीणीत येन मूल्येन तस्य षोड़शमंशकम् ॥७॥

---

१ कृषि° । २ C °द्रव्यादि । ३ A विप्रो ।
४ A B C न । ५ B D चापदार्थके । ६ B राज्यै° ।

विक्रीतलभ्यं कुर्य्यात्तु ह्यधिके[1] धर्म्महानितः।
ऋणं दत्त्वा मासि मासि दत्तषोड़शपादकम् ॥८॥
गृह्णीयाद्वृद्धि[2]मित्येवं विंशादौ तु पृथक् पृथक्।
इतोऽधिकश्चेद् गृह्णीयात् तदा भोगाय नेति तत् ॥९॥
शोध्यते तु ऋणं यत्र मासे तत्राधिकं त्यजेत्।
ब्राह्मणेभ्य ऋणं दद्याद् गृह्णीयान्नाधिकं ततः ॥१०॥
न प्रत्याख्यापयेच्चापि ब्राह्मणस्य वचो गुरु[3]।
द्रोणाढकाङ्गुलीहस्तकुडवादि तथैव च ॥११॥
माषतोलकबुद्ध्यर्थं मानं कुर्य्यात् पृथक् पृथक्।
कुर्य्यात्तासैः सेरकञ्च[4] त्रिंशता षड्भिरेव च ॥१२॥
तदर्द्धं[5] तोलकं ज्ञेयमेतेन क्रयविक्रयौ।
कुर्य्याद्वैश्यो धर्म्मबुद्ध्या नान्यथा ह्याचरेत् क्वचित् ॥१३॥
इत्याद्याः कथिता विप्र वैश्यधर्म्माः पृथग्विधाः।
शूद्रस्तु ब्राह्मणादीनां पूजां कुर्य्यादतन्द्रितः ॥१४॥
आज्ञां न लङ्घयेच्चापि न च तानवधीरयेत्।
न तेषामाचरेद्धर्म्मं वैदिकं लौकिकं तथा ॥१५॥
पुराणपठनं वेदपठनं नापि चाचरेत्।
शास्त्रार्थकथनञ्चैव न शूद्रः क्वचिदाचरेत् ॥१६॥
विप्रं चुत्रं विप्रश्चापि पाठयेन्न कदाचन।

---

१ A ह्यधिकेषु, C ऋधिके। २ A वृद्धं C D वृद्धं। ३ A C D गुरुः।
४ A सेरकं C सेटकञ्च। ५ D तदर्थं।

[[१]वर्णान् व्याकरणादींश्चा श्लोकं श्लोकार्द्धमेव वा[२] ॥१७॥
शूद्राद्विद्याग्रहीतारं[३] ब्राह्मणं पातयेदधः[४]] ।
ब्राह्मणोऽपि पठन् शूद्रादात्मानमेव घातयेत् ॥१८॥
[[५]घृतं मतिं जलं पाद्यमासनञ्च निमन्त्रणम् ।
भुक्तोच्छिष्टञ्च नो दद्याच्छूद्राय ब्राह्मणः क्वचित् ॥१९॥
वेदं न शृणुयाच्छूद्रः शृणुयाच्च पुराणतः ।
आगमन्तु पठेच्छूद्रो गुरुणा दीयते तु यत् ॥२०॥
स्वाहाप्रणवसंयुक्तं शूद्रो मन्त्रं विवर्जयेत्] ।
दद्याच्छूद्राय विप्रस्तु मस्वाहाप्रणवान्यतः ॥२१॥
ब्राह्मणस्य मुखाच्छूद्राः श्रुत्वा पौराणमक्षरम् ।
विप्राणां पाठजं पुण्यं संप्राप्नोति[६] न संशयः ॥२२॥
शूद्रेभ्यो मन्त्रदानञ्च पुराणश्रावणन्तथा[७] ।
आपद्धर्म्मः समुद्दिष्टो ब्राह्मणस्य न चान्यथा ॥२३॥
न चान्यो ब्राह्मणाद्दद्याच्चतुर्वर्णेभ्य एव च ।
मन्त्रं तन्त्रं शुभं ज्ञानं तस्माच्छूद्राय दापयेत् ॥२४॥
दद्यान्न देवनैवेद्यं शूद्राय ब्राह्मणः क्वचित् ।
पादोदकं ब्राह्मणस्य पिबेच्छूद्रः प्रयत्नतः ॥२५॥
ब्राह्मणे भक्तिमासाद्य शूद्रस्तरति दुर्गतिम् ।

---

१ B omits the portion bracketted. २ C D श्लोकार्थमेव वा । ३ C D ०ग्रहीतारं । ४ C पातयत्यधः । ५ B omits the portion bracketted.
६ B C D स प्राप्नोति । ७ C श्रवणन्तथा D कथनन्तथा, ।

नोपदेशै[1]र्न मन्त्रैश्च न स्तवैः कवचैरपि ॥२६॥
ब्रह्महत्या सुरापानं स्तेयं गुर्व्वङ्गनागमः[2] ।
महान्ति पातकान्याहुस्तत्संसर्गो च पञ्चमः ॥२७॥
ब्रह्मक्षत्रविशामेतन्महापातकमुच्यते ।
शूद्रस्य तु सुरापाने ब्राह्मणीगमनं मतम् ॥२८॥
त्रयाणामेव वर्णानां माता ब्राह्मणभाविनी ।
क्षत्रविट्शूद्रकन्यास्तु विप्राणां कन्यकाः[3] समाः ॥२९॥
क्षत्रविट्शूद्रकन्यानां तैर्दत्तानां द्विजातयः ।
ग्रहीतारो[4] भवन्त्येव नानापत्यकराः पुनः ॥३०॥
किन्तु मात्रादिशब्दांस्तु त्यजेयुस्तत्र सर्व्वदा ।
ब्राह्मणान्नाशनः शूद्रो जलपुष्पादि चाहरेत् ॥३१॥
ब्राह्मणस्तेन पूजादि कुर्य्याच्छूद्रान्तरस्य न ।
ब्राह्मणान्नं विषं शूद्रे ह्येवं कुर्व्वतो[5] द्विज ॥३२॥
सेवित्वा ब्राह्मणान्नन्तु भुञ्जीत नान्यथा क्वचित् ।
ब्राह्मणस्यासने शूद्रो न वसेच्च कदाचन ॥३३॥
न ब्राह्मणासनादुच्चैर्वसेच्छूद्रः कदाचन ।
ब्राह्मणाग्रे पृथक पूजां कदाचिदपि नाचरेत् ॥३४॥
अङ्गुल्यग्रजलकणैः शूद्रस्याचमनं स्मृतम् ।
सर्व्वासामपि च स्त्रीणामपि चाचमनं तथा ॥३५॥
शूद्रवस्त्रं वारिपात्रं तथा भोजनपात्रकम् ।

---

१ C नोपदेशैश्च । २ C सर्व्वाङ्गनागमः । ३ A B C कन्यकासमाः ।
४ C D ग्रहीतारो । ५ C कुर्व्वते ।

न ब्राह्मणो व्यवहरेत् पापी व्यवहरन् भवेत् ॥ ३६ ॥
मलमूत्रं परित्यज्य[1] मृद्भिः शूद्रो मृजेत् करौ ।
यावत्तु पूतिगन्धैस्तु[2] परित्यागो न लक्ष्यते ॥ ३७॥
सर्व्वासामपि च स्त्रीणां विधिरेवम्विधो मतः ।
ब्राह्मणस्य तु मृत्शुद्धिः कथ्यते ह्यवधारय[3] ॥ ३८॥
एका लिङ्गे गुदे तिस्रो दश वामकरे तथा ।
करक्रोड़े तथा सप्त उभयोस्तिस्र एव च ॥ ३९॥
त्रिधा त्रिधा पादयोश्च नेतव्या मृद एव हि ।
नखशुद्धिं त्रिधा कुर्य्यात्तत आचमनं चरेत् ॥ ४० ॥
प्रक्षाल्य पाणी पादौ च त्रिः पिवेदम्बु वीक्षितम् ।
संमृज्याङ्गुष्ठमूलेन त्रिः प्रमृज्यात्ततो मुखम् ॥ ४१ ॥
अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरम् ।
अङ्गुष्ठानामिकाभ्यान्तु चक्षुःश्रोत्रे पुनः पुनः ॥ ४२॥
नाभिं कनिष्ठाङ्गुष्ठेन हृदयन्तु तलेन वै ।
सर्व्वाभिश्च शिरः पश्चाद्बाहू चाग्रेण संस्पृशेत् ॥ ४३ ॥
एवमाचमनं कुर्व्वन् साक्षान्नारायणो भवेत् ।
एवं हि ब्राह्मणस्योक्तं जावाले चमनं शुभम् ॥ ४४ ॥
शूद्राश्च सर्व्ववर्णानां स्त्रियो नो कुर्य्युरीदृशम् ।
तिलकं विन्दुमात्रन्तु ललाटे शूद्र आचरेत् ॥ ४५ ॥
ब्राह्मणश्चोर्द्धतिलकमाशिखान्तं सदा धरेत् ।
द्विफालं मध्यशून्यन्तु तिलकं मृत्तिकादिभिः ॥ ४६ ॥

---

१ C परित्यक्तो । २ A ०गन्धैस्तु, C ०गन्धः । ३ C ह्यवधीरयेत् ।

वाक्कोस्य हृदये चैव ग्रीवायां पार्श्वयोरपि ।
ब्राह्मणस्तिलकान्येवं कुर्य्याद्वै सर्व्वकर्म्मसु ॥४७॥
न वाक्कीस्तिलकं कुर्य्याज्जीवन् यस्य पिता स्थितः ।
तथा ज्येष्ठः सोदरस्य यस्य जीवति स तथा ॥४८॥
उच्छिष्टहस्तं शूद्रं हि स्पृष्ट्वा विप्रः स्वयं तथा ।
उपवासं प्रकुर्व्वीत शुनां संस्पृष्ट एव च ॥४९॥
अस्नातो ब्राह्मणं नैव स्पृशेच्छूद्रः कदाचन ।
परीहासं न कुर्य्याच्च वृषलो ब्राह्मणाय हि ॥५०॥
पितामहपितृव्यादिभ्रातृपुत्रादिशब्दतः ।
शूद्रस्य ब्राह्मणस्यैव न भाषेतां परस्परम् ॥५१॥
इत्याद्याः कथिता धर्म्मा वर्णानां द्विजपुङ्गव ।
अथाश्रमाणां[1] सामान्यकार्य्याकार्य्यं निरूप्यते ॥५२॥

इति श्रीबृहद्धर्म्मपुराणे उत्तरखण्डे चतुर्थोऽध्यायः ॥

---

[1] B तथाश्रमाणां ।

# पञ्चमोऽध्यायः ।

व्यास उवाच[1] ।

अहिंसा सत्यास्तेयादि[2] पूर्व्वमुक्तं श्रुतं त्वया ।
अतिथेः सेवनं दानं तीर्थपर्य्यटनन्तथा ॥१॥
गुरुसेवा शास्त्रमतिरास्तिकत्वं सलज्जता[3] ।
स्नानञ्च तर्पणञ्चैव ब्रह्मचारी समाचरेत् ॥२॥
भिक्षां कुर्य्याद्भिक्षितञ्च गुरवे सन्निवेदयेत् ।
गुरुवासे[4] युवतिभिर्न सम्भाषेत सर्व्वदा ॥३॥
नन्वग्निः प्रमदा नाम घृतकुम्भसमः पुमान् ।
सुतामपि रहो जह्यात् प्रलिप्सुः श्रेयसां पदम् ॥४॥
अङ्गसेवां[5] चन्दनादिग्रहणं[6] दुर्जनैषणाम्[7] ।
ब्रह्मचारी न कुर्य्याद्वै त्रिसन्ध्य[8]स्नानमाचरेत् ॥५॥
अभ्यसेत ध्रुवं वेदानर्थज्ञोऽपि[9] ततो भवेत् ।
आवृत्तिः सर्व्वशास्त्राणां बोधादपि गरीयसी ॥६॥
गुरुद्रव्यं न भुञ्जीत दद्याच्च गुरवे सदा ।
मसूरमामिषं तैलं ताम्बूलमपि वर्ज्जयेत् ॥७॥
खट्वायां शयनञ्चैव ब्रह्मचारी विवर्ज्जयेत् ।

---

१ A B C omit व्यास उवाच । २ A सत्यस्तेयादि B अहिंसं-सत्यमस्तेयादि । ३ C सलज्जिता । ४ B गुरुसेवा । ५ B D अङ्गसेवा । ६ D चन्दनाद्यैर्ग्रहणां । ७ B दुर्जनैषिणां । ८ A C त्रिसन्ध्या ९ A B D नार्थज्ञोऽपि ।

हविष्याण्यथ वक्ष्यामि सावधानमनाः शृणु ॥८॥
हैमन्तिकं सिता खिन्नं धान्यं मुद्गास्तिला यवाः।
कलाय-कङ्गु-नीवारा वास्तूकं हिलमोचिका[1] ॥९॥
कलायं कालशाकञ्च मूलकं केमुकेतरत्।
कन्दं[2] सैन्धवसामुद्रे लवणे[3] मधुसर्पिषी।
पयोऽनुद्धृतसारञ्च पनसाम्रहरीतकी ॥१०॥
पिप्पली जीरकञ्चैव नागरङ्गञ्च तिन्तिडी।
कदली लवली धात्री फलान्यगुडमैक्षवम्।
अतैलपक्वं मुनयो हविष्यान्नं प्रचक्षते ॥११॥
विधवानाञ्च नारीणां हविष्यान्नमिदं स्मृतम्।
तासां पतिव्रतमिदं मृते भर्त्तरि सर्व्वथा ॥१२॥
इत्याद्याः कथिता धर्म्मा जावाले व्रतचारिणाम्[4]।
उच्यतेऽथ गृहस्थानां धर्म्मो यः परमो मतः ॥१३॥
ब्राह्मे मुहूर्त्त उत्थाय प्रणमेद्गुरुदेवतम्।
ततो मलं त्यजेद्दूरे वहिर्गत्वा धनुर्गृहात् ॥१४॥
जनस्य[5] सम्मुखे नैव न च वृक्षतले क्वचित्[6]।
जलकष्टं तथा सूर्य्यसाम्मुख्यं वायुपश्चिमम् ॥१५॥
लिङ्गस्पर्शं त्यजेच्चैव संत्यागे मलमूत्रयोः।
तामसकाले तु[7] सम्प्राप्ते शौचं कृत्वा यथाविधि ॥१६॥

---

१ B °मूचिका। २ C फलं। ३ D गव्ये च।
४ C D ब्रह्मचारिणां। ५ D जलस्य। ६ D तथा।
७ C तांब्राकाले तु।

ततः स्नानं प्रकुर्व्वीत दन्तधावनपूर्व्वकम् ।
मुखे पर्य्युषिते नित्यं भवत्यप्रयतो[१] नरः ॥१७॥
तस्मात् सर्व्वप्रयत्नेन भक्षयेद्दन्तधावनम् ।
दक्षिणां पश्चिमां काष्ठां त्यजेद्वै दन्तधावने[२] ॥१८॥
प्रातःस्नानं प्रकुर्व्वीत दृष्ट्वा प्राचीमथारुणाम् ।
ततः कुर्य्याद्दिवास्नानं उदिते सति भास्करे ॥१९॥
अलक्ष्मीः कालकर्णी च दुःस्वप्नं दुर्व्विचिन्तितम् ।
[३]अप्प्रातेणाभिषिक्तस्य नश्यन्ति इति धारणा ॥२०॥
एवं स्नात्वा सुसङ्कल्प्य[४] शुष्कवासा जपेत् कृती ।
पञ्चयज्ञान् प्रकुर्व्वीत तांस्ते वक्ष्यामि तच्छृणु ॥२१॥
अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमो देवबलिः प्रोक्तो नृयज्ञोऽतिथिपूजनम् ॥२२॥
श्राद्धं वा पितृयज्ञः स्यात् पित्रोर्बलिरथापि वा ।
स्वर्गापवर्गयोः सिद्धिं पञ्चयज्ञात् प्रपद्यते ॥२३॥
अभावे त्वतिथिः पूज्यो नरमात्रमथापि वा ।
दद्यादहरहर्विप्र ब्राह्मणायान्नमुत्तमम् ॥२४॥
वैश्वदेवविधिञ्चात्र शृणुष्व द्विजसत्तम ।
कुशण्डिकासंस्कृताग्नौ जुहुयात् साग्निको द्विजः ॥२५॥
निरग्निर्लौकिकाग्नौ हि मुनीनां मतमुत्तमम् ।

१ C भवत्येव यतो । २ D ०धावनं । ३ A अप्प्रात्रेण B अरुणाभेऽभिषिक्तस्य C अप्प्रात्रेणाभिषिक्तस्य नश्यन्ति इति वारिणा ।
४ A C D सुसंकल्प्यं ।

तदभावे जले पृथ्व्यां विना संस्कारमाक्षिपेत् ॥२६॥
अक्षारलवणं यत्तु[1] हविष्यान्नं घृतान्वितम् ।
जुहुयादग्निम् शुल्कान्नं[2] वैश्वदेवविधिस्त्वयम् ॥२७॥
ब्राह्मणाद्यैः प्रकर्त्तव्यः पञ्चसूनापनुत्तये ।
नवग्रहान् पूजयित्वा दिक्पालांश्च प्रपूजयेत् ।
सूर्य्याय सूर्य्यपुरुषेभ्य इत्यादिकमपि क्रमात् ॥२८॥
सर्व्वेभ्यश्च बलिन्दद्यात् ततः कीटपिपीलिकाः ।
अन्यैः प्रपूजयेद्भांश्च पूजयेत् परमादरात् ।
कृत्वा चैवं विधिं विप्रः परान्नं[3] परिवर्ज्जयेत् ॥२९॥
नित्यश्राद्धन्तु[4] क्रियते यत्तत् प्रतिदिनं कृतम् ।
दद्यादहरहः श्राद्धमन्नाद्येनोदकेन च ॥३०॥
पयोमूलफलैर्वापि पितृभ्यः प्रीतिमाहरन्[5] ।
गोग्रासन्तु ततो दद्यान्मन्त्रेणानेन भूसुर ॥३१॥
ॐ सौरभेय्यः सर्व्वहिताः पवित्राः पुण्यराशयः ।
प्रतिगृह्णन्तु मे ग्रासं गावस्त्रैलोक्यमातरः ॥३२॥
ततोऽतिथींश्च[6] सेवेत यथाशक्ति निबोध तत् ।
स्वाध्यायेनाग्निहोत्रेण यज्ञेन तपसापि वा ॥३३॥
न प्राप्नोति गृही लोकान् यथात्वतिथिपूजनात् ।
[7]न वै स्वयं तदश्नीयादतिथिं यन्न पूजयेत् ।

---

१ C यत्ते । २ B शुष्कान्नं । ३ B परमान्नं ।
४ A नित्यश्राद्धस्तु ; B D नित्यं श्राद्धन्तु । ५ B C आवहन् ।
६ B ततोतिथांश्च ।. ७ A B D omit this line.

धन्यं यशस्यमायुष्यं स्वर्ग्यञ्चातिथिपूजनम् ॥२४॥
ततो भुञ्जीत गार्हस्थी कृतमौनो यथाविधि ।
अन्नं विलोक्य वक्ष्येत तेजोसीति स्वयन्नमेत्[1] ॥२५॥
चतुष्कोणमण्डलेन पञ्चभागांश्च निर्व्वपेत् ।
भूर्भुवो भुवनपतये [भूतानां पतये][2] तथा ॥२६॥
पञ्चभूतात्मने मध्ये स्वाहान्तं मन्त्रपञ्चकम् ।
उत्सृजेदथ गण्डूषं पिवेदुच्चारयन्निति ॥२७॥
अमृतोपस्तरणमसि स्वाहेति तत्त्वमुद्रया ।
पञ्चग्रासांस्ततः कुर्य्यात् प्राणापानादिना[3] द्विज ॥२८॥
प्रणवादिचतुर्थ्यन्तं स्वाहाशेषेण वै शुचिः[4] ।
आयुष्कामः प्राङ्मुखः सन् सत्यकाम उदङ्मुखः ॥२९॥
श्रीकामः पश्चिमास्यश्च[5] दक्षिणास्यो यशोऽर्थकः ।
[6]माता पिता वा यस्यास्ति नाश्नीयाद्दक्षिणामुखः ॥४०॥
पीठे पादं समारोप्य जलपात्रञ्च[7] वामतः ।
नाश्नीयात् पङ्क्तिमध्यस्थो न त्यजेत् पङ्क्तिमेव हि ॥४१॥
अमावास्यापौर्णमासीचतुर्द्दश्यष्टमीषु च ।
रविवारे तथा भानुसङ्क्रान्तौ द्वादशीतिथौ ॥४२॥

---

१ B स्वयन्नेन नमेत् । २ B omits the portion bracketted.
३ B प्राणापानेति वै द्विज । ४ C reads ते संहितान्तेन चादौ तु व्याहृत्य प्रणवान्तरं । ५ B श्रीश्रीकामः पश्चिमास्यः ।
६ C reads जीवन् पिता वा माता वा यस्य नास्ति विधिस्तथा ।
७ C जलधारञ्च ।

पुण्याहेषु च सर्व्वेषु मत्स्यं मांसं[1] न भक्षयेत्।
मत्स्यं मांसं मसूरञ्च माषं निम्बं तथार्द्रकम् ॥४३॥
तैलञ्च[2] रविवारेषु न गृह्णीत कदाचन।
रोहितं शकुलञ्चैव शफरं शफराधिपम् ॥४४॥
शुक्लवर्णं सशल्कञ्च[2] मत्स्यं भुञ्जीत ब्राह्मणः।
सर्व्वाङ्गुलीभिरश्नीयात् कम्पयेन्न[3] करौ क्वचित् ॥४५॥
निःशब्दं भोजनं कुर्य्यान्नाङ्गुलीपृष्ठमालिहेत्।
आदौ घृतान्नमाहार्य्यं व्यञ्जनं शाकमादितः[4] ॥४६॥
ततः सूपादि भुञ्जीत क्षीरान्तं भोजनञ्चरेत्।
न क्षीरे लवणं दद्यान्नाम्लेषु गुडमेव च ॥४७॥
क्षीरं तथामिषं भुक्त्वा न भुञ्जीत कदाचन।
पाषाणपात्रे पत्रे[5] वा सर्व्वेषां भोजनं शुभम् ॥४८॥
गृहस्थस्याभग्नकांस्ये ताम्रपात्रे न चैव हि।
जलञ्च ताम्रपात्रेण न भुञ्जीत गृही क्वचित् ॥४९॥
मलमूत्रत्यागशौचं न कुर्य्यात्ताम्रवारिणा।
विलम्बभोजनं पापं पुण्यदं शीघ्रभोजनम् ॥५०॥
विप्राणामुपरोधेन नियमन्तु[6] त्यजेत् सकृत्।
बहूनां भुञ्जतां मध्ये नैकोऽश्नीयात्त्वरान्वितः ॥५१॥
वृथा न विकिरेदन्नं नोच्छिष्टः क्वचिद्व्रजेत्
श्लोकपाठं पुराणार्थं शास्त्रार्थकथनन्तथा ॥५२॥

---

१ C मत्स्यमांसं। २ C यशल्काञ्च। ३ A B C कल्पयेन्न।
४ A व्यञ्जनमादितः। ५ C ०पात्रे। ६ A नियमस्तु।

उच्छिष्टवदनो[1] नैव कुर्य्यान्मन्त्रं न चोच्चरेत् ।
क्षत्रियादिस्पृष्टमन्नं स्त्रीस्पृष्टञ्च विवर्ज्जयेत् ॥५३॥
शुना स्पृष्टञ्च दृष्टञ्च[2] वर्ज्जयेत् भोजनं द्विजः ।
मार्ज्जारो न स्वयं स्पृश्यो न तेन स्पृष्टमुञ्झयेत्[3] ॥५४॥
हस्तपात्रे वस्त्रपात्रे भूपात्रे नापि भुज्यते ।
मृत्पात्रेण नाम्बु पेयं पीतशेषञ्च वर्ज्जयेत् ॥५५॥
नोच्छिष्टे घृतमादद्यान्न भुञ्जीतानिवेदितम् ।
आर्द्रवासा नैकवासा न भग्नासनगस्तथा ॥५६॥
शयानः प्रौढपादश्च कृत्वा चैवावसक्थिकाम् ।
पिबेन्नाञ्जलिना तोयं न तोये मुखमर्पयन्[4] ॥५७॥
न च प्रातर्न सन्ध्यायां सार्द्धयामाधिके तथा ।
रात्रिकाले न भोक्तव्यं सुखरात्रिं विना नरैः ॥५८॥
अनावृते स्थले[5] नैव भुञ्जीत वै कदाचन ।
अर्द्धस्विन्नं प्रेतभक्ष्यं सुस्विन्नं देवसम्मतम् ॥५९॥
द्विःस्विन्नन्तु नरैर्भक्ष्यं त्रिस्विन्नं ब्रह्मगर्हितम् ।
एकस्विन्नं भानुशुद्धं पुनः स्विन्नं भवेद् यदि ॥६०॥
तद्द्विःस्विन्नन्तु भक्ष्यं स्यादन्यथा गर्हितं हि तत् ।
दग्धं दुष्कृमिदुष्टञ्च[6] दत्तञ्चावज्ञया च यत् ॥६१॥
न भोक्तव्यं पर्य्युषितं दृग्जिह्वाप्रीतिवर्ज्जितम् ।
इत्यादि भोजने धर्म्माः कथितास्ते द्विजोत्तम ॥६२॥

---

१ B ०वदनेनैव । २ B C दुष्टञ्च । ३ A ओञ्झयेत् ।
४ B मुखमर्पयेत् । ५ B C D अनावृतस्थले । ६ A दष्टृभिदुष्टञ्च ।

अन्ते गण्डूषमादृत्य माधुर्य्यान्तं[1] समापयेत्[2] ।
ततो मृद्भिर्हस्तवक्त्रदन्तान् संशोध्य यत्नतः ॥६३॥
मुखशुद्धिं ततः कुर्य्यात् [3][ताम्बूलतुलसीदलैः ।
श्रीहरिस्मरणेनापि[4] द्विराचम्य तथापि वा ॥६४॥

इति श्रीबृहद्धर्म्मपुराणे उत्तरखण्डे पञ्चमोऽध्यायः ॥०॥

---

१ D माधुर्य्यान्ते । २ C समर्पयेत् । ३ B omits the portion bracketted.
४ D ०स्मरणेवनै ।

# षष्ठोऽध्यायः ।

व्यास उवाच ।

अथ भुक्त्वा सुखीभूय पुराणश्रवणादिकम् ।
रात्रस्य दर्शनं कुर्य्यात्ततः सन्ध्यां समाचरेत् ॥ १ ॥
सन्ध्या[1]प्रदीपं प्रज्वाल्य प्रणमेत्तदनन्तरम् ।
एकदा जलवह्नी च नाहरेद्वै कदाचन ॥ २ ॥
शास्त्रचिन्तां भोजनञ्च शयनं गमनन्तथा ।
मैथुनञ्च तथा क्रीडां सन्ध्याकाले विवर्ज्जयेत् ॥ ३ ॥
कृतपादादिशौचन्तु भुक्त्वा सायं ततो गृही ।
गच्छेच्च शय्यां स्फुटितामपि दारुमयीं शुभाम् ॥ ४ ॥
[2]न विशालांन वा भग्नां नासमां[3] मलिनां न च ।
न च जन्तुमयीं शय्यामवतिष्ठेदनावृताम् ॥ ५ ॥
प्राच्यां दिशि शिरः शस्तं याम्यायामथवा द्विज ।
सदैव स्वपतः शस्तं विपरीतन्तु रोगदम् ॥ ६ ॥
नमो नन्दीश्वरायेति यश्चोक्त्वा[4] सुप्यते नरः ।
तस्य कुष्माण्डराजेभ्यो न भविष्यति वै भयम् ॥ ७ ॥
पद्मनाभं नमस्कृत्य नागदेवीं तथोरगान् ।

---

१ B सन्ध्यां । २ C नाविशालां । ३ B न समां । ४ B अः कृत्वा ।

गृहदेवं[1] तथा नत्वा गृही शयनमाचरेत् ॥८॥
न तैलाक्तो नार्द्रवासा नार्द्रपादो न चर्म्मणि[2] ।
नैवोत्तरशिरा[3] सुप्येन्[3] नग्नोऽपि शयीत च ॥९॥
गृहमूर्द्धप्रकाष्ठस्य दैर्घ्यं नानुशयीत च ।
न कुर्य्यात् शयनात्पूर्व्वमनिष्टचिन्तनं नरः ॥१०॥
दारोपगमनं कुर्य्यात् सकामस्त्वृतुसङ्गतौ ॥११॥
चतुर्द्दश्यष्टमी चैव ह्यमावास्याथ पूर्णिमा ।
पर्व्वाण्येतानि राजेन्द्र[4] रविसङ्क्रान्तिरेव च ॥१२॥
स्त्रीतैलमांससम्भोगी पर्व्वस्वेतेषु वै पुमान् ।
विण्मूत्रभोजनन्नाम प्रयाति नरकं मृतः ॥१३॥
अभ्यङ्गक्षौरमांसानि योषित्सङ्गं तथाखिलम् ।
नन्दारिक्ताजयापूर्णाभद्रासु नाचरेत् क्रमात् ॥१४॥
अभ्यङ्गं योषित्सङ्गञ्च क्षौरं मांसञ्च वर्जयेत् ।
अर्के बुधे कुजे शुक्रवारयोश्च[5] क्रमान्नरः ॥१५॥
तैलं हस्तासु चित्रासु श्रवणासु च वर्जयेत् ।
क्षौरं वर्ज्यं विशाखायां मूले भाद्रपदे मृगे ॥१६॥
मांसं वर्ज्यं योषितञ्च [6]मघावत्युत्तरेषु च ।
अनृतौ तु स्त्रियं गच्छेत् सकामां कामभाववान् ॥१७॥
षोडशर्त्तुर्निशा नारी ऋतुशब्देन कथ्यते ।

---

१ C °देवीं । २ B नार्द्रपादोपचर्म्मणि । ३ C स्वप्येत् ।
४ A C D पर्व्वाण्येतानि चोक्तानि । ५ A D अर्के बुधे कुजे शुक्रकुजयोश्च ।
६ B मूला° ।

तत्र युग्मासु पुंसङ्गात् पुत्रं सूते द्विजोत्तम ॥१८॥
एवं तुभ्यं निगदितं गृहिणां दारसेवनम्[१] ।
सामान्यधर्म्मान् गृहिणां निबोध कथयामि ते ॥१९॥
उच्छिष्टञ्च मलं मूत्रं श्मशानं पादताडनम् ।
जलेषु वर्जनीयानि वह्नावपि शमिच्छुभिः ॥२०॥
जलाग्निसम्मुखे नापि मलं मूत्रञ्च संत्यजेत् ।
परिदध्यादम्बरो वस्त्रं दशा नाभौ प्रयोजयेत् ॥२१॥
पूर्व्वधौतं स्त्रिया धौतं यद्धौतं रजकैरपि ।
तदधौतं विजानीयाद्दशा दक्षिणपश्चिमे ॥२२॥
विचित्रवर्णसूत्रञ्च पूजायां वसनं त्यजेत् ।
पूर्व्वास्य उत्तरास्यो वा पूजां कुर्य्याद् यथाविधि ॥२३॥
यवनान्त्यजकाकश्वालोकितं दूष्यते[२] द्विज ।
पूजाश्राद्धादिकं द्रव्यं तस्मात्तत्परिवर्जयेत् ॥२४॥
मलिने च तथा भग्ने शूद्रव्यवहृते तथा ।
वस्त्रपात्रादिपूजा[३] च वृथास्यूते[४] च वाससि ॥२५॥
[५][सन्यासिनि[६] ब्राह्मणे च समायातेऽतिथौ गृही ।
पूजां श्राद्धं तथारब्धं तत्पूजानन्तरं चरेत् ॥२६॥
आसनं वसनं शय्या दाराः पुत्रः कमण्डलुः ।
आत्मनः शुचीन्येतानि[७] न परेषां कदाचन ॥२७॥

१ A B C दारदेवनं । २ B D दृश्यते । ३ A वस्त्रपादादिपूजा च ।
४ D वृथा स्युक्ते च । ५ B omits the portion bracketted.
६ A B D सन्ध्यासिनि । ७ C D शुचिरेतानि ।

तस्मात् परासनादौ तु नैव देवान् प्रपूजयेत् ।]
पूजयंस्तु गुरुं दृष्ट्वा त्यजेत् पूजां मुदान्वितः ॥२८॥
त्यागाय पीड्यत्येव मलं नाभेरधोगतम् ।
तत्त्यागाय बहिर्दूरं पूजां कुर्व्वन्नपि व्रजेत् ॥२९॥
ततः पुनः शुचीभूयाचम्य कृत्वात्मशोधनम् ।
अवशिष्टक्रियां कुर्य्यात् स्नायात् स्पृष्टोऽन्त्यजादिभिः ॥३०॥
गवां सेवा तु[1] कर्त्तव्या गृहस्थैः पुण्यलिप्सुभिः ।
गवां सेवापरो यस्तु तस्य श्रीर्वर्द्धतेऽचिरात् ॥३१॥
ब्राह्मणानां तथाग्नीनां गुरूणाञ्च गवान्तथा ।
स्त्रियाञ्च देवलिङ्गानां न गच्छेन्मध्यतः क्वचित् ॥३२॥
युध्यतां वदताञ्चैव[2] सर्व्वेषामपि सर्व्वदा ।
मध्येन[3] नैव गन्तव्यं तृणाभ्यन्तरतो व्रजेत् ॥३३॥
गुरुर्गङ्गा च माता च पिता सूर्य्येन्दुवह्नयः ।
प्रत्यक्षदेवता एताः पतिः स्त्रीणां तथा स्मृतः ॥३४॥
ब्राह्मणाश्च स्त्रियो गावो विरक्ताश्च[4] तथातिथिः ।
गावो यत्र तु तिष्ठन्ति तत्स्थानं नियतं शुचि ॥३५॥
गवां स्पर्शेन सर्व्वाणि संशुद्ध्यन्त्येव सर्व्वथा ।
गवां मूत्रं[5] पुरीषञ्च पवित्रं परमं मतम् ॥३६॥
क्षीरं दधि घृतञ्चैव भोजने ह्यमृतोपमम् ।
एतैर्विना भोजनञ्च वृथाभोजनमिष्यते ॥३७॥

---

१ B सेवादि । २ A ०वक्रे C चापि । ३ B तन्मध्ये । ४ B विविक्ताश्च ।
५ B गवीमूत्रं ।

विशेषतो ब्राह्मणस्तु ना[१]गव्यं भोजनश्चरेत् ।
उपेक्ष्यं सर्व्वमेव स्यान्न तु गव्यं कदाचन ॥३८॥
गोमूत्रं गोमयं क्षीरं दधि सर्पिस्तथोत्तमम् ।
पञ्चगव्यमिदं प्रोक्तं स्नानीयं सर्व्वदैवतैः ॥३९॥
भूसुरा ब्राह्मणाः प्रोक्ता गव्यञ्चापि धरामृतम् ।
गव्यभोजी सदा विप्रो ह्यमरत्वमवाप्नुयात् ॥४०॥
ताडनं खिंयतां वाक्यं स्पर्शनं[२] शालपचतः ।
पादाघातं भत्तरोधं वर्ज्जयेद्गोषु मानवः ॥४१॥
गोगृहे तुषधूमञ्च चौरञ्चामिषभोजनम् ।
पीठासनं प्राणिदाहं[३] व्यायामं मैथुनन्तथा ॥४२॥
मिथ्यावाक्यं प्राणिहिंसां भ्रष्ट[४]द्रव्यस्य भोजनम् ।
परान्नभोजनञ्चैव द्वादशैव विवर्जयेत् ॥४३॥
गवापराध[५]दण्डञ्च गृहस्थानां न कारयेत् ।
एतान् द्विजेन्द्र गोधर्म्मान् गृही कुर्य्यात् सुखं लभेत् ॥४४॥
कृषकस्तु वाहयेद्गाः[६] सार्द्धं प्रहरमेव हि[७] ।
ततोऽधिकं वाहयन् गा[८] गोवध्यापातकी भवेत् ॥४५॥
उच्छिष्टान्नं तथा गोभ्यो न दद्यान्मानवः क्वचित् ।
यात्राकाले सवत्साञ्च धेनुं दृष्ट्वा सुखं व्रजेत् ॥४६॥
दधि शुक्लञ्च कुसुमं सुन्दरीं हस्तिनं हयम् ।

---

१ B omits ना A ब्राह्मणो वा गव्यं । २ C स्पर्शञ्च ।
३ B प्राणिदाहं । ४ B C D भ्रष्टे॰ । ५ A परापराध॰ ।
६ C गां । ७ D सार्द्धप्रहरमेव हि । ८ C गां ।

दूर्व्वाञ्च शुक्लधान्यञ्च जलपूर्णं घटन्तथा ॥४७॥
शिवां विप्रं शङ्खचिह्नं[1] खञ्जनं मञ्जनन्तथा।
परार्थञ्च परेणोक्तं मङ्गलं वचनन्तु यत् ॥४८॥
विल्ववृक्षं मौक्तिकञ्च शङ्खं जिगमिषुः स्मरेत्।
दूरदेशं न चैकाकी चितयी च न हि व्रजेत् ॥४९॥
भद्राञ्च वारवेलाञ्च रिक्तां पापदिनानि च।
तिथिवारेषु दिग्दोषान्[2] वर्जयित्वा सुखं व्रजेत् ॥५०॥
आषाढीकार्त्तिकीमाघीवैशाखीषु द्विजोत्तम।
रविसङ्क्रमणेऽमायां[3] युगाद्यास्वन्तरासु च ॥५१॥
व्यतीपाते[4] च पुष्यायां ग्रहणे चन्द्रसूर्य्ययोः।
माघे मासि च सप्तम्यां भाद्रकृष्णाष्टमीदिने ॥५२॥
शिवरात्रिचतुर्दश्यां महापूजादिनेषु च।
अमावास्या भौमचतुर्थ्यी गुर्व्वष्टम्यर्कसप्तमी ॥५३॥
आर्द्रार्क्षे जन्मदिवसे एकादश्यां दिनत्रये।
अर्द्धोदये च वारुण्यां कुर्य्यात्स्नानं मनःप्रियम्[5] ॥५४॥
तीर्थस्नानं साधुसङ्गं देवताराधनन्तथा।
पुराणश्रवणञ्चैव [6][मिष्टं भुञ्जीत भोजयेत् ॥५५॥
राजसन्दर्शनञ्चैव] कलहादिविवर्जनम्[7]।

---

१ A B C शङ्खचिह्नं। २ B D दिग्देशान्। ३ B D रविसङ्क्रममायायां C रविसङ्क्रमणेऽमीषां युगाद्यासूत्तरासु च। ४ D व्यतिपातेषु। ५ C मनः सुखं। ६ B omits the portion bracketted. ७ B D विवर्ज्जितं।

कुर्य्याच्च मैथुनत्यागं नदीलङ्घनवर्जनम्[1] ॥५६॥
आमिषञ्च त्यजेत् पृथ्वीखननं वाहनं गवाम्।
वस्त्रस्य चारसंयोगं दन्तधावनमेव च ॥५७॥
त्यजेद्गृही[2] च जावाले ह्यन्यथा नारकी भवेत्।
गृहस्थस्तु स्वयं राजा नावमन्येत तं परः[3] ॥५८॥
स दण्डकर्त्ता गार्हस्थ्ये भृत्यपुत्रादिकेष्वपि।
[4]कालसन्धौ तु सूर्य्यस्य न भुञ्जीरन् द्विजातयः।
वृथाचेष्टां वृथावाक्यं न गृहस्थः समाचरेत् ॥५९॥
विवस्त्रां न स्त्रियं पश्येज्जरतीं युवतीन्तथा।
अविरक्तस्य पुंसस्तु न लिङ्गमवलोकयेत्[5] ॥६०॥
न स्त्रियो दर्शयेल्लिङ्गं[6] पश्युवत्ता न कामयेत्।
[7]वैतालव्रतिको न स्यान्न वकव्रतिकोऽपि च ॥६१॥
धर्म्मध्वजी च्छद्महिंसी शठोऽधोदृष्टिकस्तु वा।
नृत्यं गीतञ्च वाद्यञ्च न कुर्य्याद् यशसे द्विज ॥६२॥
चिकित्सकस्य भिक्षोश्च तथा वार्द्धुषिकस्य च।
पाषण्डस्य च नैवान्नं भुञ्जीत नास्तिकस्य च ॥६३॥
नैकः सुप्याच्छून्यगेहे सुप्तं नैव प्रबोधयेत् ॥६४॥
यस्या योनिर्व्यावृत्ता स्यात्तथा वाश्वखुराकृतिः।
[8]तां नोपगच्छेद्वनितां पर्णाकृतिभगां व्रजेत् ॥६५॥

---

१ C नदीलङ्घनमेव च। २ C हूरन्तु। ३ C नावमन्ये ततः परं। ४ A B D omit this line. ५ D अवधारयेत्। ६ B पार्श्वं। ७ D वैडालव्रतिको। ८ B reads तां नोपगच्छेद्वनितां तस्याः पुत्रोऽप्यधार्म्मिकः। कूर्म्मपृष्ठभगां गच्छेत्तथा पर्णाकृतिं भगां॥

तस्यां पुत्रः समुत्पन्नो धर्म्मकामार्थ[1]कृद्भवेत् ।
सुलक्षणेन पुत्रेण हेतुना भाग्यवान् पुमान् ॥ ६६ ॥
औरसः क्षेत्रजो दत्तः कृत्रिमो गूढसम्भवः ।
अपविद्धश्च कानीनः सहोढः क्रीत एव च ॥ ६७ ॥
पौनर्भवः स्वयं दत्तः शौद्रो द्वादश पुत्रकाः ।
दायादा आदिमाः षट् स्युर्लघुत्वश्चोत्तरोत्तरम् ॥ ६८ ॥
विधिसंस्कारलब्धायां भार्य्यायां जात औरसः ।
स्वक्षेत्रे परशुक्रेण जनितः क्षेत्रजः सुतः ॥ ६९ ॥
आपत्काले पितृभ्यान्तु दत्तोऽद्भिर्दत्त[2] उच्यते ।
परपुत्रः स्वपुत्रत्वे कल्प्यते स तु कृत्रिमः ॥ ७० ॥
अज्ञातजन्मा स्वगृहे उत्पन्नो गूढजोऽस्य सः ।
मात्रा पित्राथवोत्सृष्टो गृह्यते सोऽपविद्धकः ॥ ७१ ॥
कन्यया[3] जनितः पुत्रः कानीनः पितृवेश्मनि ।
पुत्रार्थदत्त[4]कन्यायाः सुतः कन्यापितुः स च ॥ ७२ ॥
गर्भिण्या दैवलब्धायाः संस्कर्त्तुः स्यात् सहोढकः ।
मूल्यक्रीतस्त्वपत्यार्थे पुत्रः स क्रीत उच्यते ॥ ७३ ॥
नार्य्या पत्यन्तरं कृत्वा कृतः पौनर्भवः सुतः ।
स्वयं यः[5] पुत्रतामेति स्वयं दत्तः परस्य सः ॥ ७४ ॥
शूद्रायां ब्राह्मणाज्जातः शौद्रः पारशवः स्मृतः ।
कल्प्यापविद्धक्रीताद्याः पञ्चवर्षाधिकाः कृताः ॥ ७५ ॥

---

१ C ०कर्म्मार्थकृत् ।   २ D ०द्भिर्दत्तः ।   ३ B कन्याया D कन्यायां ।
४ D ०पुत्रार्थदत्तः ।   ५ B·D च ।

न भवन्ति हि ते पुत्रा भरणार्थास्तु केवलम् ।
संस्कारेणापि चैकेन स्वयं दत्तस्य पुत्रता ॥७६॥
सोदराणान्तु भ्रातॄणां पुत्रिणैकतरेण[1] वै ।
पुत्रवन्तस्तु सर्व्वे स्युरेकपत्न्य[2]स्तथा स्त्रियः ॥७७॥
पुत्रेष्वेतेषु यः प्रोक्त औरसः पितृदायभाक् ।
शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम् ॥७८॥
शुक्रं ब्रह्महविः प्रोक्तं कामाग्निगलितं भवेत् ।
विवाहसंस्कृतायान्तु नार्य्यां कामानले क्षिपेत् ॥७९॥
फलन्तस्य सुतोत्पत्तिः पावनी पुनरिष्टिदा ।
अयोनौ परयोनौ च तस्मात् शुक्रं न निक्षिपेत् ॥८०॥
शुक्रव्ययं वाग्व्ययञ्च नैव कुर्य्याद्वृथा क्वचित् ।
भगलिङ्गादिशब्दञ्च नोच्चरेत् परगोचरम् ॥८१॥
उच्चरेदाश्विने मासि महापूजादिनेषु हि ।
मातॄणाञ्च सुतानाञ्च समीपे न तदापि च[3] ॥८२॥
अशक्तिदीक्षितायाश्च शिष्यायाः सन्निधौ न च ।
देवी हि भगरूपेत भगलिङ्गरसप्रिया ॥८३॥
तस्मात्तत्प्रियकाम्यायै तत्पूजार्हस्तथा वदेत् ॥८४॥
जननी गुरुपत्नी च ज्येष्ठसोदरपत्निका ।
श्वश्रूर्ज्येष्ठसोदरा च पितृव्यस्त्री च मातुली ।
मातुः पितुः स्वसारौ च नवेमा[4] मातरः स्मृताः ॥८५॥

---

१ C पुत्रेण । २ A B D एकपत्युः । ३ B कदापि च, D कदाचन । ४ D नवमो ।

पुत्री कनिष्ठसोदर्य्या पुत्रभार्य्या तथैव च।
कनिष्ठसोदरस्त्री च शिष्या पुत्रवधूस्तथा ॥८६॥
भ्रातुष्पुत्री[1] भागिनेयी नवमी शरणागता।
सुताः पर्य्यायतस्त्वेताः स्नेहशासनभाजनम् ॥८७॥
अष्टादशस्त्रियस्त्वेता याश्च तच्छन्दभाषिताः।
अकामसम्मताश्चापि पतेदुपगतः क्षणात् ॥८८॥
म्लेच्छाश्च यवनीश्चैव गत्वा जात्याः परिच्यवेत्[2]।
कौलो[3]ऽप्येतासु सङ्गम्य देवताशापमाप्नुयात् ॥८९॥
दुरूहं शक्त्यनुष्ठानं तत्र मुह्यन्ति सूरयः।
असङ्कुं शिववाक्यञ्च योगपन्थानमुत्तमम् ॥९०॥
तस्माद्योगप्रियां देवीं भजन् कुर्व्वन्नदोषभाक्।
त्रिषु भावेषु यो भावो वैष्णवक्रम दृश्यते ॥९१॥
भावः पापचयायासौ प्रथमः परिकल्प्यते।
कल्प्यते मध्यमो भाव स्तत्रानुष्ठानभूतयः ॥९२॥
भजतां यत्नसम्पन्ना भवन्तीष्टप्रपूर्त्तये।
दिव्यस्तृतीयो भावो यस्तत्रानुष्ठानभूतयः ॥९३॥
भवन्त्ययत्नसम्पन्ना देवतालाभकारणम्।
तस्माद्धर्म्मं परं सूक्ष्मं बुध्यमानोऽहि सर्व्वदा ॥९४॥
कर्म्म देवपराणां हि न प्रशंसेन्न[4]गर्हयेत्।
अधर्म्मवत् प्रकाशन्तो न सङ्गोरंस्तु[5] सत्पथाः ॥९५॥

---

१ A B भ्रातुष्पुत्र। २ C D परित्यजेत्। ३ C कलौ।
४ D °मु। ५ A B D omit स्तु।

यथारुचि भवेत्सर्व्वा देवता फलतः समाः ।
भजन्नेकां परां निन्दन् भजते नरकाय तत् ॥९६॥
विप्रः स्वकर्म्मयोगेन मनुष्यवलिना शिवाम् ।
नार्च्चयेन्मत्स्यमांसाभ्यां काले शास्त्रनिषेधिते ॥९७॥
न रात्रौ दधि भुञ्जीत तिक्तशकुतिलांस्तथा ।
न कुर्य्यान्मन्त्रणं दानं प्रणामञ्चाशिषां वचः ॥९८॥
कर्णनासिकयोः काष्ठं कण्डूतिं नापि चाचरेत् ।
उच्चैःशब्देन चाक्रानं परनिन्दनमेव च ॥९९॥
एतानि किल कर्म्माणि रात्रौ नैवाचरेद्बुधः ।
शयनं मैथुनं स्त्रीभिः परिहासं दिनेषु च ॥१००॥
न कुर्य्याद्द्वारुपादाभ्यां रक्ताभ्यामथ निर्गमम् ।
कुर्य्यात् गृहस्थः सर्व्वेषां देवानामुत्सवक्रियाम् ॥१०१॥
प्रत्यहं सर्व्वदेवानां पूजा कार्य्या यथामति ।
सर्व्वं[१] देवार्पणं कुर्य्याद् गृहस्थः सर्वमैहिकम् ॥१०२॥
एवं ते कथिता धर्म्मा गृहस्थानां द्विजोत्तम ।
वानप्रस्थभिक्षुकयोः शृणुष्वाचारान् यथामति ॥१०३॥

इति श्रीबृहद्धर्म्मपुराणे उत्तरखण्डे गृहधर्म्मकथनं नाम षष्ठोऽध्यायः ॥०॥

---

१ B D कर्म्म ।

## सप्तमोऽध्यायः ।



व्यास उवाच ।

गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः ।
अपत्यस्यैवचापत्यं तदारण्यं समाश्रयेत् ॥ १ ॥
मार्कण्डेयपुराणस्थं चण्डीसप्तशतीस्तवम् ।
गीताशास्त्रं भारतीयं विप्रः सर्व्वाश्रमे पठेत् ॥ २ ॥
अकुर्वन्नीदृशं कर्म्म वृथाजन्मत्वमाप्नुयात् ।
चण्डीं गीतां हरेर्नाम गङ्गास्नानं तथाद्रियन् ॥ ३ ॥
विरक्तो ग्राम्यमाहारं त्यक्त्वा चैव परिच्छदम् ।
पुत्रेषु भार्य्यां निःक्षिप्य वनं गच्छेत् सहैव वा ॥ ४ ॥
मुन्यन्नैर्व्विविधैर्मेध्यैः शाकमूलफलेन च ।
एतानेव महायज्ञान्निर्व्वपेद्विधिपूर्व्वकम् ॥ ५ ॥
प्रातःस्नायी चीरवासा जटाश्मश्रुनखान्वितः ।
स्वाध्यायैर्नित्ययुक्तः स्याद्दान्तो मैत्रः समाहितः ॥ ६ ॥
वैतानिकञ्च जुहुयादग्निहोत्रं यथाविधि ।
दर्शमस्कन्दयन् पर्व्व पौर्णमासञ्च योगतः ॥ ७ ॥
ऋक्षेष्ट्याग्रयणञ्चैव[१] चातुर्म्मास्यानि चाहरेत् ।

१ B, C ०श्रयणं, D ०श्रयणा ।

उप्त्वा चरुं पुरोडाशान् कृत्वा देवेभ्य एव च ॥८॥
शेषमात्मनि युञ्जीत लवणञ्च स्वयं कृतम्।
नक्तञ्चान्नं समश्नीयाद्दिवा वाहृत्य वा सकृत्[1] ॥९॥
अप्रयत्नसुखार्थेषु ब्रह्मचारी धराशयः।
शयनेष्वममस्चैव[2] वृक्षमूलनिकेतनः ॥१०॥
गृहमेधिषु विप्रेषु तापसार्ण्यवासिषु।
ग्रामादाहृत्य वाश्नीयादष्टौ ग्रासान् वने वसन् ॥११॥
अपराजितां वास्थाय दिशं गच्छेदजिह्मगः।
आनिपाताच्छरीरस्य युक्तो वार्य्यनिलाशनः ॥१२॥
तृतीयमायुषो भागं विहृत्यैवं वनेषु तु।
चतुर्थमायुषो भागं त्यक्त्वा सङ्गं परित्यजेत् ॥१३॥
आश्रमादाश्रमं गच्छेद्धुतहोमो जितेन्द्रियः।
ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ॥१४॥
अधीत्य वेदानुत्पाद्य पुत्रान् कृतवनाश्रमः।
इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत् ॥१५॥
अनधीत्य द्विजो वेदाननुत्पाद्य सुतानपि।
अनिष्ट्वा चैव यज्ञैश्च मोक्षमिच्छन् व्रजत्यधः ॥१६॥
प्राजापत्यां निरूप्येष्टिं सर्ववेद[3]सदक्षिणाम्।
आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद्गृहात् ॥१७॥

---

१ B चाहृत्य वा हृतं। २ B D शरणेष्वममस्चैव।
३ B सर्व्वदेव०।

एक एव चरेन्नित्यं सिद्धिमेकस्य लक्षयन्।
कपालं वृक्षमूलानि कुचेलमसहायता ॥१८॥
समता चैव सर्व्वत्र एतन्मुक्तस्य लक्षणम्।
मृत्युं वा जीवितं वापि नाभिनन्देत् कदाचन ॥१९॥
सत्यपूतां वदेद्वाचं दृष्टिपूतं न्यसेत्पदम्।
वस्त्रपूतं पिबेदम्भो मनःपूतं समाचरेत् ॥२०॥
अभिवादांस्तितिक्षेत नावमन्येत कञ्चन।
न चेमं देहमाश्रित्य वैरं कुर्व्वीत केनचित् ॥२१॥
अतैजसानि पात्राणि तस्य स्युरव्रणानि च।
अलाबुं[1] दारुपात्रञ्च मृण्मयं वैदलन्तथा[2] ॥२२॥
एतानि यतिपात्राणि मनुः स्वायम्भुवोऽब्रवीत् ॥२३॥
एककालञ्चरेत् भैक्ष्यं न प्रसज्येत[3] विस्तरे।
भैक्ष्ये प्रसक्तो हि यतिर्विषयेष्वपि सज्जते ॥२४॥
विधूमे सन्नमूषले व्यङ्गारे भुक्तवज्जने।
वृत्ते शरावसम्पाते भिक्षां नित्यं यतिश्चरेत् ॥२५॥
अतिपूजां तथालाभं गौरवं निन्दनन्तथा।
इच्छन् यतिर्याति पापमिन्द्रियाणां सुखस्पृहाम् ॥२६॥
निमन्त्रितो ब्राह्मणेन भिक्षां कुर्व्वीत वै यतिः।
अनिमन्त्रणतो वापि गृहस्थैः पूजितो भवेत् ॥२७॥
प्राणायामैर्दहेद्देहं धारणाभिश्च किल्बिषम्।

---

१ A, D अलाबिं। २ C, वैणवन्तथा। ३ A B D ॰ज्जेत।

प्रत्याहारेण संस्पर्शान् ध्यानेनानीश्वरान् गुणान् ॥ १८॥
जराशोकसमाविष्टं रोगायतनमातुरम् ।
रजस्वलमनित्यञ्च भूतावासमिमं त्यजेत् ॥ १९॥
प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम् ।
विसृज्य ध्यानयोगेन ब्रह्माभ्येति[1] सनातनम् ॥ २०॥
गृहस्थस्य गृहे तिष्ठेद्गोदोहमात्रकालतः ।
तेन दत्तञ्च भुञ्जीत मधुमांसविवर्जितम् ॥ २१॥
त्यजेदसत्कथां नित्यं क्रीड़ाञ्च परनिन्दनम् ।
तीर्थसेवा देवपूजा दिवाकालं प्रयापयेत् ॥ २२॥
अयं भिक्षुविधिः प्रोक्तो जाबाले तुभ्यमुत्तमः ।
ध्यानिकं सर्वमेवैतद्यदेतदभिशब्दितम् ॥ २३॥
गृहस्थप्रभवद्वारा आश्रमाः सर्व एव हि[2] ।
सर्वेषामाश्रमाणां हि गृहस्थः श्रेष्ठ उच्यते
तेषां हि सेवया गेही तद्गतिं समवाप्नुयात् ॥ २४॥
यथा नद्यो नदाश्चापि सागरं यान्ति संस्थितिम् ।
एवमाश्रमिणः सर्वे गृहस्थं यान्ति संस्थितिम् ॥ २५॥
यथा समुद्रमाश्रित्य सर्वे जीवन्ति जन्तवः ।
तथा गृहस्थमाश्रित्य सर्वे जीवन्ति भिक्षुकाः ॥ २६॥
धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
ह्रीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणं ॥ २७॥
एवं सन्न्यस्य कर्म्माणि स्वकार्य्यपरमोऽस्पृहः ।

१ A B ०त्येति । २ C सर्व्वमेव हि ।

सन्न्यासे नापहत्येनः[1] प्राप्नोति परमां गतिम् ॥३८॥
न सन्न्यासात् परो धर्म्मो वर्त्तते मुक्तिकारणम्[2] ।
ब्रह्मचर्य्यविप्रःस्यैव सन्न्यासधर्म्मं इष्यते ॥३९॥
विशेषतः कलौ धर्म्मः सन्न्यासाख्यो हि दुर्घटः ॥४०॥
एष ते कथितो धर्म्मो यतीनां द्विजपुङ्गव ।
श्रोतुमिच्छसि जावाले किमन्यद्वदतो मम[3] ॥४१॥

इति श्रीबृहद्धर्म्मपुराणे उत्तरखण्डे वानप्रस्थयतिधर्म्मकथनं
नाम सप्तमोऽध्यायः ॥०॥

---

१ C ०पहत्य। २ C ०कारकं। ३ C वदतान्मम।

# अष्टमोऽध्यायः ।

जावालिरुवाच ।

स्त्रीधर्म्मान् वद मे ब्रह्मन् वेदव्यास जगद्‌गुरो ।
यद्‌यच्चरित्रं तासां हि स्त्रीणां भवति तद्वद ॥१॥

व्यास उवाच ।

अचतन्वा भवेन्नारी सलज्जा स्मितभाषिणी ।
अनालस्या सदा स्निग्धा मितवाग्लोभ[१]वर्जिता ॥२॥
नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम् ।
पतिं शुश्रूषते या तु सैव स्वर्गे महीयते ॥३॥
मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्य्ये व्यवस्थिता ।
स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः ॥४॥
अपत्यलोभाद्‌या स्त्री तु भर्त्तारमतिवर्त्तते ।
सेह निन्दामवाप्नोति पतिलोकाच्च हीयते ॥५॥
एक एव हि नारीणां पतिर्विप्रो[२]पदृश्यते ।
उत्कृष्टमपकृष्टम्वा नैव नारी पतिं त्यजेत् ॥६॥
सधवानां हि नारीणां नोपवासादिकं व्रतम् ।
पत्याज्ञया चरेद्‌ यत्तु तत्तु तासां व्रतं परम् ॥७॥

---

१ C D मितराग्लोभ० । २ C विप्रोऽपि ।

मृतं पतिञ्चानुमृतिं[1] कुर्य्यान्नारी पतिव्रता।
महद्भ्योऽपि च पापेभ्यः पतिमुत्तारयेत्तु सा ॥८॥
नातः परतरं धर्म्मं[2] योषितां विद्यते द्विज।
यतो मन्वन्तरं कालं मोदते पतिना दिवि ॥९॥
पत्युश्चिरमृतस्यापि प्रियद्रव्येण तन्मनाः।
प्रविश्याग्निञ्चानुमृता तथागतिमवाप्नुयात् ॥१०॥
विधवानां हि नारीणां ब्रह्मचर्य्यं सदैव हि।
न गृह्णीयाद्रक्तवर्णं न खट्वां मैथुनं न च ॥११॥
पतिपुत्रविहीना तु नार्य्यवीरा हि कथ्यते।
अवीरा च द्विधा प्रोक्ता दत्तादत्ता च भेदतः ॥१२॥
अदत्तायास्तु मात्रादि गृह्णीयान्मानवः क्वचित्।
दत्तायास्तु हि गृह्णीयात् सम्बन्धगौरवं यदि ॥१३॥
दन्तुरा विरलाङ्गा च भालोच्चा विरलस्तना।
दीर्घा च त्यक्तलज्जा च स्त्रीयं वैधव्यलक्षणा ॥१४॥
कौटिल्यञ्चापि मौखर्य्यं ज्ञेयं स्त्रीषु च तासु हि।
इमे धर्म्मास्त्र[3] कथिताः स्त्रीणां हि द्विजसत्तम ॥१५॥
ब्रह्मविष्ण्वादिदेवानां पूजाधर्म्मान्[4] शृणुष्व ह ॥१६॥

इति श्रीबृहद्धर्म्मपुराणे उत्तरखण्डे वानप्रस्थयतिधर्म्मकथनं नाम अष्टमोऽध्यायः ॥०॥

---

१ D मृतपत्युश्चानुमृतिं। २ D धर्म्मो। ३ C इमे हि धर्म्माः।
४ D पूजाधर्म्मं।

## नवमोऽध्यायः ।

व्यास उवाच ।

सर्व्वमङ्गलकार्य्येषु गणे[शार्क्काँ¹च्युताम्बिकाः ।
शिवश्च प्रश्चदेवान् वै पूजयेयुर्यथाविधि ॥१॥
इन्द्रमग्निं यमश्चैव नैर्ऋतं वरुणं तथा ।
वायुं कुवेरमीशानं ब्रह्मानन्तौ च पूजयेत् ॥२॥
सूर्य्यं सोमं कुजं सौम्यं गुरुं शुक्रं शनैश्चरम् ।
राहुं केतुञ्च संपूज्य ततः] कर्म्म समारभेत् ॥३॥
अवश्यमेते पूज्या वै सर्वकर्म्मसु सर्वशः ।
यदा यस्य व्रतविधौ पूजा भवति कारिता ।
तदामीषां विधायार्च्चां पुनस्तत्पूजनं करेत् ॥४॥
अथाविघ्नव्रतं देव कथयामि शृणुष्व तत् ।
गणेशव्रतमाख्यं²चतुर्थ्यां मासि फाल्गुने ॥५॥
नक्ताहारेण राजेन्द्र तिलान्नपारणं स्मृतम् ।
तेनैवाष्टाहुतीः कुर्य्यात्तान् दद्याद् ब्राह्मणाय च ॥६॥
चतुर्म्मासं व्रतञ्चैतत् कृत्वा तु मासि पञ्चमे ।
हैमं गणेशं कृत्वा तु ब्राह्मणाय प्रदापयेत् ॥७॥

---

१ B omits the portion bracketted.   २ B D ञ्चैव ।

आयसैः पञ्चभिः पात्रैरुपेतं घृतिलैस्तथा।
एवं कृत्वा व्रतं विप्र विघ्नसंघैः प्रहीयते॥८॥
दिव्याय शूराय गजाननाय लम्बोदरायैकरदायुधाय।
नगात्मजादेहसमुद्भवाय कुठारहस्ताय नमो वराय॥९॥
एवं संपूज्य स्तुतिभिः स्तुत्वा[1] निर्विघ्नतां व्रजेत्।
आषाढेऽपि चतुर्थ्यान्वे पूजयेद्वै गणेश्वरम्॥१०॥
वर्षद्वयव्रतमिदं तिलदानाशनान्वितम्।
एतेन तुष्टो हेरम्बो ददाति फलमीप्सितम्॥११॥
तिलोदकं तिलांश्चापि भुक्त्वैतद्[2] व्रतमाचरेत्।
अथ सूर्य्यव्रतं[3] वक्ष्ये शृणुष्व द्विजसत्तम॥१२॥
व्रतमारोग्यदं तत्तु सप्तम्यां मर्त्य आचरेत्।
षष्ठ्यां संयतभोजी च सप्तम्यामुपवासकृत्॥१३॥
अष्टम्यामुपभुञ्जीत एष एव विधिः स्मृतः।
एतेन विधिना पूर्णं वत्सरं योऽर्च्चयेद्रविम्॥१४॥
तस्यारोग्यं धनं धान्यमिह जन्मनि जायते।
परत्र स्थानममलं यद्गत्वा न निवर्त्तते॥१५॥
एवमन्यच्च कुर्य्याच्च व्रतमादित्यतोषणम्।
रविवारेषु[4] मार्त्तण्डं पूजयेद्भक्तिमान्नरः॥१६॥
नक्तञ्च भोजनं कुर्य्यात् स याति सुरलोकताम्।

---

१ B नत्वा॥ २ D भुक्त्वैव व्रतं। ३ B D अथारोग्यव्रतं।
४ D रविवारे च।

व्रतमन्यच्च[1] सूर्य्यस्य कथयामि निबोध तत्[2] ॥१७॥
रविवारे रवेर्या तु संक्रान्तिस्तत्र भास्करम् ।
पूजयेत्तत्क्रमशनं[3] आदित्यहृदयं जपेत् ॥१८॥
अथ वास्तमयं यावद्भास्करं चिन्तयेद्धृदि ।
ब्राह्मणान् भोजयेन्मिष्टं स्वयं पायसमात्रभुक् ॥१९॥
योऽत्र संपूजयेद्भानुं भक्तिश्रद्धासमन्वितः ।
स कामाल्लभते दिव्यानादित्यहृदयस्थितान् ॥२०॥
आदित्यहृदयं नाम मन्त्रं वक्ष्यामि ते शृणु ॥२१॥
आद्यो घृणि स्ततः सूर्य्य आदित्यः प्रणवात्मकः[4] ।
आदित्यहृदयो नाम मन्त्रोऽयं कथितस्तव ॥२२॥
व्रतमन्यच्च सूर्य्यस्य कथयामि निबोध तत् ।
माघमासस्य सप्तम्यां पूजयेद्भास्करं प्रभुम् ॥२३॥
हस्तायुक्ते[5] रविदिने पूजयेद्भास्करं तथा ।
सप्तम्यां सूर्य्यवारश्चे[6]त्कालेन लभ्यते क्वचित् ॥२४॥
स्नानं दानं तपो होम उपवासस्तथैव च ।
सर्वं विजयसप्तम्यां महापातकनाशनम् ॥२५॥
सप्तम्यां शुक्लपक्षे तु यदा संक्रमते रविः ।
महाजयाख्या सा प्रोक्ता सप्तमी रवितुष्टिदा ॥२६॥
स्नानदानादि कुर्वीत तत्र निर्विषमानसः ।
घृतेन पयसा वापि स्नापयित्वा दिवाकरम् ॥२७॥

---

१ D एवमन्यच्च । २ C तं । ३ C अस्तनं ।
४ C आदित्यप्रणवात्मकः । ५ D ०युक्त० । ६ C ०वारे चेत् ।

विमुक्तः सर्व्वपापेभ्यो याति सूर्य्यसलोकताम्[१] ।
संवत्सरव्रतमिदं सूर्य्यप्रीतीकरं परम् ॥२८॥
सर्व्वे वर्णाः कुर्य्युरेतद्व्रतं भास्करतोषणम् ।
अष्टाङ्गार्घ्यं रवेर्वक्ष्ये जावाले शृणु सादरः ॥२९॥
आपः क्षीरं कुशाग्राणि घृतं दधि तथा मधु ।
रक्तानि करवीराणि रक्तचन्दनमित्यपि ॥३०॥
दारुमृत्पात्रहैमाद्रिपात्रे फलमथोत्तरम् ।
शिवव्रतमथो वक्ष्ये शृणुष्वैकमना द्विज ॥३१॥
शुक्लपक्षे फाल्गुनस्य आरभ्यं[२] व्रतमुत्तमम् ।
संवत्सरं शिवः पूज्यः शुक्ल[३]कृष्णचतुर्द्दशी ॥३२॥
रात्रौ फलाशनं कुर्य्यात् ब्राह्मणान् भोजयेत्परे ।
ग्रीष्मे पञ्चतपाः सायं हेमधेनुप्रदो दिवम् ॥३३॥
कृष्णाष्टमीचतुर्द्दश्योर्याति रुद्रं सनातनम् ।
कार्त्तिक्याञ्च वृषोत्सर्गं कृत्वा नक्तं समाचरेत् ॥३४॥
शैवं पदमवाप्नोति शिवव्रतमिदं परम् ।
कृष्णाष्टम्यां मार्गशीर्षे नक्तंभोजी समर्च्चयेत्[४] ॥३५॥
अत्र गोमूत्रभोजी च अचिरात् समखद्वयम्[५] ।
लभते[६] पुण्यमतुलं व्रतमन्यच्च कथ्यते[७] ॥३६॥

---

१ C सूर्य्यस्य लोकतां । २ C आरभ्य । ३ D शुक्ले ।
४ A नक्तं भोजीश्रमर्च्चयेत् । ५ C अतिरात्रमखद्वयं ।
६ B लभ्यते । ७ C कथ्यते ।

पौषे मासि च संपूज्य शम्भुनामानमीश्वरम्।
[1]कृष्णाष्टम्यां [घृतं] प्राश्य वाजपेयफलं लभेत्॥३७॥
माघे महेश्वरं विप्र कृष्णाष्टम्यां प्रपूजयेत्।
निशि पीत्वा च गोक्षीरं गोमेधफलमाप्नुयात्॥३८॥
फाल्गुने शिवमभ्यर्च्य प्राशयेद्वै तिलान्नरः।
राजसूयस्य यज्ञस्य फलमष्टगुणं लभेत्॥३९॥
स्थाणुनामानमीशानं चैत्राष्टम्यां[2] प्रपूजयेत्।
यवान् वै भर्ज्जितान् प्राश्य सोऽश्वमेधफलं लभेत्॥४०॥
चैत्रे शिवोत्सवं कुर्य्यान्नृत्यगीतमहोत्सवैः।
स्नात्वा त्रिसन्ध्यं रात्रौ च हविष्याशी जितेन्द्रियः॥४१॥
शिवस्वरूपतां याति शिवप्रीतिकरः परः।
चत्रियादिषु यो मर्त्यो देहं संपीड्य भक्तितः॥४२॥
अश्वमेधफलं तस्य जायते च पदे पदे।
सर्वकर्मपरित्यागी शिवोत्सवपरायणः॥४३॥
भक्तैर्जागरणं कुर्य्याद्रात्रौ नृत्यकुतूहलैः।
नानाविधैर्महावाद्यैर्नृत्यैश्च विविधैरपि॥४४॥
नानावेशधरैर्नृत्यैः प्रीयते शङ्करः प्रभुः।
किमलभ्यं भगवति प्रसन्ने नीललोहिते॥४५॥
तस्मात्सर्वप्रयत्नेन तोषणीयो महेश्वरः।
शङ्खवाद्यं शङ्खतीयं वर्ज्जयेच्छिवसन्निधौ॥४६॥

---

१ B omits the portion bracketted. २ B C D. चैत्रे।

ग्रामाद्बहिरिमं शम्भोरुत्सवं कारयेन्मुदा ।
उपोष्य कृत्वा संक्रान्त्यां व्रतमेतत् समापयेत् ॥ ४७॥
वैशाखे शिवनामानं पूजयित्वा प्रयत्नतः ।
रात्रौ कुशोदकं पीत्वा सर्व्वमेधफलं लभेत् ॥ ४८॥
ज्यैष्ठे पशुपतिं[1] पूज्य गवां शृङ्गोदकं पिवेत् ।
गवां कोटिप्रदानस्य यत्फलं तदवाप्नुयात् ॥ ४९॥
उग्रनामानमाषाढे केवलं प्राश्य गोमयम् ।
वर्षाणान्तु[2] शतं साग्रं शिवलोके महीयते ॥ ५०॥
श्रावणे शर्व्व[3]नामानं भुञ्जीतार्करसं निशि ।
गोसवस्य[4] तु यज्ञस्य फलं प्राप्नोति मानवः ॥ ५१॥
भाद्रे मासि त्र्यम्बकाख्यं कृष्णाष्टम्यां प्रपूजयेत् ।
विल्वपत्ररसं भुक्त्वा वाजपेयफलं लभेत् ॥ ५२॥
आश्विने कुशनामानं[5] भुक्त्वा च तण्डुलोदकम् ।
पूजयेत् परया भक्त्या पौण्डरीकफलं लभेत् ॥ ५३॥
कार्त्तिके मासि चाष्टम्यामीशानाख्यं प्रपूजयेत् ।
निशायां गोमयं भुक्त्वा पञ्चयज्ञफलं लभेत् ॥ ५४॥
संवत्सरव्रतं कृत्वा विप्रान्मिष्टानि भोजयेत् ।
पायसं घृतसंयुक्तं घृतेन संपरिप्लुतम् ॥ ५५॥
निवेदयेत रुद्राय गां कृष्णाञ्च पयस्विनीम् ।

---

१ D पशुपतिः । २ A B वर्षाणां । ३ A B C सर्व्वं० ।
४ C गोदरस्य तु । ५ C D ईशनामानं ।

कृष्णाष्टमीव्रतमिदं कृत्वा दद्यात् सुदक्षिणाम् ॥५६॥
शिवव्रतमिदं प्रोक्तं सर्व्वाभीष्टप्रदं शुचि ।
अथातः शृणु वक्ष्यामि वैष्णवानि व्रतानि च ॥५७॥

इति श्रीबृहद्धर्मपुराणे उत्तरखण्डे वानप्रस्थयतिधर्मकथनं
नाम नवमोऽध्यायः ॥०॥

---

# दशमोऽध्यायः ।

——:o:——

व्यास उवाच ।

एकादशी तिथिः पुण्या वैष्णवी पापनाशिनी ।
शुक्ला वा यदि वा कृष्णा तत्रोपोष्य हरिं व्रजेत् ॥ १ ॥
एकादश्यां निराहारो द्वादश्यां पारणं चरेत् ।
एकादशीव्रतश्चैतत् द्वादशीव्रतमच्युत ॥ २ ॥
विष्णुर्हि दैवतं तस्यास्तस्याश्च द्विजसत्तम ।
नातः परतरं कर्म्म त्रिषु लोकेषु विद्यते[१] ॥ ३ ॥
एकादश्यां भोजनाच्च नान्यत् पापतरं परम् ।
यानि यानि च पापानि ब्रह्महत्यादिकानि च ॥ ४ ॥
अन्नमाश्रित्य तान्येव तिष्ठन्ति हरिवासरे ।
सर्व्वे वर्णाश्रमा याश्च स्त्रियश्चैकादशीपराः ॥ ५ ॥
प्राप्नुवन्ति गतिं दिव्यामन्यथा पापमाप्नुयुः ।
सधवानान्तु नारीणां रात्रौ पेयं जलं मतम् ॥ ६ ॥
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
वनस्थयतिधर्म्मोऽयं शुक्लामेव सदा गृही ॥ ७ ॥

---

१ C वर्त्तते ।

एकादश्यां समभ्यर्च्च्य केशवं देवकीसुतम् ।
धूपदीपादिनैवेद्यैः परमं पदमाप्नुयात्[1] ॥८॥
माससंवत्सरादौ तु व्रतमेतत् पृथक् फलम् ।
एवमन्यासु तिथिषु पूजयेद्विष्णुमव्ययम् ॥९॥
उत्सवांश्च प्रकुर्व्वीत नृत्यगीतमहोत्सवैः ।
अग्नौ विप्रे जले चैव शालग्रामे गुरौ तथा ॥१०॥
प्रतिमासु च संपूज्यः कृष्णः कमललोचनः ।
मासि मासि च नैवेद्य [2][विशेषैर्विष्णुमर्च्चयेत् ॥११॥
मार्गशीर्षे महाभाग नवान्नैः पूजयेद्धरिम् ।
पायसं शर्करा दुग्धं] दद्यात् कृष्णाय भक्तितः ॥१२॥
पौषे तु बालसूर्य्यस्य किरणैरर्च्चयेद्धरिम् ।
उष्णोदकैश्च स्नापयेत्[3] स्नेहेन च सुगन्धिना ॥१३॥
दद्याच्च सुघृतं चारु समुद्गमाषपाचितम् ।
शाल्यन्नं हिङ्गुपचादिविशेषसुरभीकृतम् ॥१४॥
सर्पिषा भर्जितं शाकं वास्तुकाख्यं तथा दधि ।
एवञ्च मासि माघे च[4] संपूज्यः पुरुषोत्तमः ॥१५॥
फाल्गुने मासि माषाणां पूपं दद्याद्घारये ।
गुडश्च विमलो देयो मुदा परमया युतः ॥१६॥
शाकं सचणकं पक्वं हिङ्ग्वादिसुरभीकृतम् ।

---

१ B D परं पदमवाप्नुयात् । २ B omits the portion bracketted. ३ C D स्नपयेत् । ४ C माघे मासे च ।

घृतञ्च गव्यं हरये दद्याद्दधि सशर्करम् ॥१७॥
फाल्गुन्यां पौर्णमास्याञ्च दोलयात्रा हरेः कृता ।
वने कुञ्जकुटीस्थाभिः[1] सुन्दरीभिर्द्विजोत्तम ॥१८॥
गोप्यो विमलकान्त्याढ्या वासोभूषणभूषिताः ।
हसन्त्यो हासयन्त्यश्च [2][स्मरव्याघूर्णितेक्षणाः ॥१९॥
गायन्त्यो वादयन्त्यश्च] नृत्यन्त्यश्च महामुदः ।
पुष्पालङ्कारभूषाढ्याः क्षिपन्त्यः पुष्पसञ्चयान् ॥२०॥
कौतुकाक्षिप्तमनसो गोविन्दलसिताम्बराः ।
गोविन्दं दोलयामासुः सन्धौ पञ्चतिपूर्णयोः ॥२१॥
चैत्रे च पूजयेद्विष्णुं सुगन्धकुसुमैः शुभैः ।
चन्दनैर्विविधैश्चैव कुङ्कुमाद्यनुलेपनैः ॥२२॥
आर्द्रकं[3] चारुनैवेद्यं दद्यात्कृष्णाय भक्तितः ।
अनिष्पन्नाष्टिकं विप्र दद्यादाम्रं सशर्करम् ॥२३॥
वैशाखे मासि गोविन्दं चारुशीतलवारिणा ।
स्नपयेच्चाभिषिक्तञ्च तुलसीदलमिश्रिणा[4] ॥२४॥
मुद्गविदलनैवेद्यं[5] दद्यात्ताम्बूलमेव च ।
दद्याच्च कारवेल्लान्नं[6] सघृतं विष्णवे नरः ॥२५॥
जलञ्च शीतलं दद्यात् सकर्पूरञ्च विष्णवे ।

---

१ D ०कुटस्थाभिः । २ B omits the portion bracketted.
३ B आर्दकं । ४ B D ०मिश्रिता । ५ C ०विमल० ।
६ A B कारवेल्लान्नं C दद्यादुकारये चान्नं ।

ज्यैष्ठे मासि च पक्वान्नं शर्करा दुग्धमेव च ॥२६॥
ताम्बूलञ्च तथा दिव्यं छत्रञ्चोपानहं तथा ।
पुष्कवस्त्रलतां शय्यां चामरं चारु विष्णवे ॥२७॥
दद्याद्भक्तियुतो मर्त्यो भिप्युर्मुक्तिं सुदुर्लभाम् ।
आषाढे पद्मकुसुमैर्बिल्वपत्तुलसीदलैः ॥२८॥
पूजयेत् केशवं भक्त्या भक्तिवश्यं[१] सनातनम् ।
दद्यात्सदधि नैवेद्यं पनसञ्च पयोऽन्वितम् ॥२९॥
सघृतं पनसञ्चापि दद्यात्कृष्णाय मानवः ।
रथोत्सवञ्च कृष्णस्य कुर्य्यादष्टाहमङ्गलम् ॥३०॥
कौतुकैर्नृत्यगीताद्यैर्विप्रभोजनकौतुकैः ।
श्रावणे मासि लाजांश्च दद्यात् वासः सुसूक्ष्मकम् ॥३१॥
भाद्रे तालफलं दद्यात् घृतयुक्तं च कारयेत् ।
आश्विने शूरणान्नञ्च सघृतं विष्णवेऽर्पयेत् ॥३२॥
परमान्नं तथा नानामिष्टनैवेद्यमेव च ।
[२][नारिकेलफलञ्चैव दद्यात् कृष्णाय शीतलम् ॥३३॥
पाषाणपात्रे विमले शाल्यन्नञ्च द्विजोत्तम ।
इन्दीवरैश्च रुचिरैः पूजयेत् श्यामसुन्दरम् ॥३४॥
शाकञ्च दद्यात् कृष्णाय जंम्बीररवरवासितम् ।
ताम्बूलञ्च लवङ्गादिसुसंस्कृतमेव च ॥३५॥].

---

१ B D सूक्ष्म° । २ C °वश्य ।
३ A omits the portion bracketted.

न दद्यात् खदिरं क्वापि विष्णवे परमात्मने ।
ब्राह्मणोऽपि न भुञ्जीत निर्यासं खदिरस्य च ॥३६॥
कार्त्तिके शृणु वाक्यञ्च दद्यात् सघृतमेव हि ।
घनीकृतं तथा चीरं शर्करामरीचान्वितम् ॥३७॥
चन्द्रातपञ्च कृष्णाय दद्याच्चित्रांशुकैः कृतम् ।
एवं कालोचितैर्द्रव्यैर्भक्त्युभूषणरूपिभिः ॥३८॥
पूजयित्वाच्युतं देवं सर्व्वं सार्थं लभेन्नरः ।
सर्व्वत्र तुलसीपत्रं प्रियं विष्णोर्महात्मनः ॥३९॥
गायेत विष्णुनामानि विमलेनान्तरात्मना ।
गङ्गा गीता च गायत्री त्रयमेव परं हरेः[१] ॥४०॥
संप्राप्तसाधनं विप्र गुरुर्मन्त्रस्तथोत्तमौ[२] ।
श्रवणं कीर्त्तनञ्चैव स्मरणं पादसेवनम् ॥४१॥
अर्च्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ।
नवलक्षणया भक्त्या स्वेष्टदेवं समर्च्चयेत् ॥४२॥
संक्षेपादियमुक्ता ते विष्णुपूजा द्विजोत्तम ।
दुर्गापूजामहं वक्ष्ये शृणुष्वैकमना मुने[३] ॥४३॥
अग्निहोत्राणि कर्माणि वेदयज्ञाः सदक्षिणाः ।
चण्डिकार्च्चनकार्य्यस्य कोट्यंशेनापि नो समाः ॥४४॥
पूजयेत् प्रणमेद्वापि यो दुर्गां जगदम्बिकाम् ।
स योगी स मुनिर्मुक्तः स च बुद्धिमतांवरः ॥४५॥

---

१ C त्रयमेतत् परं हरेः D त्रयमेव वपुर्हरेः । २ D उत्तमः । ३ C मम ।

मासि चाश्वयुजे विप्र शुक्लपक्षे त्रिशूलिनीम् ।
नवम्यां पूजयेद्यस्तु सोऽश्वमेधादिपुण्यभाक् ॥४६॥
सुमेरुगिरितुल्योपि राशिः पापस्य[1] कर्म्मणः ।
चण्डीपूजां समासाद्य नश्यत्यर्च्चिः पतङ्गवत् ॥४७॥
दुर्गार्च्चनरतो नित्यं महापातकसम्भवैः ।
दोषैर्न लिप्यते विप्र पद्मपत्रमिवाम्भसा ॥४८॥
अकृत्वा पार्व्वतीपूजां वार्षिकीं कुमतिर्नरः ।
पूजान्तु सर्व्वदेवानां तत्क्षणादेव नाशयेत् ॥४९॥
इति संक्षेपतः प्रोक्ता दुर्गापूजा द्विजोत्तम ।
नागव्रतमथो वक्ष्ये तदिहैकमनाः शृणु ॥५०॥
श्रावणे शुक्लपक्षे या पञ्चमी[2] तत्र मानवः ।
यः पूजयति नागान्वै तस्य नाहिभयं भवेत् ॥५१॥
पूजयेद्विधिवद्वारिदधिदूर्व्वाङ्कुरैः कुशैः ।
[3][गन्धपुष्पोपहारैश्च ब्राह्मणानाञ्च तर्पणैः ॥५२॥
तथा भाद्रेऽपि पञ्चम्यां सर्पिःपायसगुग्गुलैः ।
आलिख्य पूजयेन्नागान् कृष्णवर्णादिवर्णकैः ॥५३॥
आलिख्यपञ्चमीत्येषा नागाभयकरी परा ॥५४॥
एषा संक्षेपतः प्रोक्ता नागपूजा द्विजोत्तम ।
अतस्ते किं नु वक्ष्यामि जावाले तद्वदस्व मे ॥५५॥

---

१ C पुण्यस्य । २ D शुक्लपञ्चम्यां पूजयेत् ।
३ B omits the portion bracketted.

जावालिरुवाच।

ग्रहाः सूर्य्यादयः केन तुष्यन्ति तद्वदस्व मे।
को वा कुत्र ग्रहस्तिष्ठेज्ज्योतिषामग्रतः[१] प्रभो ॥५६॥

व्यास उवाच।

वसन्ति वै ग्रहाः सर्व्वे स्थिरवायौ द्विजोत्तम।
पृथ्वीतो योजनानान्तु सहस्रंषोडशोपरि ॥५७॥
वायुरेष स्थिरो भूत्वा देवान् दधात्यसौ[२]।
तत्र मेघा[३] अधिष्ठाय वर्षन्त्यम्बूनि सर्व्वतः ॥५८॥
ततो योजनसाहस्रदशकोपरि चोदयन्।
[४]तस्मात् षोडशसाहस्रं राहुरूर्द्धं प्रतिष्ठति ॥५९॥
राहुश्चन्द्रञ्च सूर्य्यञ्च ग्रसनायाभिधावति।
तत्रैव हि चरन्त्येव केतवो नवमा ग्रहाः ॥६०॥
ततश्च भास्करो भाति द्विःसप्ततियोजनोपरि।
सूर्य्योपरिष्टाच्चन्द्रोपि लक्षयोजनकोपरि ॥६१॥
तस्याप्युपरि लक्षेण विभान्ति तारकागणाः।
[५]ततो लक्षोपरि श्रीमानाचार्य्यः शुक्रनामकः ॥६२॥
लक्षद्वयोपरि ततो भूमिपुत्रो विभाति वै।
लक्षद्वयोपरि ततो बुधो वसति सोमजः ॥६२॥

---

१ A B चग्रगः। २ A B D दधत्यसौ। ३ D मेघो।

४ D has this additional line. ५ D reads. लक्षद्वयोपरि ततो भवति दैत्यगुरुर्भृगुः।

लक्षद्वयोपरि ततो देवाचार्य्यो बृहस्पतिः ।
लक्षद्वयोपरि ततो भाति नाम्ना शनैश्चरः ॥ ६४ ॥
एते ग्रहा महाभागाः शुभाशुभफलप्रदाः ।
एते यस्य प्रसन्नाःस्युस्तस्य नामङ्गलं क्वचित् ॥ ६५ ॥
ग्रहविप्रास्तु गणकास्तत्प्रीतयस्त्विमे[1] ।
स्तवेनैते च तुष्यन्ति स्तवानेषां शृणुष्व च ॥ ६६ ॥

इति श्रीबृहद्धर्मपुराणे उत्तरखण्डे वानप्रस्थयतिधर्मकथनं
नाम दशमोऽध्यायः ॥ ० ॥

---

१ D ०प्रीतयस्तु मे C प्रीतयेऽस्त्विमे ।

# एकादशोऽध्यायः ।



व्यास उवाच ।

शृणुष्व द्विजशार्द्दूल सूर्य्यस्तोत्रं महाफलम् ।
यच्छ्रुत्वा च पठित्वा च सर्व्वपापैः प्रमुच्यते ॥१॥
ॐकाररूपो गवाम् भास्करश्च विकर्त्तनः ।
सूर्य्यो रविः काश्यपेयो भानुर्दिनकरः प्रभुः ॥२॥
लोकप्रकाशकः साक्षी श्रीमांल्लोकदिगीश्वरः[1] ।
गभस्तिमाली सप्ताश्व स्त्रिगुणः कमलासनः ॥३॥
ग्रहेश्वरो गुणाधारो ब्रह्मविष्णुशिवात्मकः ।
ज्योतिष्मान् [2]ज्योतिषां नाथो ब्रह्मा ब्राह्मणदैवतः ॥४॥
त्रैगुण्यनायको दिव्यो लोकबन्धुर्भयापहः ।
तिमिरारी रश्मिमाली सहस्रकिरणः करी ॥५॥
शूरः करीन्द्रो मैत्रेयः केवलात्मार्य्यमामलः ।
पद्मप्रकाशको धाता विष्णुस्त्वष्टांशुरेव च ॥६॥
वेदात्मा वेदवेद्यश्च यमकर्त्ताश्विनीपतिः ।
नासत्यदस्त्रजनको ज्ञानज्योतिः सनातनः ॥७॥
पूषा विवस्वानादित्यो द्वादशात्मा दिवाकरः ।

---

१ D ०द्रुगीश्वरः । २ D ज्योतिरात्मा च ब्रह्मशास्तु त्रिदैवतः ।

ओषधीपतिरजस्य सोमो जैवातृकः शुचिः ।
मृगाङ्को ग्लौः पुण्यनामा चित्रकर्मा सुरार्च्चितः ॥२७॥
रोहिणीशो बुधपिता आत्रेयः पुण्यकीर्त्तकः[१] ।
निरामयो मन्त्ररूपः सत्यो राजा[२] धनप्रदः ॥२८॥
सौन्दर्य्यदायको दाता राजग्रामपराङ्मुखः ।
शरण्यः पार्व्वतीभालभूषणं भगवानपि ॥२९॥
पुण्यारण्यप्रियः पूर्णः पूर्णमण्डल[३]मण्डितः ।
हास्यरूपो हास्यकर्त्ता शुद्धः शुद्धस्वरूपकः ॥३०॥
शरत्कालपरिप्रीतः शारदः कुमुदप्रियः ।
द्युमणिर्द्विजामाता यक्ष्मारिः पापमोचनः[४] ॥३१॥
इन्दुः कलङ्कनाशी च सूर्य्यसङ्गमपण्डितः ।
सूर्य्योद्भूतः सूर्य्यगतः सूर्य्यप्रियपरःपरः ॥३२॥
स्निग्धरूपः प्रसन्नस्य मुक्ताकर्पूरसुन्दरः ।
जगदाह्लादसन्दर्शो ज्योतिःशास्त्रप्रमाणकः ॥३३॥
सूर्य्याभाव[५]दुःखहर्त्ता वनस्पतिगतः कृती ।
यज्ञरूपो यज्ञभागी वैद्यो विद्याविशारदः ॥३४॥
रश्मिकोटिर्द्दीप्तिकारी गौरभानुरिति द्विज ।
नाम्नामष्टोत्तरशतं चन्द्रस्य पापनाशनम् ॥३५॥

---

१ A ०कीर्त्तिकः C ०कीर्त्तनः । २ D सत्यराजा ।
३ B पुण्यप्रियः पुण्यः D पुण्य पुर्णमण्डल० । ४ C D शापमोचनः ।
५ D ०भावो ।

चन्द्रोदये पठेद्यस्तु स तु सौन्दर्य्यवान् भवेत्।
पौर्णमास्यां पठेदेतं स्तवं दिव्यं विशेषतः ॥३६॥
स्तवस्यास्य प्रसादेन त्रिसन्ध्या[1]पठितस्य च।
सदाप्रसादास्तिष्ठन्ति ब्राह्मणाश्च द्विजोत्तम ॥३७॥
श्राद्धे चापि पठेदेतं स्तवं पीयूषरूपिणम्।
तत्तु श्राद्धमनन्तञ्च कलानाथप्रसादतः ॥३८॥
दुःस्वप्ननाशनं पुण्यं दाहज्वरविनाशनम्।
ब्राह्मणाद्याः पठेयुस्तु[2] स्त्रीशूद्राः शृणुयुस्तथा[3] ॥३९॥
ब्राह्मणाः शृणुयुश्चापि लभेयुश्च समं फलम्।
अथान्येषान्तु नामानि स्तोत्ररूपाणि मे शृणु ॥४०॥
मङ्गलस्य स्तवं वक्ष्ये सर्व्वमङ्गलदायकम्।
मङ्गलो भूमिपुत्रश्च रक्ताङ्गोऽरुणलोचनः ॥४१॥
अङ्गारको दीप्तश्चारः[4] शस्त्रपाणिः क्षणापहा।
मेषराश्यधिपो रक्तो रक्ताम्बरधरस्तथा ॥४२॥
शूकराश्यधिपो[5] देवो यात्रामङ्गलवृत्तिदः।
समुद्रशोषकश्चैव वह्निनेत्रः प्रतापवान् ॥४३॥
धनदः प्रीतवदनः[6] प्रलयात्मा प्रमोददः।
इत्येकविंशतिं नाम्नां मङ्गलस्य तु यः पठेत् ॥४४॥
स एव निर्व्वणो भूत्वा धार्म्मिकश्च धनी भवेत्।

---

१ C D त्रिसन्ध्य॰। २ A B पठेद्यस्तु। ३ A शृणुयास्तथा।
४ A दीप्तघोरः। ५ B शूकरस्याधिपो। ६ B पीतवदनः,
C प्रीतिवदनः।

संपूज्य रक्तपुष्पेण मङ्गलाहे च मङ्गलम् ॥ ४५ ॥
स्तवमेतं पठित्वा तु निर्ऋणः सन् धनी भवेत् ।
अथ वक्ष्ये बुधस्यापि स्तोत्रं बुद्धिविवर्द्धनम् ॥ ४६ ॥
बुधो गौरतनुः सौम्यो मानवीशः शुभाननः ।
शुभग्रहः पुण्यकीर्त्तिस्तारेयस्य इलापतिः ॥ ४७ ॥
पुरूरवपिता धीरः कुमारो राजवल्लभः ।
राजपुत्रो राज्यदाता अङ्गराज उपर्बुधः ॥ ४८ ॥
द्वन्द्वराश्यधिपश्चैव सिंहराश्यधिपस्तथा ।
नवग्रहप्रियश्चेति नाम्नामेवैकविंशतिम्[१] ॥ ४९ ॥
बुधस्य यः पठेदेतां स यात्रायां सुखं लभेत् ।
ग्रहास्तस्य प्रसन्नाः स्युः पुत्रवान् धनवान् भवेत् ॥ ५० ॥
धर्म्मज्ञानञ्च पाण्डित्यं जायते तस्य सर्व्वशः ।
अथ वक्ष्ये गुरुस्तोत्रं जावाले शृणु कथ्यते ॥ ५१ ॥
देवाचार्य्यो गुरुर्जीवः कमनीयः सुरेश्वरः ।
वाचस्पतिः पण्डितश्च सर्व्वशास्त्रवरः सुरः ॥ ५२ ॥
धिषणो गीस्पतिर्ब्रह्मा ब्राह्मणश्च बृहस्पतिः ।
श्रीमानाङ्गिरस[२] स्तारावल्लभो जीवनप्रदः ॥ ५३ ॥
ज्येष्ठो ज्येष्ठग्रहो विज्ञो धनुर्मीनाधिपो जयः ।
शुभग्रहो यज्ञकर्त्ता व्रती चित्रशिखण्डिजः ॥ ५४ ॥
नामान्येतानि जीवस्य पाठ्यानि सप्तविंशतिः ।

---

१ B नाम्नां वै चैकविंशति । २ B आङ्गीरसः ।

बुद्धिवृद्धिकराण्याशुः प्रसादेन बृहस्पतेः ॥ ५५॥
ब्राह्मणो वेदविज्ञः स्यादन्येषां स्वोचितं फलम्।
याचार्यां मङ्गलस्यापि स्तवराजो बृहस्पतेः ॥ ५६॥
शृणुष्व द्विजशार्दूल शुक्रनामानि सम्प्रति।
शिवावताररूपस्य दैत्याचार्य्यस्य धीमतः ॥ ५७॥
शुक्रो दैत्यगुरुः श्रीमान् कविः काव्यश्च भार्गवः।
सितः शुक्रः शुचिर्विप्रो महात्मा शङ्करः प्रभुः[१] ॥ ५८।
उशना उत्तमौजाश्च उद्यो उज्ज्वलप्रभः[२]।
ऊर्ज्जस्वी वृषराशीशस्तुलाराश्यधिपस्तथा ॥ ५९॥
मृतसञ्जीवको ज्ञाता विद्याविनयपण्डितः।
सद्गुरुः साधुशीलश्च ययातिश्वशुरो वशी ॥ ६०॥
एतानि कविनामानि प्रोक्तानि सप्तविंशतिः[३]।
पठ[४] शृणुष्व जावाले पाठय श्रावयापि च ॥ ६१॥
शुक्राचार्य्यस्तवं यस्तु पठेत् शुक्रदिनेषु च।
तस्य प्रीतो भवेत् शुक्रः श्वेतपुष्पैश्च पूजितः ॥ ६२॥
शतावृत्तिं पठन्तस्य कविर्भवति नान्यथा।
प्रत्यहं भक्तिभावेन यः पठेत् सुसमाहितः ॥ ६३॥
तस्य धर्म्मे शुभा बुद्धिर्भवत्येव न संशयः।
इत्येतत्[५] कथितं स्तोत्रं शुक्राचार्य्यस्य भास्वतः ॥ ६४॥

---

१ C D शङ्करप्रभुः। २ B ०प्रभुः। ३ A C D चैकविंशतिः।
४ B D पठन्। ५ D इति ते।

अथ वक्ष्ये शृणु स्तोत्रं शनेः सूरसुतस्य ह ।
शनिग्रहो भवेद् येन तुष्टः शुभवरप्रदः ॥ ६५॥
सूर्य्यपुत्रः शनिः श्यामो मन्दोऽमन्दः शनैश्चरः ।
छायागर्भोद्भवो वीरो दीर्घवक्त्रः प्रतापवान्[1] ॥ ६६॥
एकाक्षः सर्व्वसञ्चारी दीर्घवासी शुभाचरः ।
एतानि शनिनामानि यः पठेत् प्रयतो नरः ॥ ६७॥
तस्याष्टमगतोऽप्येष भवेदेकादशस्थवत् ।
शनिवारे तु संपूज्य शनिं सूर्य्यसुतं नरः ॥ ६८॥
लभते वाञ्छितं सर्व्वं ग्रहारिष्टविनाशनम्[2] ।
प्रत्यहं प्रातरुत्थाय यः पठेत्तु शनेः स्तवम् ॥ ६९॥
तस्य सर्व्वे ग्रहाः साधो भवन्ति सुखदायकाः ।
इति ते कथितं विप्र शनिस्तोत्रं महद्गुणम् ॥ ७०॥
राहुनामान्यथो वक्ष्ये [[3]राहुप्रीतिकराणि च ।
पीयुषपायी मस्ताख्यो[4] राहुर्भिन्नगतिस्तमः ॥ ७१॥
उपरागग्रहः पुण्यचरित्रः पुत्रवञ्चयः ।
राहुनामाष्टकमिदं राहुप्रीतिकरं परम् ॥ ७२॥
यः पठेच्छृणुयाद्वापि राहुदोषैर्न सोऽन्वितः ।
केतुनामान्यथो वक्ष्ये] जाबाले शृणु भक्तितः ॥ ७३॥
सैंहिकेयो धूमनामा[5] दीर्घाङ्गो वक्ररूपवान् ।

---

१ C प्रसादवान् । २ C ०विनाशनं । ३ D omits the portion bracketted. ४ C मस्ताच्छः । ५ D विधूनामा ।

स्कन्धरूपतनुः केतुर्महाभीमग्रहो ग्रहः ॥७४॥
शेषग्रहाख्यो नवमग्रहश्चेति द्विजोत्तम।
केतुनाम्नारूनामानि कथितानि मया तव ॥७५॥
केतुप्रीतिकराण्याङ्ग पुत्रसम्पत्प्रदानि च।
नवग्रहाणामेते वै स्तवाः सर्व्वे निरूपिताः ॥७६॥
पुण्याः पापहराः सर्व्वे श्राव्याः पाठ्याः प्रयत्नतः।
नवग्रहस्तवाध्यायं यः पठेत् प्रातरुत्थितः ॥७७॥
प्रदक्षिणाः ग्रहास्तस्य सूर्य्यचन्द्रादयो द्विज।
धनं धान्यं धरां धर्म्मं कीर्त्तिमायुर्यशः श्रियम् ॥७८॥
पुत्रान् पौत्रान् शुभां भार्य्यां गोविन्दे नति[1]मुत्तमाम्।
अन्त[2]काले च गङ्गायां मरणं ददते ध्रुवम् ॥७९॥
दुःस्वप्ननाशनाः सर्व्वे ज्ञातिश्रैष्ठ्यप्रसाधकाः।
पितॄणां प्रीतिदा एते नवग्रहमहास्तवाः ॥८०॥
सर्वग्रहाधिपः सूर्य्यः परमेशक्रमेण तु।
मासेषु द्वादशस्वेव चरति द्वादशात्मकः ॥८१॥
उदिते भगवत्यर्क्के उदयन्ति ग्रहाः समे।
वारप्रवृत्तिः सर्वेषां ग्रहाणामुदिते रवौ ॥८२॥
सूर्य्या वै द्वादश प्रोक्ता मासेषु द्वादशसु च।
अतो द्वादशमासा हि सम्वत्सर इति स्मृतः ॥८३॥
त्रयोदशापि मासा हि क्वचित् सम्वत्सरो मतः।
तदाधिको हि मासः स्यात्तन्नाम्नो नामा मलिम्लुचः ॥८४॥

१ D मतिं। २ A C ब्यन्तः।

शुक्लप्रतिपदारम्भादर्शान्तश्चान्द्र एव चेत्[1]।
रविसंक्रान्तिशून्यः स्यात् स हि मासो मलिम्लुचः ॥८५॥
रविणा लङ्घितो मासश्चान्द्रः ख्यातो मलिम्लुचः।
तत्र यद्विहितं कर्म्म द्वितीये मासि कारयेत् ॥८६॥
इन्द्राग्नी यत्र हूयेते मासादिः स तु कीर्त्तितः।
अग्नीषोमौ स्मृतौ मध्ये समाप्तौ पितृसोमकौ ॥८७॥
तमतिक्रम्य तु यदा रविर्गच्छेत् कदाचन।
मलिम्लुचः स विज्ञेयो गर्हितः सर्वकर्म्मसु ॥८८॥
एवं ते कथितं विप्र ज्योतिषां वर्णनं समम्।
श्रोतुमिच्छसि जावाले किमन्यत् कथयामि ते ॥८९॥

इति श्रीबृहद्धर्म्मपुराणे उत्तरखण्डे गृहधर्म्मकथनं नाम
एकादशोऽध्यायः ॥०॥

---

१ B D एव वा।

## द्वादशोऽध्यायः ।

जाबालिरुवाच ।

भवता कथिता ब्रह्मन्नवग्रहमहास्तवाः ।
मया श्रुताः प्रभो पुण्या युगधर्मानथो वद ॥१॥

व्यास उवाच ।

कृतं त्रेता द्वापरश्च कलिश्चेति चतुर्युगम् ।
चतुस्त्रिद्व्येकसाहस्रदिव्यवर्षैः क्रमादिति ॥२॥
तथा शतैश्च सन्ध्यांशाः सन्ध्या अपि शतैस्तथा ।
एवं द्वादशसाहस्रदिव्यवर्षैश्चतुर्युगम् ॥३॥
मानुषेण प्रमाणेन यथा स्याद्बुध्यतां स्वयम् ।
षट्त्रिंशद्वर्षसाहस्रैर्मानुषाब्दैर्द्विजोत्तम ॥४॥
दिव्यं वर्षशतं बोध्यमङ्कज्ञानविशारदैः[1] ।
तत्रादौ तु कृतयुगं यत्सत्ययुगमुच्यते ॥५॥
धर्मश्चतुष्पात् सम्पूर्णो वृषरूपधरस्तदा ।
वर्णानामाश्रमाणाञ्च तदा धर्मोऽह्यखण्डितः ॥६॥
कृतमेव तदा सर्वं क्रियमाणादिकं न च ।
तस्मिन् काले शोकमोहजरादुःखानि न क्वचित्[2] ॥७॥
न च व्याधिर्नोपतापो नोद्वेगो वा कदाचन ।

---

१ B D ०विसारदैः । २ D ०दुःखं न कुत्रचित् ।

न हिंसाकलहद्वेषदुर्भिक्षदुर्ग्रहार्दनाः ॥८॥
न क्रयो विक्रयश्चापि न पीड़ा विविधापि च ।
इज्याध्ययनदानादि तदा सम्पूर्णमेव हि ॥९॥
वज्रायुषो जनाः सर्वे वलीपलितवर्जिताः ।
तदा नारायणः शुक्लः शुक्लवासाश्चतुर्भुजः[1] ॥१०॥
ब्रह्मचारी हंसनामा ध्यानगम्यो विभुः प्रभुः ।
ध्यानमेव तदा धर्म्मः परोमोक्षस्य साधनः ॥११॥
एते धर्म्माः सत्ययुगे धर्म्मांस्त्रेता[2]युगे शृणु ॥१२॥
पादेन ह्रसते धर्म्मो नरा धर्म्मपरायणाः ।
[3][ततो यज्ञाः प्रवर्त्तन्ते धर्म्माश्च विविधाः क्रियाः ॥१३॥
सत्यप्रवृत्ताश्च नराः क्रियाधर्म्मपरायणाः] ।
प्रचरन्ति ततो वर्णा स्तपोदानपरायणाः ॥१४॥
स्वधर्म्मस्थाः क्रियावन्तः समन्ताद्ब्रह्मसान्विताः ।
अश्वमेधादयो यज्ञा राजसूयस्तथोत्तमः ॥१५॥
अग्निष्टोमो वाजपेयो ह्यतिरात्रादयो मखाः ।
सङ्कल्पाश्च तदा[4] जाता विप्र त्रेतायुगे परे ॥१६॥
तत्रावतीर्णो भगवान्रक्तवर्णो युगाकृतिः ।
उपेन्द्रो वामनश्चैव पृश्निगर्भश्च नामतः ॥१७॥
द्वापरेऽपि युगे धर्म्मो द्विभागोनः प्रवर्त्तते ।
हिंसा द्वेषश्च मात्सर्य्यं कलहः पैशुनं तथा ॥१८॥

---

१ नारायणः शुक्लवासाश्चैव ।    २ D धर्म्मांस्त्रेतां ।
३ B omits the portion bracketted.    ४ B ततो ।

मिथ्यामोहः शोकरोषपापव्याधिदुरत्ययः ।
जरा च लोभ ईर्ष्या च जाता वै द्वापरे युगे ॥१९॥
धर्मालस्यञ्च चातुर्य्यं जातिसाङ्कर्य्यमेव च ।
अयन्तु तामसः कालो हरिः श्यामस्तदाभवत् ॥२०॥
पीताम्बरधरत्वाच्च पीत इत्यपि कथ्यते ।
अग्रजः शुक्लवर्णोऽस्य धर्म्मोर्द्धादिर्ग्गलचणम् ॥२१॥
हरिश्चतुर्भुजः शङ्खचक्रपद्मगदाधरः ।
किरीटी कुण्डलधरो वनमालाविभूषितः ॥२२॥
सुनन्दनन्दप्रमुखैः पार्षदैरभिषेवितः ।
द्वापरे तु युगे लेष युगावतार ईश्वरः ॥२३॥

जावालिरुवाच ।

हिंसाद्वेषादयो धर्म्मा व्याधिमृत्युजरादयः ।
कुतो जाताः कथं जाताः धर्म्मो वा ह्रसते कथम् ॥२४॥

व्यास उवाच ।

पुरा ब्रह्मक्रोधजाता रुद्रा एकादशैव तु ।
जगन्नाशकरा भीमा ईर्ष्यावन्तो हि हिंसकाः ॥२५॥
तत्कालानुचितां स्तांस्तु दृष्ट्वा ब्रह्मा प्रजापतिः ।
दक्षमाज्ञापयामास तेषां सम्वरणक्षमम् ॥२६॥
दक्षस्तान् प्राप्य कुमतिं-शीप सङ्गप्रसङ्गतः[1] ।
ततो हि भगवान् शम्भुः स्वयमागत्य तत्क्षणात् ॥२७॥

---

[1] B प्रसादतः ।

सर्व्वं संग्रसयामास क्रोधहिंसाजरादिकान् ।
तत आरभ्यते सर्व्वे हिंसाक्रोधजरादयः ॥२८॥
महेश्वरबलाद्भीता निष्प्रकाशाः स्थिता द्विज ।
ततोऽभिभूते[१] रजसि तमसि प्रवले सति ॥२९॥
द्वापराख्ये युगे विप्र हिंसाद्या[२]स्तु प्रकाशिताः ।
शम्भुमभ्यद्रवन् सर्व्वे महाभीमतराः समे ॥३०॥
तथाभूतांस्तु[३] तान् दृष्ट्वा स्वरक्षार्थं समुद्यतः ।
शूलं दधार भगवान् भीत एव यथा तथा ॥३१॥
शूलहस्तं शिवं दृष्ट्वा ते च भीतास्तदा[४]भवन् ।
शिवमेवावनं याताः[५] प्रोचुरेतद्द्विजोत्तम ॥३२॥

हिंसाद्या ऊचुः ।

भगवन् भूतभव्येश त्रिगुणेश त्रिलोचन ।
ब्रह्मपुत्रा वयं सर्व्वे त्वद्भीतिवशगाः स्थिताः ।
अप्राप्तस्थितयः सर्वे स्थितिं प्राप्ता इवाधुना ॥३३॥
अस्माकं कल्पय[६]स्थानं कर्म्माणि च यथातथम् ।
न चेत् करिष्यस्येवं त्वं त्वाञ्च भोक्ष्यामहे वयम् ॥३४॥

व्यास उवाच ।

तेषान्तद्वचनं श्रुत्वा विकृताकारशालिनाम् ।
जगाद भगवान् वाक्यं शिवः परमपूरुषः ॥३५॥

---

१ D विभूते । २ D च । ३ D श्च । ४ A C भीता तदा । ५ B जाताः । ६ A कल्पिय ।

भगवानुवाच।

उचितं भवतां वाक्यं मया समवधारितम्।
यूयं गच्छत[1] ब्रह्माणं स वो वृत्तिं विधास्यति॥
स सृष्टिकर्त्ता भगवान् ब्रह्मा देवश्चतुर्मुखः।
तेनैव यूयं विहिताः स वो वृत्तिं विधास्यति॥२७॥

व्यास उवाच।

इत्युक्तास्ते तदा सर्व्वे शम्भुना सुखरूपिणा।
शम्भुं त्यक्त्वा ययुः सर्व्वे ब्रह्मा यत्र चतुर्मुखः॥२८॥
तांस्तु दृष्ट्वा तदा ब्रह्मा सर्व्वलोकपितामहः।
उवाच प्रणतान् सर्व्वान् हिंसादीन् द्विजपुङ्गव॥२९॥

ब्रह्मोवाच।

किमर्थमागता यूयं के यूयं वद तद्द्रुतम्।
सर्वे भीमरवा यूयं कस्य पुत्राः कुतो गृहाः॥४०॥

हिंसाद्या ऊचुः।

वयं हिंसादिनामानस्तव पुत्राः महात्मनः।
रुद्रभीताः स्थिता गुप्ता अप्राप्तावसरास्तथा॥
इदानीं दूषिते धर्म्मे प्राप्ता ह्यवसरं वयम्॥४१॥
स्थानकर्म्मार्थिनो भूतास्त्वां शिवोद्दिष्टमागताः।
स्थानानि चाथ कर्म्माणि कल्पयास्माकमीश्वर॥४२॥

ब्रह्मोवाच।

कामनामा सुतो मेऽस्ति स समादिश्यते[2] हि वः।

---

१ B क्रूरा वदत। २ B ०दृश्यते।

तेन सर्वे सहायेन कर्म्माणि च करिष्यथ ॥४३॥
शरीरं कामसम्भूतं क्रोधश्चाकर्म्मसम्भवः[1] ।
क्रोधाद्भवतु सम्मोह आशा तस्माद्भविष्यति ॥४४॥
ततो भवेत्तु व्यामोहो[2] व्यामोहाल्लोभ उद्भवेत् ।
लोभाद्भवेत्तथा चिन्ता चिन्तया जायते जरा ॥
जराया जायते व्याधिर्व्याधितो मरणं भवेत् ॥४५॥
मृतत्वे जीवस्तु कामेन पुनः प्राप्नोति देहिताम् ।
चक्रवत्परिवर्त्तन्ते मृत्युन्ते[3] चाहितादयः ॥४६॥
धर्म्मे मतिस्तु येषां वै तान्दृष्ट्वा तु निवर्त्तथ ।
दृष्टा देहादिमृत्यन्ता भजन्ते नैव धर्म्मिणः ॥४७॥
अधर्म्मोऽप्यपरो मेऽस्ति पुत्रो धर्म्मनिवर्त्तकः ।
तद्भीते हि स्थिते धर्म्मे यूयं शूरास्त्वरिष्यथ ॥४८॥
[[4]धर्म्मेश्वरं हरिं ये तु भजन्तस्तान् विहास्यथ] ।
अधर्म्मोऽपि विभेत्यस्माद्धरेर्नारायणात् प्रभोः ॥४९॥

व्यास उवाच ।

इत्युक्तास्ते तदा दृष्ट्वा ह्यधर्म्मं[5] ब्रह्मसम्भवम् ।
कामसाहाय्यमाश्रित्य ह्यवातिष्ठन् द्विजोत्तम ॥५०॥
अधर्म्मपुत्रो ह्यभवन्मृत्युर्नाम भयङ्करः ।
तमादिदेश मर्त्यानां संहाराख्याय कर्म्मणे ॥५१॥
तदा स लोकहिंसार्थे नियुक्तस्तातमब्रवीत् ॥५२॥

---

१ B D अधर्म्मसम्भवः । २ B संमोहो । ३ D मृत्यवन्ते ।
४ B omits the portion brackotted. ५ B दृष्ट्वाधर्म्मं ।

मृत्युरुवाच।

कथं मां लोकहिंसायै नियोजयसि हे पितः।
कथं वाहं करिष्यामि पापं कर्म्म विहिंसनम् ॥५३॥

अधर्म्म उवाच।

न त्वं लोकस्य हिंसायां पातकी तु भविष्यसि।
जरां व्याधिं ज्वरादिंश्च मया सृष्टं प्रलप्स्यसि ॥५४॥
तेनैव लोका नंक्ष्यन्ति तत्र नाशात्मको भवान्।
अतस्त्वं सर्वदेहेषु कुरुष्वाधिष्ठितं शुभम् ॥५५॥
मृतश्चानुगतो भूया जातश्चानुजनिष्यसि।
यत्राहन्तु निवत्स्यामि तत्र त्वन्तु निवत्स्यसि ॥५६॥
अहं नारायणपरं जनं दृष्ट्वा पराङ्मुखः ॥५७॥

व्यास उवाच।

एवमुक्तो ह्यधर्म्मेण मृत्युर्लोकभयङ्करः।
हिंसाकलहशाव्यादिसेनां नीत्वा सहायवान् ॥५८॥
विचचार तदा लोके आजन्ममृतिमुक्तितः।
ततोऽधर्म्मात् समुद्भूता व्याधयो विविधा अपि ॥५९॥
तत्र ज्वरोऽभवज्ज्येष्ठस्त्रिशिरा नवलोचनः।
षड्भुजो ह्यष्टदन्तश्च भस्मवर्णः कुचेलकः ॥
तिर्य्यक्कारकलोलाच ऊर्द्ध्वश्वासकनासिकः ॥६०॥
एवं प्रवाहिकाशोथशूलगुल्मोदराह्वयाः।
वातश्लेष्मकफस्थानविकाराद्रोगनामकाः[१] ॥६१॥

---

[१] C ङनामकः।

ततो जरा[1] कालकन्या ह्यपत्यार्थं पतीच्छया ।
उवाच मृत्युं वचनं पतिर्मम भवेति वै ॥ ६२ ॥

मृत्युरुवाच ।

जरे नाहं पतिस्तुभ्यं पतिस्ते विधिकल्पितः ।
अस्ति प्रज्वारनामा हि व्याधिराजः सुवीर्य्यवान् ॥ ६३ ॥
स मे भ्राता सुहृद्बन्धुस्तस्य भार्य्या भविष्यसि ।
पत्नी त्वमनुजभ्रातुर्मम भग्नीव सर्वथा ॥ ६४ ॥

जरोवाच[2] ।

असम्मताहं लोकेषु मा वदिष्यन्ति मां जनाः ।
देहि मे पृतनां वीर प्रज्वारं येन याम्यहम् ॥ ६५ ॥

व्यास उवाच ।

इत्युक्तः स तया तस्यै ददौ सेनां महाद्भुताम् ।
सा तया सेनया युक्ता ययौ प्रज्वारमीश्वरम् ॥ ६६ ॥
प्रज्वारस्तु प्रलभ्यैतां [3]जरां पत्नीं स्वसम्मताम्[4] ।
सेनाश्चात्यद्भुतां लब्ध्वा हर्षितोऽभूद्द्विजोत्तम ॥
[5]जरामुवाच विनयात् प्रज्वारः सुभगः पतिः ॥ ६७ ॥

प्रज्वार उवाच ।

जरे गच्छ मया सार्द्धंससैन्या[6] कलहादिभिः ।
समाहृत्य नरान् सर्वान् विधिनाभिमतं यथा ॥ ६८ ॥

---

१ C ज्वरा ।　　२ B C D ज्वरोवाच ।　　३ C ज्वरां ।
४ B D सुसम्मतां ।　　५ C ज्वरां ।　　६ C D ससैन्यकलहादिभिः ।

एते वै व्याधयः सर्वे मम सैन्या महाबलाः।
तवापि क्रोधहिंसेर्ष्यालोभमोहादयो मताः॥
एतैर्व्यापादयिष्यावो जगत् स्थावरजङ्गमम्॥६९॥

व्यास उवाच।

इति निर्णीय[1] प्रज्वारो जरा च[2] दम्पती तदा।
लोकानां मर्दनार्थाय जग्मतुः सेनयान्वितौ।७०॥
तदा वै सकला लोकाः स्थावरा अपि सर्वशः।
युयुधुः सह ताभ्याञ्च बलवन्तो महौजसः॥७१॥
बलवद्भिः सर्वलोकैः प्रज्वारस्तु प्रपीडितः।
शिवं शरणमापन्नः स च तं[3] समपालयत्॥७२॥
जराञ्च[4] जगृहुः सर्वे लोकाः केशेषु दुर्मतिम्॥७३॥
केशाकर्षणध्वस्ता सा जरा[5] लोकैः पराजिता।
उवाच सर्वान् लोकान् वै भूत्वा परमसुन्दरी॥७४॥

[6]जरोवाच।

हे लोका नरहृच्चाद्याः शरणं वो गताह्यहम्।
मां पालयत वै सर्वे भार्य्या युष्माकमप्यहम्॥७५॥
पतिर्मे यस्तु प्रज्वारः स युष्मत्पीडितो गतः।
अतो मे विधवाया हि यूयं भवत वै धवाः॥७६॥

व्यास उवाच।

इत्युक्तास्ते तदा लोका धर्म्म्यां मतिमुपागताः।

---

१ A B निर्णाय। २ C ज्वरा च। ३ B शिवस्तं। ४ C ज्वराञ्च।
५ C ज्वरा। ६ C ज्वरोवाच।

तां स्त्रीचक्रु[1]स्तदा दृष्ट्वा जरां तन्मुग्धबुद्धयः ॥७७॥
सा जरा तांस्तदा प्राप्य हिंसेर्ष्यादिभिरन्विता ।
लोकान् जीर्णांश्चकारैव भूयः प्रज्वारमाप च ॥७८॥
प्रज्वारस्तु तदा भूतः शैवनामा सुभक्तिमान् ।
येन सस्त्रीसैन्यकेन देहाख्यं पुरमर्दितम् ॥७९॥
देहं पुरमिदं जीवो जनयित्वा पुरञ्जनः ।
[2][हेतुर्हि कामजातस्य बुद्धिर्नाम पुरञ्जनी ॥८०॥
नवद्वारे पुरे देहे एतावेव ह्यधिष्ठितौ ।
पञ्चप्राणात्मको वायुः पुरपालक उच्यते ॥८१॥
प्रज्वारकालकन्याभ्यां मर्दितन्तु पुरं बलात् ।
त्यक्त्वा पुरञ्जनः[3]] शीघ्रं पुरञ्जन्या पलायते ॥८२॥
स्थित्वा देहे हरौ भक्तिं कुरुते चेत् पुरञ्जनः ।
तदा मृत्युवशं नैति न चेत् पतति मूढधीः ॥८३॥
तस्मात् पुरञ्जनीं शुद्धां कृत्वा सुरपतिर्भवेत् ।
जराप्रज्वारव्याध्याद्यैः सुभीमैर्नानुबध्यते ॥८४॥
इति ते कथितं विप्र यत् पृष्टोऽहमिति त्वया ।
हिंसादीनां जन्मकर्मधर्मह्रासप्रयोजनम् ॥८५॥

इति श्रीबृहद्धर्मपुराणे उत्तरखण्डे द्वादशोऽध्यायः ॥

---

१ D ०स्त्रीचक्रुः । २ B omits the portion bracketted.
३ C पुरञ्जनं ।

# त्रयोदशोऽध्यायः ।



अद्भुतं भवता प्रोक्तं श्रुतञ्चैवाद्भुतं मया[१] ।
कीदृशं जातिसाङ्कर्य्यं कथं जातं वदस्व तत् ॥१॥

व्यास उवाच ।

पुरा वेणो धर्म्मपथं त्यक्त्वैश्वर्य्यमकारयत् ।
तस्याधिकारकाले तु जातीनां सङ्करोऽभवत् ॥२॥

[२][जावालिरुवाच ।

कोऽसौ वेणः कस्य पुत्रः किंकर्म्मा किं कुलोद्भवः ।
धर्म्मातिक्रमणं वापि कीदृशं तस्य तद्वद ॥३॥

व्यास उवाच ।

ब्रह्मणस्तनयः पूर्वं नाम्ना स्वायम्भुवोऽभवत्] ।
तस्य पुत्रद्वयं जज्ञे तत्र ज्येष्ठः प्रियव्रतः ॥४॥
कनिष्ठो मानवः पुत्रो उत्तानपादनामकः ।
तस्य पुत्रो ध्रुवो नाम त्रैलोक्याद्भुतकीर्त्तिमान् ॥
यः पञ्चवर्षस्तपसा[३] सुनीतिगर्भसम्भवः ।
आराध्य कृष्णं शरणं[४] प्राप दृष्ट्वा स्वचक्षुषा ॥६॥
पदञ्च विमलं प्राप सर्वोपरि सुविश्रुतम् ॥७॥

---

१ D चैवाद्भुतं श्रुतं मया । २ B omits the portion bracketted.
३ C पञ्चवर्षतपसा B ०तपसः D ०तपसो । ४ D कृष्णाश्वरणं ।

वत्सरस्तस्य पुत्रोऽभूद्भूमिगर्भोद्भवो बली ।
पुष्पार्णस्तस्य पुत्रोऽभूत् सुनीथा[1]गर्भसम्भवः ॥ ८॥
[2][पुष्पार्णस्य प्रभायास्तु व्युष्टः[3] पुत्रो बभूव ह ।
व्युष्टपुत्रः सर्वतेजाः पुष्करिण्यां बभूव ह ॥ ९ ॥
तस्य पुत्रो मनुर्नाम आकूत्यामुदपादयत् ।
उन्मुकस्य[4]मनोः पुत्रो नड्वलागर्भसम्भवः] ॥ १० ॥
तस्य पुत्रः पुष्करिण्या मङ्गनामा बभूव ह ।
अङ्गपुत्रोऽभवद्वेणः सुनीथागर्भसम्भवः ॥ ११ ॥
शृणु तस्य चरित्रञ्च वेणस्याधर्म्मशीलिनः[5] ।
सुनीथा मृत्युकन्यासीत् पत्नीह्यङ्गस्य सुन्दरी ॥ १२ ॥
तत्राङ्गो जनयामास पुत्रेच्छा वेणनामकम् ।
वेणे जाते सुस्थचित्तो बभूवाङ्गो नृपोत्तमः ॥ १३ ॥
वेणो राजकुमारोऽसौ सदा दर्पसमन्वितः ।
प्राणैः प्रपीड़यामास सर्वजन्तून् स्वभावतः ॥ १४ ॥
गृहे गृहे गृहस्थानां बालानाहृत्य सम्भ्रमात् ।
सहन् बालान् गुणैर्बद्ध्वा चिक्षेपागाधपाथसि ॥ १५ ॥
इत्यादिदुःखदं कर्म्म करोत्यहरहस्तदा ।
लोकाश्च पुत्रशोकादितप्ता राजानमब्रुवन् ॥ १६ ॥
तेन पुत्रेण तप्तोऽसौ राजा चाङ्गो वनङ्गतः ।

---

१ D सुनीता० । २ D omits the portion bracketted.
३ B C व्युष्टिः । ४ B C उल्मुकस्य । ५ C ०शालिन० ।

अराजके तदा राज्ये मुनयो वेणमुल्वणम् ॥१७॥
स्थापयामासुरत्युग्रं रक्षितं धर्म्मबुद्धितः ।
स्वभावपौरुषो वेणो लब्ध्वा सिंहासनं पुनः ॥१८॥
धर्म्मान्निषेधयामास वर्णाश्रमकुलोचितान्[१] ।
न यष्टव्यं न दातव्यं न होतव्यं द्विजाः क्वचित् ।
इति न्यवारयद्धर्म्मान् भेरीघोषेण सर्व्वतः ॥१९॥
धर्म्मलोपभयाद्विप्रास्तं वेणं नास्तिकोत्तमम् ।
राजत्वानुचितं गत्वा भीता इव तदाब्रुवन् ॥२०॥

मुनय ऊचुः ।

राजन् वेण महाभाग ध्रुववंशसमुद्भव ।
राजा सिंहासनगतो धर्म्मान् कस्माज्जिहाससि ॥२१॥
नास्ति धर्म्मात् परो बन्धुः सर्व्ववर्णाश्रमस्य ह ।
त्यक्तधर्म्मो जनोऽल्पायुः सद्यो भवति नान्यथा ॥२२॥
त्यक्तधर्म्मान्नृपात् कोऽपि न बिभेति कदाचन ।
त्यक्तधर्म्मे हि[२] भूपे तु प्रजा धर्म्मं परित्यजेत् ॥२३॥
त्यक्तधर्म्मे जने भूते धनं यस्य न तस्य तत् ।
यस्य स्त्री तस्य न स्त्री च गृहं यस्य न तद्गृहम् ॥२४॥
अधर्म्मराजको देशोऽराजकस्तोभयः समः ।
विष्णुर्न पूज्यते यत्र स हि देशो ह्यराजकः[३] ।

---

१ A C D कुलोचिते । २ A C D त्यक्तधर्म्मिणि ।
३ A ह्यवातकः ।

अराजके[1] परस्त्रीभी रमते तु बलात् परः ॥२५॥
ब्राह्मणः क्षत्रियां गच्छेत् क्षत्रियो ब्राह्मणीमपि।
एवमादिविरुद्धेन धर्म्मेण सङ्करो[2] भवेत् ॥२६॥
सङ्करो[2] नरकायैव कुलघ्नानां कुलस्य च।
एवं धर्म्मस्य वैषम्यं[3] दुष्टराज्ये भवत्युत ॥२७॥
वेण उवाच।
श्रुतं वो नरकार्थो हि सङ्करो भवति ध्रुवम्।
तस्मादद्य[4] करिष्यामि सङ्करानेव सर्व्वथा ॥२८॥
कीदृशो दृश्यते धर्म्मो भवत्येव हि सङ्करात्।
इत्युक्त्वान्तःपुरं राजा प्रविवेश त्वरान्वितः ॥२९॥
विप्रा विमनसो भूत्वा जग्मुस्ते हि यथागतम्।
बलात्कारेण ब्राह्मण्यां सङ्गमय्य तु क्षत्रियम् ॥३०॥
पुत्रमुत्पादयामास वेणो नास्तिक उत्तमः।
द्विजं क्षत्रियपत्न्याञ्च वैश्यपत्न्याञ्च क्षत्रियम् ॥३१॥
द्विजं वैश्यस्त्रियाञ्चापि[5] ब्राह्मण्यां वैश्यमप्युत।
एवमन्यं तथान्यस्यां सङ्गमय्य स भूपतिः[6] ॥३२॥
पुत्रान् वै जनयामास वर्णसङ्करकारकः।
सङ्कीर्णायाञ्च सङ्कीर्णं सङ्गमय्य ततो नृपः ॥३३॥
चकार सङ्करानन्यान् दौरात्म्येन स भूपतिः।

---

१ A सराजके। २ C शङ्करो। ३ B एवं हि धर्म्मवैषम्यं। ४ C तस्मादहं। ५ D ०स्त्रियस्यापि। ६ B तु क्षत्रियम्।

शूद्रायां वैश्यतो जज्ञे करणो नाम सङ्करः ॥२४॥
वैश्यायां ब्राह्मणाज्जातोऽम्बष्ठो गान्धिको वणिक् ।
कंसकार[1] शङ्खकारौ ब्राह्मणात् संबभूवतुः ॥२५॥
उग्रस्य राजपुत्रस्य [2]तस्यां चत्राद्बभूवतुः ।
कुम्भकारतन्तवायौ चत्रपत्न्यां बभूवतुः ॥२६॥
कर्म्मकारस्य दासस्य शूद्रात्तस्यां बभूवतुः ।
वैश्याद्बभूवतु राज्ञ्यां मागधो गोप एव च ॥२७॥
चत्रियात् शूद्रकन्यायां[3] जातौ नापितमोदकौ ।
ब्राह्मणात् शूद्रकन्यायां वारजीवी बभूव ह ॥२८॥
ब्राह्मण्यां चत्रियात् सूतो मालाकारस्तथा मुने ।
वैश्यात्तु द्विजकन्यायां जातौ ताम्बूलितौलिकौ ॥२९॥
विंशतिः सङ्करा एते जावाले कथिता स्तव ।
उत्तमाः सङ्करा एते मध्यमानथ मे शृणु ॥४०॥
वैश्यायां करणाज्जातौ तचा रजक एव च ।
स्वर्णकारः स्वर्णवणिक् तस्यामम्बष्ठसम्भवौ ॥४१॥
वैश्यायां गोपतो[4] जातावाभीरतैलकारकौ ।
गोपात् शूद्रागर्भजातौ तथा धीवरशौण्डिकौ[5] ॥४२॥
मालाकारात्तु सम्भूतौ नटः शावाक[6] एव च ।

---

१ B कंश० ।   २ C चत्रादेव बभूवतुः ।   ३ B D शङ्खकन्यायां ।
४ B D गोपतेः ।   ५ C धीवरः सौण्डिकस्तथा ।
६ C शारकः, D शावार ।

मागधादपि शूद्रायां जातौ शेखरजालिकौ ॥४३॥
एते वै मध्यमाः प्रोक्ता अन्त्यजानपि मे शृणु ।
वैद्यपत्न्यां स्वर्णकारान्मलेग्रहिरजायत ॥४४॥
कुड़वः स्वर्णवणिजो वैद्यपत्न्यां बभूव ह ।
शूद्राच्च ब्राह्मणीगर्भाच्चाण्डालस्य च सम्भवः ॥४५॥
आभीराद्गोपकन्यायां तक्षुड़ः समजायत ।
तचोऽभूद्वैश्यकन्यायां चर्म्मकारश्च शिल्पवित् ॥४६॥
घण्टजीवी[1] तु रजकाद्वैश्यायां संबभूव ह ।
वैश्यायाञ्च तैलकाराद्दोलावाही बभूव ह ॥४७॥
धीवरादपि शूद्रायां मल्लजातिर्बभूव ह ।
इत्यादयोऽन्त्यजाः प्रोक्ता वर्णाश्रमबहिष्कृताः ॥४८॥
षट्त्रिंशज्जातकर्म्माणि[2] साधिकाः कथितास्तव ।
एतेषु विंशतीनान्तु पुरोधाः श्रोत्रियो द्विजः ॥४९॥
चतुर्भ्य एव वर्णेभ्यो ये जातास्ते किलोत्तमाः ।
तत्र येऽन्त्यासङ्क्रमेन सङ्करान्तरकारकाः ॥५०॥
ते प्रोक्ता मध्यमा विप्र अधमाः सङ्करान्तराः ।
सङ्करान्तरसम्भूताः सचाण्डालमलादयः ॥५१॥
[3]शाकद्वीपात् सुपर्णेन चानीतो यः स देवलः ।
शाकद्वीपी द्विजः सोऽभूद्विश्रुतो धरणीतले ।
देवलाद्गणको जातो वैश्यायां वादकोऽपि च ॥५२॥

---

१ B C D घट्टजीवी । २ B C D ०जातयस्त्वेते ।

३ A B omits this line.

वेणस्य स्वाङ्गात् सम्भूतो म्लेच्छो नाम सुतो वरः ।
पुलिन्दः पुक्कशश्चैव[1] खशो वै यवनस्तथा[2] ॥५२॥
सुह्मकम्बोजशबराः खरश्चेत्यादयः सुताः ।
म्लेच्छस्य संबभूवुश्च म्लेच्छभेदास्त एव हि ॥५४॥
एतान् दृष्ट्वा मुनिगणा धर्म्मव्यतिक्रियोद्भवान्[3] ।
तन्तु हन्तुं दुरात्मानं सर्व्वे ते ऋषयो ययुः ॥५५॥
ते गत्वा तत्र दृष्ट्वा च क्रोधाविष्टा मुनीश्वराः ।
आधावन्तं वाक्यवज्राद्धुङ्कारेणाहनश्च तम् ॥५६॥
तस्य हुङ्कारनष्टस्य मथिला पाणियुग्मकम् ।
पृथुमाद्यं क्षितीशानां सपत्नीकमभावयन् ॥५७॥
जगत् स्वास्थ्यं ततः प्राप जाते नारायणात्मनि[4] ।
धर्म्माः पुनः प्रवृत्ताश्च देवगोब्राह्मणा अपि ॥५८॥
प्रातिकूल्यविहीने हि मरुतीव नदीगणाः ।
सर्व्वे विषिषिचुर्[5]भूपं तमेव पृथुनामकम् ॥५९॥
ततो जग्मुर्मुनिश्रेष्ठाः पृथुना विहितार्हणाः ॥६०॥

इति श्रीबृहद्धर्मपुराणे उत्तरखण्डे त्रयोदशोऽध्यायः ॥०॥

---

१ C पुल्कशश्चैव । २ B जवनः । ३ B ०क्रमोद्भवान् ।
४ C नारायणात्मके । ५ C सर्व्वे वै सिषिचुः ।

## अथ चतुर्दशोऽध्यायः ।

जाबालिरुवाच ।

ततः किमकरोद्राजा पृथुर्नारायणात्मकः ।
सङ्कराणाञ्च[1] जातीनां किं बभूव पृथौ नृपे ॥१॥

व्यास उवाच ।

अभिषिक्तः पृथू राज्ये धर्म्मेण पालयन् प्रजाः ।
मनःस्वास्थ्यं न च प्राप पप्रच्छाहूय भूसुरान् ॥२॥

पृथुरुवाच ।

कथं मे मनसोऽस्वास्थ्यं राज्ये पालयतः प्रजाः ।
[2][निरक्षा वा प्रजाः] कस्मान्निर्वृतिं[3] यान्ति भूसुराः ॥३॥

ब्राह्मणा ऊचुः ।

राजंस्तव पिता वेणः प्रच्छिन्नधर्म्मसञ्चयः ।
वर्णानां सङ्करांश्चक्रे बलादेव निवारितः[4] ॥४॥
अधर्म्मसम्भवास्ते वै सङ्कराः पृथिवीतले ।
वर्त्तन्त इति दुःखेन आत्मा ते कलुषीकृतः ॥५॥

---

१ B सङ्कराणाच । २ B omits the portion bracketted.
३ C D निर्वृत्तिं । ४ A B D बलादेवानिवारितः ।

पृथ्वी तद्वारणच्चामा प्रजाभ्यो नान्नदायिनी।
एतत्ते कथितं सर्व्वं यत् पृष्टा भवता वयम्[१] ॥६॥

पृथुरुवाच।

सङ्कराणां विधेयं किं केवलाधर्म्मजन्मनाम्।
हन्तव्या रक्षणीया वा केन भद्रं भवेदिह ॥७॥
किमर्थं विधिसृष्टास्ते हन्तव्याः स्युः कथं नु ते।
स्थितेषु तेषु सर्व्वेषु पृथ्वी नान्नप्रदा मम[२] ॥८॥
किं कर्त्तव्यं किं नु पथ्यं तेषां कल्मषसम्भवे।
केन शान्तिर्भवेन्नृणां ब्रूत मे विप्रसत्तमाः ॥९॥

व्यास उवाच।

इत्युक्तास्ते मुनिगणाः पृथोर्वचनमुत्तमम्।
परमानन्दसम्पन्नाः पृथुं वचनमब्रुवन् ॥१०॥

ब्राह्मणा ऊचुः।

राजंस्त्वं प्रभुरेकोऽद्य तवाज्ञावशगाः समे[३]।
अतःपरन्तु साङ्कर्य्यं निवर्त्तय न चान्यथा ॥११॥
यथान्यजातिः पुरुषो नान्यजाति[४]सुतागताः।
अन्यांश्च सङ्करान् कुर्य्यु[५]स्तन्निवर्त्तय सर्व्वथा ॥१२॥
ये तु जाता हि सङ्कीर्णास्तेषां वृत्तीश्च कल्पय।
तानाहूय कुरुत च निर्णयं धर्म्मसंग्रहम् ॥१३॥

---

१ A D यत् पृष्टोऽहं भवान् हि नः, C यद्भवान् पृष्टवान् हि नः।
२ B ०प्रदापि वः, D नानुप्रदामि वः। ३ B शुभाः।
४ D नान्यजातिः। ५ B D चक्रुः।

तवाज्ञामनुयास्यन्ति धर्म्मज्ञस्य महात्मनः ।
ये त्वत्कृतान्तु मर्य्यादां लङ्घयिष्यन्ति भूपते ॥ १४ ॥
ते तु[१] दण्ड्या भवन्त्येव वध्या अपि न संशयः ।
एष एव विधिर्योग्यो न तु तेषां वधो मतः ॥ १५ ॥
विधाचा सर्ज्जितास्ते तु वध्या नैवोचिता हि ते ।
एतन्नो रोचते [२]राजन् यथोचितमथो कुरु ॥ १६ ॥

व्यास उवाच ।

एतच्छ्रुत्वा[३] वचस्तेषां पृथुः पृथुपराक्रमः ।
सर्व्वांस्तु सङ्करगणानाहूयेदं तदाब्रवीत् ॥ १७ ॥

पृथुरुवाच ।

कथं वै विकृताकाराः कुचेला मलिनाननाः ।
शीर्णा सुदुर्व्वला यूयं कथं वेदं शृणोमि वः ॥ १८ ॥

सङ्करा ऊचुः ।

वयं सर्व्वे शुभाकाराः सुचेला विमलाननाः ।
शुभाङ्गाः सुबलाः सर्व्वे दृष्टिहीनः कथं भवान् ॥ १९ ॥
वयं वेणसमाः सर्व्वे वेणेन प्रतिपालिताः ।
वेणेन जनितास्चापि स चासीद्राजसत्तमः ॥ २० ॥
ब्रह्मविष्ण्वादयो देवा नास्मत्तो ह्यधिकाः क्वचित् ॥ २१ ॥

व्यास उवाच ।

श्रुत्वेवं वचनं सर्व्वे जहसुर्ब्राह्मणादयः ।

---

१ B तत्र । २ D राजन्नयोचितं । ३ A ततः श्रुत्वा ।

राजा तु क्रोधमाविष्टस्[1]तान् बबन्ध कृतागसः ॥२२॥
तदा ते पीड़िता बद्धा म्लानवक्त्राः कुचेलकाः ।
रक्ष रक्ष महाबाहो इति भाषाकुलाननाः ॥२३॥

सङ्करा ऊचुः ।

राजंस्तवाज्ञावशगाः वयं सर्व्वे यथायथम् ।
सर्व्वांश्चो विकृताकारान् शुंभाकारान् कुरुष्व च ॥२४॥
धर्म्मात्मन्[2] कल्पयास्माकं वर्णं वृत्तिञ्च नाम च ।
मूर्खाणां वेणबुद्धीनामपराधं क्षमस्व नः ॥२५॥

पृथुरुवाच ।

अहो विप्रा महाभागा यूयं धर्म्मनिरूपकाः ।
अमीषां वर्णवृत्त्यादि कल्पयध्वं यथोचितम् ॥२६॥

व्यास उवाच ।

इत्युक्ता ऋषयः सर्व्वे पृथो राज्ञो[3] महात्मनः ।
तेषां वृत्त्यादिकल्पार्थं तानूचु[4]र्विनयान्वितान् ॥२७॥

[5][ब्राह्मणा ऊचुः ।

षड्त्रिंशज्जातयः शूद्रा यूयं भूतास्तु सङ्कराः ॥२८॥
कः किं करिष्यते कर्म्म स तद्भूतां स्वशक्तितः ।
कर्म्मानुरूपनामानो यूयं सर्व्वे भविष्यथ ॥२९॥

---

१ B D राजा क्रुद्धा समाविष्टः, C राजा क्रुधा समाविष्टः ।

२ B धर्म्मांश्च ......... वर्णवृत्तिञ्च नामतः । ३ A राज्ञा ।

४ B तानाऊः । ५ B omits the portion bracketted.

व्यास उवाच।

इत्युक्तास्ते तदा सर्व्वे ब्राह्मणैः शास्त्रदर्शनैः।
वक्तुमारेभिरे विप्रास्तत्रादौ करणोऽब्रवीत्॥२०॥

करण उवाच।

वयं मूर्खा जातिहीनाः प्रज्ञाशून्या विशेषतः।
भवद्भिस्तु सर्व्वज्ञैः कुरुध्वं नो[1] यथोचितान्॥२१॥

व्यास उवाच।

एवं श्रुत्वा तु वचनं तेषां ते मुनिसत्तमाः।
प्रहृष्टवदना भूत्वा राजानमिदमब्रुवन्॥२२॥

ब्राह्मणा ऊचुः।

अयन्तु करणो नाम श्रीयुक्तो वर्त्तते सदा।
विनयाचारसम्पन्नो वचनं सुष्ठु चोक्तवान्॥२३॥
राजकार्य्यं करोत्येष नीतिज्ञो बुध्यते स्वयम्।
ब्राह्मणे भक्तिमांश्चैव देवेष्वपि भवत्यपि॥२४॥
एष एव हि सत्शूद्रो भवत्येव न संशयः॥२५॥
ब्राह्मणे भक्तिमत्त्वन्तु देवताराधने मतिः।
अमात्सर्य्यं[2] सुशीलत्वमेतत् सत्शूद्रलक्षणम्॥२६॥

व्यास उवाच।

इत्युक्तवत्सु विप्रेषु करणो नाम सङ्करः।
प्रणनाम च विप्राणां चरणान् भक्तिसंयतः॥२७॥

---

१ C तु। २ A B अमात्सर्य्यः।

ब्राह्मणाश्च तमूचुर्वै वत्स तिष्ठेह भूतले ।
राजकार्य्येषु कुशलो लिपिकर्म्मविशारदः ॥ ३ ८ ॥
कर्त्तव्या ब्राह्मणे भक्तिस्त्याज्यं मात्सर्य्यमेव च ।
सर्व्वदा स्वच्छचित्तत्वं कृत्वा त्वं कुशली भवेः ॥
भव त्वं वंशवान् भूयात् त्वद्वंशास्त्वत्समा इह ॥ ३ ९ ॥

व्यास उवाच ।

एवमुक्तः स वै विप्रैस्ताहृक्पोऽभवत्तदा ।
विप्रा राजानमाभाष्य इदं वचनमब्रुवन् ॥ ४ ० ॥

ब्राह्मणा ऊचुः ।

अयमन्यः सङ्करो हि[1] वेणस्य वशगः पुरा ।
वैश्यां समुपसङ्गम्य चक्रेऽन्यमपि सङ्करम् ॥ ४ १ ॥
तस्मादम्बष्ठनामास्तु सङ्करोऽयं धरापते ।
पादमेव[2] मस्तके निन्द्यत्वं गतमव्ययम् ॥ ४ २ ॥
अस्माभिरस्य संस्कारः कर्त्तव्यो विप्रजन्मनः ।
येनासौ संस्कृतो भूत्वा पुनर्जात इवास्तु च[3] ॥ ४ ३ ॥

व्यास उवाच ।

इत्युक्त्वा ते द्विजगणाः स्तुत्वा[4] नासत्यदस्रकौ ।
तयोरनुग्रहाद्विप्र दयावन्तो द्विजातयः ॥ ४ ४ ॥
आयुर्वेदं ददुस्तस्मै वैद्यनाम च पुस्तकम् ।

---

१ B प्रथमः सङ्करो यो हि । २ B D पापमेव ........ मतवानपि । ३ B सः । ४ D श्रुत्वा ।

तेनासौ पापशून्योऽभूदम्बष्ठख्यातिसंयुतः ॥४५॥
चारुरूपधरो भूत्वा विप्राणां शिरसाकरोत् ।
प्रणम्य भक्तितो विप्रान् सोऽम्बष्ठो विप्रसत्तम ।
कृताञ्जलिपुटस्तस्थौ ब्राह्मणास्तं[1] तदाब्रुवन् ॥४६॥

ब्राह्मणा ऊचुः ।

अस्माभिर्यानि शास्त्राणि कृतानि सङ्करोत्तम ।
तानि तुभ्यञ्च दत्तानि न प्रमाद्यः कदाचन ॥४७॥
चिकित्साकुशलो भूत्वा कुशली तिष्ठ भूतले ।
शूद्रधर्म्मान् समाश्रित्य वैदिकानि करिष्यसि ॥४८॥
आयुर्वेदस्तु यो दत्तस्तुभ्यमम्बष्ठ भूसुरैः ।
तेन प्रमत्तो नैवान्यत् पुराणादि वदिष्यसि ॥४९॥
आयुर्वेदात् परं नान्यद्युष्माकं वाच्यमर्हति ।
वैश्यवृत्त्या भेषजानि कृत्वा दास्यथ सर्व्वतः ॥५०॥
त्वज्जातिवृत्तिरेषैवं[2] वंशे वंशे भविष्यति ॥५१॥
शूद्रन्तु पुरुषः साचाज्जातिभेदविवर्ज्जितम् ।
जायते योनिसम्बन्धात् सङ्करा मातृजातयः[3] ॥५२॥

व्यास उवाच ।

इत्युक्तैस्तदाम्बष्ठस्तथेति कृतिमानभूत् ।
अश्विनौ च गतौ राज्ञा पूजितौ स्थानमुत्तमम् ॥५३॥

---

१ A C D ब्राह्मणार्थं । २ A तज्जातेर्वृत्तिवोधैव B एषैवं, C त्वज्जातिवृत्तिरेषैव, । ३ D ०जायजः।

राजानं पृथुनामानं ब्राह्मणास्ते तमब्रुवन् ॥५४॥

ब्राह्मणा ऊचुः।

अयंमुग्राभिधोऽप्यस्तु बलवान् साहसान्वितः।

युद्धे कुशलताऽप्यास्तु चत्रवृत्तेर्महामतेः।

अयञ्च मागधो नाम तथा भवितुमर्हति ॥५५॥

मागध उवाच।

नमोऽस्तु विप्रपादेभ्यो युद्धवृत्तिं न मां कुरु।

न च हिंसा साधुधर्म्मस्ततोऽन्यराजकर्म्मसु ॥५६॥

नियोजयत मां देवा भूपालस्य पुरोऽधुना[1]।

युद्धान्यत्त्रधर्म्मेण मम जातिस्तु जीवतु ॥५७॥

ब्राह्मणा ऊचुः।

ब्रह्मचत्रवर्णयोस्त्वं वन्दीभव महामते।

स्तुतिपाठी चायवक्ता सर्व्वसद्गुणवर्णकः ॥५८॥

लिपिपत्रस्य वोढ़ा च भविष्यसि तयोरपि।

चत्रवेदाधिकारी च भव त्वं सङ्करोत्तम ॥५९॥

एषा ते विहिता वृत्तिर्ब्राह्मणैर्धर्मदर्शिभिः।

पालयिष्यन्ति राजानो भवज्जातिं सुशीलिनीम् ॥६०॥

अनतिक्रम्य वचनमिदमस्माकमुत्तमम्।

सुखी त्वं भूतले तिष्ठ त्वद्वंशोऽस्त्वेवमेव हि ॥६१॥

व्यास उवाच।

एवमुक्ता मागधो हि तथेत्युक्ता सुखं स्थितः।

---

१ B पुरोधना।

कल्पयामास चान्येषां वृत्तीः स विप्रसत्तयः ॥ ६२॥
तन्तुवाये वस्त्रसृष्टिं वणिजां गन्धविक्रयम् ।
नापिते चौरकर्मादाङ्गोपे लिखनमेव च ॥ ६३॥
लौहकर्म कर्मकारे आजीव्यं समकल्पयत् ।
तैलिके[1] व्यकरोदाज्ञां गुवाकविक्रये खलु ॥ ६४॥
कुम्भकारे मृदां शिल्पं ताम्रकांस्यादिकर्मणि ।
अयोजयत् कंसकारं शङ्खभूषाश्च शाङ्खिके ॥ ६५॥
दासे तु कृषिकर्माणि सुते तदुपयोगिताम् ।
मोदके गुड़कर्माणि मालाकारे ततः परम् ॥ ६६॥
सर्व्वेषां देवपूजार्थं पुष्पाहरणकर्मणि ।
स्वर्णकारे स्वर्णरूप्यभूषणादिनिरूपणम् ॥ ६७॥
तेषां तत्त्वपरीक्षार्थे कल्पितः कानको वणिक् ।
इत्यादिजातिभेदेन वृत्तिभेदानकल्पयत् ॥ ६८॥
तेनैवैते बभूवुर्हि चारुरूपाः सुबुद्धयः ।
ब्राह्मणानां शुभाज्ञाभिर्यथा वृत्तिमुपस्थिताः ॥ ६९॥
पृथोराज्ञामुपाश्रित्य धर्माध्वनि सुनिष्ठिताः ।
पुनः सङ्करधर्मेषु निवृत्ता अभवन् किल ॥ ७०॥
गणकाय ददुस्तेषु ज्योतिःशास्त्राणि सर्व्वशः ।
अग्रविप्रमकुर्व्वंस्ते सर्व्वे ब्राह्मणपुङ्गवाः ॥ ७१॥
एवं कृते सङ्कराणां वृत्त्यादि[2]परिकल्पने ।
कृताञ्जलिपुटा भूत्वा सङ्करा वाक्यमब्रुवन् ॥ ७२॥

---

१ C तौलिके । २ B भूत्यादि० ।

सङ्करा ऊचुः ।

अस्माकं वैदिकं स्मार्त्तं तथागमिकमेव च ।
कारयिष्यति को विप्रः कथं नो निर्वृतिर्भवेत् ॥७३॥

ब्राह्मणा ऊचुः ।

विंशतीनान्तु जातीनां पुरोधाः श्रोत्रिया वयम् ॥७४॥
अन्येषां षोड़शानान्तु पुरोधाः पतितो द्विजः ।
तज्जातितुल्यतां यायाद्ब्रह्मबन्धुर्भवेदपि ॥७५॥

व्यास उवाच ।

इत्येवं स्थापयामासुरलङ्घ्यशासना द्विजाः ।
समाचरन् सङ्करास्तु ब्राह्मणैरुदितं यथा ॥७६॥
राजा स्वस्थमना भूत्वा ब्राह्मणान् समपूजयत् ।
पूजितास्तु गता विप्रा यथास्थानं मुदान्विताः ॥७७॥
राजा च पृथुनामा स शीनशस्यां धरां तदा ।
दुदोह येन शस्यादि वत्सदोहकभेदतः ॥७८॥
सर्व्वे प्रलेभिरे सर्व्वं औहिकन्दोविषादिकम् ।
एतत्ते कथितं विप्र यत्पृष्टोऽहमिह त्वया ॥७९॥
सङ्कराणामुपाख्यानं पृथुकीर्त्तिः सुपुष्कला ।
एतच्छ्रवणपाठस्य फलं पुण्यकरं मतम् ॥८०॥

इति श्रीबृहद्धर्म्मपुराणे उत्तरखण्डे जातिसाङ्कर्य्यं नाम चतुर्दशोऽध्यायः ॥

॥०॥ समाप्तश्चेदं पुराणम् ॥०॥

| | | |
|---|---|---|
| Prithiráj Rásau, (Text) Part I, Fasc. I, Part II, Fasc. I—V @ /6/ each | 2 | 4 |
| Ditto (English) Part II, Fasc. I ... ... Rs. | 0 | 12 |
| Prákrita Lakshaṇam, (Text) Fasc. I ... ... .. | 1 | 8 |
| Parásara Smṛiti, (Text) Vol. I, Fasc. 1—8; Vol. II, Fasc. 1—6, Vol. III, Fasc. 1—4 @ /6/ each ... ... ... . | 6 | 12 |
| Paráśara, Institutes of (English) ... ... ... ... | 0 | 12 |
| S'rauta Sútra of A'pastamba, (Text) Fasc. I—XII @ /6/ each ... | 4 | 8 |
| * Ditto Látyáyana (Text) Fasc. II—IX @ /6/ each | 3 | 0 |
| Ditto S'ánkháyana, (Text) Vol. I, Fasc. 1-7; Vol. II, Fasc. 1—4 @ /6/ each .. .. ... .. | 4 | 2 |
| *Sáma Veda Saṃhitá, (Text) Vols. I, Fasc. 5—10; II, 1—6; III, 1—7; IV, 1—6; V, 1—8, @ /6/ each Fasc. .. ... .. | 12 | 6 |
| Sankhya Sutra Vritti, (Text) Fasc. I—IV @ /6/ each ... .. | 1 | 8 |
| Ditto (English) Fasc. I—III ... .. .. | 2 | 4 |
| *Sankara Vijaya, (Text) Fasc. II and III @ /6/ each ... . | 0 | 12 |
| *Sánkhya Pravachana Bháshya, Fasc. III (English preface only) .. | 0 | 6 |
| S'ri Bháshyam, (Text) Fasc. I—III @ /6/ each . ... . | 1 | 2 |
| Suśruta Saṃhitá, (Eng.) Fasc. I & II @ /12/ each . .. | 1 | 8 |
| Taittiríya Áranya, (Text) Fasc. I—XI @ /6/ each . .. | 3 | 12 |
| * Ditto Saṃhita, (Text) Fasc. IX—XXXVI @ /6/ each ... . | 10 | 8 |
| Tándya Brahmaṇa, (Text) Fasc. I—XIX @ /6/ each . ... | 7 | 2 |
| Tattva Chintámaṇi, (Text) Vol. I, Fasc. 1—9, Vol. II, Fasc. 1—10, Vol. III, Fasc 1—2, @ /6/ each ... .. . ... | 7 | 14 |
| Tul'si Sat'saí, (Text) Fasc. I—IV @ /6/ each ... .. ... | 1 | 8 |
| Uvasagadasáo, (Sanskrit and English) Fasc. I—VI @ /12/ .. | 4 | 8 |
| Varáha Purána, (Text) Fasc. I—XIV @ /6/ each .. . | 5 | 4 |
| *Váyu Puráṇa, (Text) Vol I, Fasc. 2—6; Vol. II, Fasc. 1—7, @ /6/ each Fasc. . .. . ... . ... | 4 | 8 |
| Vishṇu Smṛiti, (Text) Fasc. I—II @ /6/ each .. ... .. | 0 | 12 |
| Vivadaratnákara, (Text) Fasc. I—VII @ /6/ each ... ... | 2 | 10 |
| Vrihannáradiya Purána, (Text) Fasc. I—VI @ /6/ ... ... | 2 | 4 |

*Tibetan Series.*

| | | |
|---|---|---|
| Pag-Sam Thi S'iñ, Fasc. 1—3 @ 1/ each .. . ... | 3 | 0 |
| Sher-Phyin, Vol. I, Fasc. 1—5; Vol. II, Fasc. 1—3 @ 1/ each . | 8 | 0 |
| Rtogs brjod dpag hkhri S'iñ (Tib. & Sans.) Vol. I, Fasc. I—III; Vol. II. Fasc. I—II @ 1/ each .. ... ... .. ... | 5 | 0 |

*Arabic and Persian Series.*

| | | |
|---|---|---|
| 'Álamgírnámah, with Index, (Text) Fasc. I—XIII @ /6/ each ... | 4 | 14 |
| Áin-i-Akbari, (Text) Fasc. I—XXII @ 1/ each .. .. | 22 | 0 |
| Ditto (English) Vol. I, Fasc. 1—7, Vol. II, Fasc. 1—5, Vol. III Fasc. 1—2, @ 1/12/ each .. . .. ... | 24 | 8 |
| Akbarnámah, with Index, (Text) Fasc. I—XXXVII @ 1/ each ... | 37 | 0 |
| Arabic Bibliography, by Dr. A. Sprenger ... ... | 0 | 6 |
| Bádshánámah with Index, (Text) Fasc. I—XIX @ /6/ each ... | 7 | 2 |
| Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc. I & II .. .. | 2 | 0 |
| Dictionary of Arabic Technical Terms, and Appendix, Fasc. I—XXI @ 1/ each ... .. .. .. ... .. | 21 | 0 |
| Farhang-i-Rashídí (Text), Fasc. I—XIV @ 1/ each ... ... | 14 | 0 |
| Fihrish-i-Túsí or, Túsy's list of Shy'ah Books, (Text) Fasc. I—IV @ /12/ each ... .. .. .. ... ... | 3 | 0 |
| Futúḥ-ul-Shám Waqidí, (Text) Fasc. I—IX @ /6/ each ... ... | 3 | 6 |
| Ditto Azádí, (Text) Fasc. I—IV @ /6/ each ... ... | 1 | 8 |
| Haft Asmán, History of the Persian Mansawi, (Text) Fasc. I ... | 0 | 12 |
| History of the Caliphs, (English) Fasc. I—VI @ /12/ each ... | 4 | 8 |
| Iqbálnámah-i-Jahángirí, (Text) Fasc. I—III @ /6/ each ... ... | 1 | 2 |
| Isabáh, with Supplement, (Text) 51 Fasc. @ /12/ each ... ... | 38 | 4 |
| Maásir-ul-Umara, Vol. I, Fasc. 1—9, Vol. II, Fasc. 1—9; Vol III, 1-10 @ /6/ each ... ... ... ... ... | 10 | 8 |
| Magházi of Wáqidí, (Text) Fasc. I—V @ /6/ each ... | 1 | 14 |
| Muntakhab-ul-Tawáríkh, (Text) Fasc. I—XV @ /6 each ... ... | 5 | 10 |

* The other Fasciculi of these works are out of stock, and complete copies cannot be supplied.

Muntakhab-ul-Tawárikh, (English) Vol. II, Fasc. 1—5 @ /12/ each Rs. 3 12
Muntakhab-ul-Lubáb, (Text) Fasc. I—XIX @ /6/ each ... ... 7 2
Ma'ásir-i-'Alamgírí, (Text), Fasc I—VI @ /6/ each ... ... 2 4
Nokhbat-ul-Fikr, (Text) Fasc. I ... ... 0 6
Nizámí's Khiradnamah-i-Iskandari, (Text) Fasc. I and II @ /12/ each 1 8
Riyázu-s-Salatin, (Text) Fasc. I—IV @ /6/ each ... 1 8
*Suyúty's Itqán, on the Exegetic Sciences of the Koran, with Supplement, (Text) Fasc. VII—X @ 1/ each ... ... ... 4 0
Tabaqát-i-Násirí, (Text) Fasc. I—V @ /6/ each ... ... 1 14
Ditto (English) Fasc. I—XIV @ /12/ each ... 10 8
Táríkh-i-Fírúz Sháhi of Zia-al-din Barni, (Text) Fasc. I—VII @ /6/ each 2 10
Táríkh-i-Baihaqí (Text) Fasc. I—IX @ /6/ each ... 3 6
Táríkh-i-Fírozsháhi, of Shams-i-Siráj Aif, (Text) Fasc. I—VI @ /6/ each 2 4
Ten Ancient Arabic Poems, Fasc. I ... ... ... 1 0
Wís o Rámín, (Text) Fasc. I—V @ /6/ each ... ... ... 1 14
Zafarnámah, Vol I, Fasc. 1—9, Vol. II, Fasc. 1—8 @ /6/ each ... 6 6
Tuzuk-i-Jahángiri, (Eng.) Fasc. I ... ... ... ... 0 12

## ASIATIC SOCIETY'S PUBLICATIONS.

1. Asiatic Researches. Vol. VII, Vols XIII and XVII, and Vols. XIX and XX @ 10/ each ... Rs. 50 0
Ditto Index to Vols I—XVIII ... 5 0
2. Proceedings of the Asiatic Society from 1865 to 1869 (incl.) @ /6/ per No.; and from 1870 to date @ /8/ per No.
3. Journal of the Asiatic Society for 1843 (12), 1844 (12), 1845 (12), 1846 (5), 1847 (12), 1848 (12), 1850 (7), 1851 (7), 1857 (6), 1858 (5), 1861 (4), 1862 (5), 1864 (5), 1865 (8), 1866 (7), 1867 (6), 1868 (6), 1869 (8), 1870 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882, (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), @ 1/8 per No. to Subscribers and @ 2/ per No. to Non-Subscribers.

*N. B.—The figures enclosed in brackets give the number of Nos. in each Volume.*

4. Centenary Review of the Researches of the Society from 1784—1883 .. 3 0
General Cunningham's Archæological Survey Report for 1863—64 (Extra No., J. A. S. B., 1864) ... ... ... ... 2 0
Theobald's Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No., J. A. S. B., 1868) ... ... 2 0
Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., J. A. S. B., 1875) ... ... ... ... 4 0
Introduction to the Maithili Language of North Bihár, by G. A. Grierson, Part II, Chrestomathy and Vocabulary (Extra No., J. A. S. B., 1882) ... ... ... ... ... 4 0
5. Anis-ul-Musharrahin ... ... ... ... ... 3 0
6. Catalogue of Fossil Vertebrata ... ... ... ... 3 0
7. Catalogue of the Library of the Asiatic Society, Bengal ... ... 3 8
8. Istiláhát-us-Súfiyah, edited by Dr. A. Sprenger, 8vo. ... .. 1 0
9. Ináyah, a Commentary on the Hidayah, Vols. II and IV, @ 16/ each... 32 0
10. Jawámi-ul-'ilm ir-riyází, 168 pages with 17 plates, 4to. Part I ... 2 0
11. Khizánat-ul-'ilm ... ... ... ... ... 4 0
12. Mahábhárata, Vols III and IV, @ 20/ each ... ... ... 40 0
13. Modern Vernacular Literature of Hindustani by G. A. Grierson. (Extra No., J. A. S. B., 1888) ... ... ... ... 4 0
14. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I—III, with 8 coloured Plates, 4to. @ 6/ each ... ... 18 0
15. Sharaya-ool-Islám ... ... ... ... ... 4 0
16. Tibetan Dictionary by Csoma de Körös ... ... ... 10 0
17. Ditto Grammar ... ... ... ... 8 0
18. Vuttodaya, edited by Lt.-Col. G. E. Fryer ... ... ... 2 0

Notices of Sanskrit Manuscripts, Fasc. I—XXV @ 1/ each ... 25 0
Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra ... 5 0

N.B.—All Cheques, Money Orders, &c., must be made payable to the "Treasurer, Asiatic Society," only.